

॥ श्रीरस्तु ॥

परमाचार्यश्रीमद्यामुनमुनिप्रणीतं

# सिद्धित्रयम् ।



अण्णङ्गराचार्यशिरोमणिप्रणीतया
सिद्धाञ्जनाख्यव्याख्यया
समन्वितम् ।





॥ श्रीहरिर्जयति ॥

श्रीभगवद्यामुनमुनिप्रणीतं

# सिद्धित्रयम् ।

न्यायव्याकरणशिरोमणिनोभयवेदान्तविशारदेन
तिरुनाङ्कूर-प्रतिवादिभयङ्कर-श्रीमद्-
अण्णङ्गराचार्येण
वडतालस्वामिनारायणसंस्कृतपाठशाला-
प्रधानपण्डितेन विरचितया

## सिद्धाञ्जननाम्न्या व्याख्यया

समन्वितम् ।

व्याख्यात्रैव
संशोध्य निर्णयसागरे मुद्राप्य च प्रकाशितम् ।

वि. सं. २०१०] मूल्यं रु. ३-८-० [ई. सन्. १९५४



स नो देवः शुभया स्मृत्या संयुनक्तु—

# विज्ञापनम् ।

विदितमेव हि त्रय्यन्तवृद्धानां यत् सिद्धित्रयं नाम प्रत्नं प्रबन्धरत्नं प्रमातृप्रमेयप्रमितिस्वरूपसंशोधनपरं परमाचार्यश्रीमद्यामुनमुनिसमनुगृहीतं संसेवमानानां सकलार्थसिद्धिकरं विराजत इति। परं परं विषादपदं यत् कालदैर्घ्यादिना तदिदं रत्नत्रयं विलुप्तभूयोंऽशकं मात्रयैवाक्ष्णोः पदमञ्चतीति । अथाप्योजस्वित्वादिगुणगणै रारज्यमानमिदं रत्नत्रयं मात्रया वाऽस्माभिरधिगतं भाग्यविशेषेणेति भवामः कथञ्चित्समाहितमनसः ।

वैदिकवर्यैः परिगृहीतस्य वैदिकोत्तमस्य श्रीमद्विशिष्टाद्वैतसिद्धान्तस्याधारस्तम्भभूतेषु च परमाचार्यप्रबन्धेषु सिद्धित्रयस्यास्य सर्वस्मिन्नपि प्रान्ते राजकीयास्वन्यासु च वेदान्तप्रौढपरीक्षासु पाठ्यत्वेन समावेशनं कृतं स्थाने नितराम् । सर्वैरपि वेदान्तिभिर्दार्शनिकैश्चावश्यमध्येतव्यं चैतदित्यत्र न विमतिः संभवदुदयैतद्ग्रन्थगौरवपर्यालोचकानां सचेतसामन्तरङ्गेषु ।

शब्दार्थगरिम्णा दुरवगाहं तमिमं ग्रन्थमध्ययतामध्यापयतां च प्रसक्तं काठिन्यातिशयं विचार्य समुत्कटा काचिद्रुचिरुदभून्नाम मम मानसे सरलसरसविशदव्याख्याकरणे प्रवृत्तिशिरस्का। केवलं गुरु-

पादकृपाबलमेवावलम्ब्य प्रवृत्तस्य मम सेयं रुचिः पल्लविता कुसुमिता फलिता चाभूद्भगवद्भागवताचार्यप्रसादत इति तावन्निवेद्यते सप्रहर्षम्।

मूले तत्र तत्र लुप्तस्थले समुचितं पूरणं प्रदर्शितं यथामति। मूलपाठस्तु काशीकाञ्चीमुद्रितमूलश्रीकोशाधारेण सन्न्यवेशि। अशुद्धयश्च यथामति विशोधिता नाम। मूलपाठत्रूटयोऽपि समुचितसंभाव्यमानपाठान्तरप्रदर्शनेन समाहितास्तत्र तत्र। श्रीसूक्तिगाम्भीर्याद्बहुधा निर्वाहस्तत्र तत्र स्थले यद्यपि भवति संभावनापदम्। अथापि निर्वाहस्य निर्वाहान्तरादूषकत्वाददसीयोऽपि निर्वाहः समादरणीयो भवेदिति प्रत्येमि। सदसद्विवेके च सन्त एव विचक्षणाः प्रमाणम्।

कृतमपि व्याख्यानं मुद्राप्य प्रकाशनमन्तरा न सर्वोपकारकं भवेदिति सव्याख्यानस्य सिद्धित्रयस्य मुद्रणे विहितविचारश्चाहमकिञ्चनत्वादुदारहृदयानामर्थसाहाय्यं प्रतीक्षमाणः श्रीस्वामिनारायणसम्प्रदायस्थानामेतस्मिन् जने स्निग्धहृदयानां विद्वद्वर्याणां त्यागिसत्तमानां सद्गुरुश्रीहरिजीवनदासशास्त्रिप्रमुखानां महात्मनां सन्निधौ प्रास्तौषम्। प्रस्तावं चामुं समादृत्यैतैः सर्वैराचरितं पूर्णसाहाय्यमवलम्ब्यैवोपक्रान्तं मुद्रणं परिपूर्णं च श्रीहरिकृपया। एतैस्त्यागिवर्यैरन्यैश्च सहृदयैः सच्छास्त्रसेवाश्रद्धाभक्तिपरिकर्मितान्तरङ्गैर्यथाशक्त्यनर्घमर्थसाहाय्यं कृतं श्रीमद्विशिष्टाद्वैतसिद्धान्तप्रवर्तनप्रकारविशेषरूपेऽस्मिन् कैङ्कर्ये महतीति तेषु सर्वेषु कृतज्ञतां प्रकटीकरोमि सादरं सधन्यवादं च प्रसङ्गेऽस्मिन् प्रत्युपकर्तुमशक्तः कथञ्चिदपि प्रकारान्तरेण। मुद्रणालये एतन्मुद्रणार्था व्यवस्था सर्वा श्रीहरिजीवनदासशास्त्रिभिरेवास्मदनुरोधेन सम्पादिता, मुद्रणसमये च संशोधने महत्साहाय्यमारचित-

मेतैरस्माकमिति एतदीयोपकृतिश्च नैव विस्मरणार्हा । अस्मदनुजेन च न्यायव्याकरणशिरोमणिना वेदान्तविदुषा P. B. K. श्रीनिवासाचार्येणायुष्मता समूलैतद्व्याख्यानमातृका सज्जिता मुद्रणोपयोगितयेति संयोजयामि चैनं शुभाशिषा । अस्य व्याख्यानस्य पुनर्मुद्रणं चास्मदिच्छाधीनमेव भविष्यति ।

सिद्धित्रयव्याख्यानस्यास्य समादरणेनात्रत्यगुणग्रहणेन चास्मदीयं प्रयासं सफलयन्त्वार्यहृदयाः, क्षाम्यन्तु च दोषान् प्रसक्तान् कृपादृष्ट्येति विदुषः प्रार्थये नितराम् । प्रसन्ना भवन्तु नः पूर्वाचार्या अकिञ्चनैतज्जननिर्वर्तितया सेवयाऽनयेति च ।

स्वामिनारायणसंस्कृतपाठशाला
मु.पो. वडताल, जि. खेडा. W.Ry.
(वाया)आणंद. (गुजरात)सं. २०१०
चैत्री पूर्णिमा

इति विद्वद्वशंवदः, व्याख्याता
प्र. भ. अण्णङ्गराचार्यः (शिरोमणिः)
प्रधानाध्यापकः



॥ श्रीः ॥

श्रीमते रामानुजाय नमः ।

# सिद्धित्रयस्य सव्याख्यानस्य

# प्रस्तावना ।

---

श्रीभूतपुरीनिवासरसिकैर्देशिकेन्द्रैर्विद्वत्सार्वभौमैः

## श्री. उ. वे–आसूरि–रामानुजाचार्यस्वामिपादैः

समनुगृहीता ।

फलव्यपदेशो हि नाम उपायेषु फलमुखेनोपायोपचारः स्यात् । सोऽयमात्मसंविदीश्वरगोचरसिद्धित्रयलक्षणफलमुखेन तदुपायोपचारः स्यात् सिद्धित्रयवादः । न चान्यमुखेनान्योपचारा इत्येव फलमुखेन उपायोपचारा अश्रद्धेया भवन्ति । यतो विवक्षितातिशयविशेषव्यञ्जनव्यापारा गरीयांसो मुख्येभ्य उपचाराः । यत्र हि नातिशयविशेषव्यञ्जनविवक्षयोपचारः, न वा विवक्षितातिशयव्यञ्जनपटुरुपचारः, सोऽयमुपचाराश्रद्धेयतावकाश उपचारः । अतिशयविशेषव्यञ्जनाविवक्षाविवक्षितातिशयविशेषव्यञ्जनापाटवानुपहतो हि उपचारोऽश्रद्धेय इत्यपचारः । तीरादिविषयः पुण्यतमप्रवाहविशेषोपचारो हि शैत्यपावनत्वादिविवक्षितातिशयद्योतनव्यापारो गरीयान् तीरमुख्येभ्यो रसज्ञसमयाद्दतो भवति । एवमुपायोपचारोऽपि हि फलमुखः फलाभेदमुखेन उपायगतफलाविलम्बलक्षणातिशयज्ञापनव्यापारो गरीयानुपायमुख्यात् । तदेवमुपचाराणामश्रद्धेयत्वे नोपचारतामात्रमेव तन्त्रम्;

मुख्यानतिशायिप्रयोजनकत्वसहकृतं तु तदिति सुसमञ्जसः सिद्धि-व्यपदेशः ।

न खलु भेदापहारविलक्षणः कश्चिद्भेदापहारो नाम । न च व्याप्य-व्यापकनियन्तृनियाम्यधार्यधारकशेषशेष्यादिरूपताविलक्षणः कश्चि-द्भेदो नाम । न च विशेषणसमर्पणव्यापाराणां शब्दानां विशेषण-विशिष्टतानिबन्धनं विशेष्यपर्यन्तत्वं विशेषणविशेष्यसामानाधिकरण्य-निर्वहणक्षममिति उक्तव्याप्यव्यापकनियन्तृनियाम्यधार्यधारकशेष-शेष्यादिरूपतालक्षणभेदबाधनव्यापाराधिकबलतानियामकानन्यथा-सिद्धिः । अनन्यथासिद्ध्यनुमन्तव्यार्थप्रद्वेषशीला ह्यन्यथासिद्धिः । विषयबहुत्वाक्षेपकविषयिबहुत्वोल्लेखिसमाख्याबलसिद्धं चेदं व्याप्य-व्यापकादिरूपतालक्षणभेदवादाधिकबलतानियामकानन्यथासिद्धत्वं दूरदर्शिदृष्टिसाक्षिकम् । जगद्ब्रह्मसामानाधिकरण्यमूलप्रतिपत्तिविषया-भेदप्रतियोग्यनुयोगिभावान्यथात्वैकविषयविपर्ययपर्यन्तोक्तप्रतियोग्य-नुयोगिभावाविवेककृतो हि उक्तजगद्ब्रह्मसामानाधिकरण्यानन्यथा-सिद्धिविपर्ययः ।

समविषमभावौ हि अबाध्यबाधकबाध्यबाधकान्यतरत्वनियामकौ । प्रकृतेऽनन्यथासिद्धितदभाववैषम्यकृतो बाध्यबाधकान्यतरभावो हि दुस्त्यजः । उक्तान्यतरभावश्च बाध्यताप्रतियोग्यनुयोग्यन्यतरभाव-लक्षणः । प्रतियोगिता च प्रतियोगिविशेषणतापन्नबाधांशे निरूपकी-भूय विशेषणतापन्नत्वलक्षणा पारिभाषिकी । एतेन अन्योन्यबाध्य-बाधकान्यतरभावानापन्नप्रमाणद्वयसाधारणबाध्यबाधकान्यतरभावका-रिणो वैषम्यस्यान्योन्यबाध्यबाधकान्यतरभावनियामकतावादासौष्ठव-

मित्यपास्तम्; उक्तबाध्यबाधकान्यतरभावात्मकसामान्यस्योक्तान्योन्यबाध्यबाधकान्यतरभावात्मकविशेषपर्यवसायिन उक्तवैषम्यनियम्यतावादाभिप्रेतत्वोक्तेः। विशेषव्यवस्थापनपरसामान्यवादानामभिमतविशेषविश्रान्तानामभिमतविशेषेतरविशेषमुखेनाभिमतविशेषव्यवस्थापकत्वासिद्ध्याऽभिमतविशेषव्यवस्थापकतावादासौष्ठवं हि दुर्घटम्।

इयमत्रान्यथासिद्धिः—बाधितविशिष्टैक्यानामसंभावितबाधस्वरूपैक्यानां हि सामानाधिकरण्यानां स्वरूपैक्यविश्रान्तता। स्वरूपैक्यबाधविशिष्टैक्याबाधयोः पुनः सामानाधिकरण्यानां विशिष्टैक्यपक्षपातो दुस्त्यजः, बाधितस्वरूपैक्यविद्वेषात्। शरीरश्रुतिसिद्धा हि स्वरूपैक्यसमानवैभवता विशिष्टैक्ये। हेयप्रत्यनीककल्याणैकतानताश्रुतिसिद्धश्च स्वरूपैक्यबाधो जगद्ब्रह्मसामानाधिकरण्यस्वरूपैक्यविद्वेषमूलम्। तदेवं स्वरूपैक्यबाधसचिवसमानवैभवविशिष्टैक्याबाधः सामानाधिकरण्यस्य विशिष्टैक्यविषयानन्यथासिद्धिः। अयमेव च समानवैभवविशिष्टैक्याबाधः सामानाधिकरण्ये स्वरूपैक्यविषयान्यथासिद्धिः। स्वसमानवैभवस्वेतरवाक्यार्थमात्रेण न स्वात्मविषयान्यथासिद्धिः। बाधितो हि स्वसमानवैभवोऽपि स्वेतरवाक्यार्थोऽकिञ्चित्करः। स्वात्मविषयान्यथासिद्धत्वापादनक्षमो हि स्वसमानवैभवस्वेतरवाक्यार्थाबाधः। समानवैभववाक्यार्थद्वयाबाधे पुनः वाक्यार्थविशेषतात्पर्यकताऽविनिगम्यतामूलो वाक्यार्थविशेषतात्पर्यावधारणायोग इति वाक्यार्थद्वयान्तरबाधोऽपि वाक्यार्थविशेषतात्पर्यावधारणसामग्रीकुक्षौ निवेशित इत्यलमनेन स्तनन्धयवादगोष्ठीसमारोहतन्त्रिरसनलाघवाश्रयणसहनेन।

परममङ्गलमूलपरावरात्मतत्त्वयथात्म्यज्ञानपरिपन्थ्येवंजातीयक-दुर्वादनिरसनमुखेन परममङ्गलप्रसूनामवश्यापेक्षितविवरणानां प्रबन्ध-रत्नानां स्वाधिगतन्यायव्याकरणादितत्त्वार्थगोचरवैदुष्यफलभूतविव-रणसेवाऽन्वयमुखेन स्वात्मानं कृतार्थयितुकामोऽयं प्रतिवादिभय-ङ्कराण्णङ्गराचार्यवर्यः न केवलं स्वात्मानमेव कृतार्थयति, प्रकृतमहा-प्रबन्धतात्पर्यविषयार्थतत्त्वयाथात्म्याभ्यर्थिजनसार्थमपीति महान्तं प्रसादमवगाहतेऽस्मद्धृदयमित्यावेदयामः । इति–

श्रीभूतपुरी
३१.१२.५३

आसूरि रामानुजाचार्याः



॥ श्रीः ॥

श्रीभूतपुरीविराजमानसंस्कृतमहाविद्यालयाध्यक्षचरणैः श्रीमद्भगवद्भाष्यकारदिव्यवंशमुक्ताफलैः विद्वत्सार्वभौमैर्देशिकेन्द्रैः

आसूरि-रामानुजाचार्यस्वामिपादैः अनुगृहीतं

## शुभाशीरभिशंसनम्।

(व्याख्यातृयोग्यताप्रशंसात्मकम्)

### श्रीमते रामानुजाय नमः

सौभ्रात्रमिदमनुसन्दधानाः परमनुमोदामहे । विचित्रमिदं हि सौभ्रात्रम् । स्वतो विचित्राणि कालकृतवैचित्र्याणीति द्वयी खलु गतिर्विचित्रेषु । यानि किल सर्वदैव विरलप्रचाराणि तान्यचरमोद्दिष्टानि, अन्यानि चान्यदाऽविरलप्रचाराणामेव कालविशेषेषु येषां प्रचारवैरल्यम् । तान्यपि चरमाणि कालविशेषावतीर्णेषु विस्मयजनकानीति युक्तैव विचित्रेषु चरमगणना । सातिशयेष्वेव वैचित्र्यमूलमियमपूर्वतेति न निरतिशायनेषु लोष्टप्रायेषु कालविशेषदुर्लभेषु अतिप्रसञ्जनावकाशः । तदेवं विचित्रगतौ अन्यदाऽपि विरलप्रचारमद्यत्वे चात्यन्ताय विलीनप्रायमिदं सौभ्रात्रमिति सातिशयमत्र वैचित्र्यम् । अन्यदाऽपि सुदुर्लभः खलु एषामेकत्र समुदयः–काणादपाणिनीययोरुभयत्र गाढावगाहः, निगूढानामप्यर्थिभ्यो विष्फारणकौशलम्, शमादेः समुदायो, नवयौवनता चेति । तदेवमतिदुर्घटानामप्येतेषां सौभ्रात्रं वादिभीकराभिजने आयुष्मति अण्णङ्करार्ये साम्प्रतमध्यक्षयन्तः कथमविस्मेरचित्ताः स्याम । स चायम् **अण्णङ्गराचार्यः** श्रीविशिष्टाद्वैतभाष्यतट्टीकादिष्वपि कृतपरिश्रमोऽत्रैवोपात्ताखिलविद्य इहैवाधिष्ठिताध्यापनपदो बहुशोऽस्माभिरध्यक्षिताध्यापनकलाकौशलोऽनतिचिरसम्भावितानुत्तमवैदुषीवैभव इति सुदृढं प्रतिजानीमः । इति–

श्री. उ. वे. व–संस्कृत कालेज
श्रीभूतपुरी. ११-८-३९

आसूरि. रामानुजाचार्याः
प्रिन्सिपाल

---

॥ श्रीः ॥

श्रीमते रामानुजाय नमः ।

# प्रास्ताविकम् ।

पातु प्रणतरक्षायां विलम्बमसहन्निव ।
सदा पञ्चायुधीं बिभ्रत् स नः श्रीरङ्गनायकः ॥
विगाहे यामुनं तीर्थं साधुवृन्दावने स्थितम् ।
निरस्तजिह्मगस्पर्शे यत्र कृष्णः कृतादरः ॥
रामानुजमुनिर्जीयात् यो हरेर्भक्तियन्त्रतः ।
कलिकोलाहलक्रीडासुधाग्रहमपाहरत् ॥
लक्ष्मीनाथसमारम्भां नाथयामुनमध्यमाम् ।
अस्मदाचार्यपर्यन्तां वन्दे गुरुपरम्पराम् ॥
दृष्टेऽपह्नुत्यभावादनुमितिविषये लाघवस्यानुरोधात्
शास्त्रेणैवावसेये विमतिविरहिते नास्तिकत्वप्रहाणात् ।
नाथोपज्ञं प्रवृत्तं बहुभिरुपचितं यामुनेयप्रबन्धैः
त्रातं सम्यक् यतीन्द्रैरिदमखिलतमःकर्शनं दर्शनं नः ॥

विदितचरमेव हि श्रीवैष्णवानां गोष्ठीषु यत् श्रीभगवद्यामुनमुनयः परमाचार्यव्यपदेशभाज इति । जगद्गुरोर्भगवतः श्रीमद्रामानुजमुनेराचार्यत्वेन परमाचार्यत्वमेतेषु सुप्रतिष्ठितमेव । श्रीमहापूर्णाचार्याश्च श्रीभाष्यकृतो मन्त्रोपदेष्टार आचार्यश्रीमद्यामुनमुनिकरणस्थानापन्ना इति हि सम्प्रदायविदः । यथैव श्रीमन्नाथमुनेर्योगप्रभावाद्विदितसकलार्थतत्त्वस्य कृपासङ्कल्पतः श्रीभगवद्यामुनमुनयः श्रीमद्विशिष्टाद्वैतसिद्धान्तप्रवर्तनाचार्यत्वधूर्धरा व्यराजन्त, तथैव श्रीमद्यामुनमुनिकृपाकटाक्षप्रभावतो भगवन्तः श्रीमद्भाष्यकारा अपि सिद्धान्तप्रतिष्ठापनधुरां जगदाचार्यत्वश्रीभाष्यकृत्त्वादिमहामहिमानं चान्वविन्दन्निति प्रथितमेव । भगवन्तः श्रीमद्भाष्यकृतश्च परमाचार्यकृपावीक्षणैकनिदानमात्मीयं वैभवं पुरुप्रकारमप्यनुसन्दधिरे । अत्र च साक्षिभूतं 'यत्पदे'त्यादिपद्यम् । अत्र च वस्तुत्वं सकलाभ्युदयोपलक्षणम् । एतद्विवरणं चात्मसिद्धिव्याख्योपक्रम एवास्माभिः कृतमनुसन्धेयम् । परमाचार्याणां च श्रीभगवद्रामानुजमुनिविषये कृपाप्रवाह उल्लङ्घितसीमाऽभूत् । ( अग्रिमविवरणेन चैतद्व्यक्तिर्भविनी ) ।

परपक्षप्रतिक्षेपसिद्धान्तप्रतिष्ठापनपरवादिविजयेषु भगवतः श्रीमद्रामानुजमुनेः परमाचार्यप्रबन्धा एव दिक्देशिका अभूवन्निति च नातिशयोक्तिः। परमाचार्यानुगृहीतप्रबन्धाश्चोद्दिष्टा नाम्ना श्रीगीतार्थसङ्ग्रहरक्षायां श्रीमन्निगमान्ताचार्यचरणैः—

मानत्वं भगवन्मतस्य महतः पुंसस्तथा निर्णयः
तिस्रः सिद्धय आत्मसंविदखिलाधीशानतत्त्वाश्रयाः।
गीतार्थस्य च सङ्ग्रहः स्तुतियुगं श्रीश्रीशयोरित्यमून्
यद्ग्रन्थाननुसन्दधे यतिपतिस्तं यामुनेयं नुमः॥ इति।

एषु प्राय आत्मसिद्ध्यादिप्रतिपादितयुक्तिविस्तारैरेव श्रीभाष्ये महासिद्धान्तादौ संविन्मात्रात्मत्वादिपरपक्षपरासः कृतो वरीवर्ति, अहमर्थात्मत्वादिसिद्धान्तार्थप्रतिष्ठापनं च। ईश्वरसिद्ध्यनुसारेण च शास्त्रयोनित्वाधिकरणपूर्वपक्षादिप्रपञ्चनम्। आगमप्रामाण्यानुसारेणैव च ब्रह्ममीमांसान्तर्गतोत्पत्त्यसम्भवाधिकरणस्य श्रीपाञ्चरात्रप्रामाण्यसिद्धान्तैदम्पर्यं व्यवस्थापितम्। तथा श्रीमद्गीतार्थसङ्ग्रहाधारेणैव प्रथितानुभावं भाष्यं च श्रीमद्भगवद्गीतायाः निर्वर्तितम्। वेदार्थसङ्ग्रहादौ श्रियःपतेः पुरुषोत्तमस्य पारम्यादिप्रतिष्ठापनं च महापुरुषनिर्णयोपजीव्यम्। श्रीश्रीशस्तुत्यनुविधायि च श्रीमद्गद्यमिति। प्रथितपाण्डित्येन यज्ञमूर्तिनाम्ना मायावादिना प्रवृत्ते महाभारतसमरवन्महति वादाहवे सप्तदशदिवसे रजन्यां स्वप्ने स्वाराध्यभगवता श्रीमता देवाधिराजेन श्रीकाञ्चीहस्तिगिरिशिखरोज्ज्वलपारिजातेन प्रतिबोधितः श्रीभाष्यकारो या मुनार्यकृतमायावादखण्डनरीतिप्रपञ्चनमुखेनैव हि अष्टादशेऽहनि परवादिनं जित्वा स्वान्तरङ्गान्तेवासिनमेनं व्यधादिति च प्रसिद्धम्। किं बहुना। यदीयस्तोत्ररत्नश्लोकरत्नसंश्रवणत एव च भगवतः श्रीभाष्यकृतस्तदीयपादपद्मनिषेवणैकप्रवणमनस्कता. समजायत, तस्यास्य भगवतो यामुनमुनेस्तदनुगृहीतप्रबन्धश्रीसूक्तीनां च वैभवमनुपममिति निश्प्रचम्। तस्यास्य परमाचार्यस्य भगवतः श्रीमद्यामुनमुनेर्दिव्यचरितवैभवं सङ्ग्रहतः सङ्गृह्णीमः प्रसङ्गेऽस्मिन्।

## श्रीमद्यामुनमुनिचरितवैभवसङ्ग्रहः—

प्रथितं हि दक्षिणभारते श्रीमति द्राविडदेशे चोलमण्डले वीरनारायणपुरं नाम प्रत्नं पवित्रं नगरं परमपावन्याः कावेर्या उत्तरे तीरे। (यस्य भाषानाम 'काट्टुमन्नार्गुडि' इति)। तस्मिंश्च श्रीमन्नाथमुनेरचिन्त्याद्भुतज्ञानवैराग्यराशेरगाधभगवद्भक्तिवैभवस्य

---

टिप्प०—१ भगवन्मतस्य=भगवच्छास्त्रस्य श्रीपाञ्चरात्रागमस्य, मानत्वं—प्रमाणत्वम्। अनेनागमप्रामाण्यग्रन्थो निर्दिष्टः। महतः पुंसो निर्णयः—महापुरुषनिर्णयप्रबन्धः।

योगाभ्यासपुटपरिपाकसाक्षात्कृतकमलनयनकमलारमणगुणविग्रहविभूतिविस्तारस्य स्वगुरुभूतश्रीमच्छठकोपमुनिप्रभृतिभक्तवर्यदिव्यसूरिप्रणीतचतुःसहस्रपद्यात्मकद्राविडाम्नायप्रवर्तकस्य कुलदीपतया तदीयपुत्रस्येश्वरमुनेः पुत्रत्वेन प्रकटोऽयं परमाचार्यः। (एतत्कालश्च प्रायेण शकाब्दानामष्टमनवमशतकोत्तरपूर्वार्धात्मकः)। स्वपरमाचार्यश्रीमन्नाथमुनिनिर्देशेन च श्रीमन्नाथमुनिशिष्यस्वाचार्यश्रीपुण्डरीकाक्षसूर्येनुवर्णितेन श्रीराममिश्राचार्या ईश्वरमुनिद्वारा नाम कारितवन्तः **'यामुनेयः'** इत्यस्य। यथाविधि यथाकालं चोपनयनान्तसंस्कारसंस्कृतः सोऽयं निसर्गसिद्धज्ञानः सकृदध्ययनव्याजेनैवाधीतसाङ्गवेदविद्यो यथाकालं गार्हस्थ्यं च प्रापितः श्रीमहाभाष्यभट्टार्यसन्निधौ सामान्यविशेषशास्त्रव्यासङ्गपरो व्यराजत।

तदात्वे च तद्राज्यराजास्थानपण्डितेन स्वस्मै विद्याकरदानाय विदुषस्तद्देशस्थान्निर्बध्नता प्रेषितं करदाननिर्देशपत्रं दृष्ट्वा मुह्यति महाभाष्यभट्टार्ये सोऽयं तत्पत्रं छित्वा परिचिक्षेप। दूतमुखेन विदितवृत्तश्च किं यामुनेयः कविरेव केवलम्, उताहो दार्शनिक इति ज्ञातुं प्रैषयद्दूतान् एतदन्तिकमास्थानविद्वान्। तदुत्तरं चैतदुक्तं प्रसिद्धम्,

यथा—न वयं कवयस्तु केवलं न वयं केवलतन्त्रपारगाः।
**अपि तु प्रतिवादिवारणप्रकटाटोपविपाटनक्षमाः॥** इति।

अथ तेन राजद्वाराऽऽस्थानं प्रति समाहूतोऽप्ययं यदा राजादेशमप्यनादृत्य न गतवान्, तदा विचार्य सोऽयं दिव्यशक्तिसम्पन्नो भवितुमर्हतीति स राजा मणिशिबिकादिपरिच्छदान् प्रेष्य सबहुमानमेनमास्थानं स्वीयमनुनयेनानयत्। तत्र च राजसभायां स्ववैदुष्यं प्राचीकशदयम्, यथा—

**आ शैलादद्रिकन्याचरणकिसलयन्यासधन्योपकण्ठात्**
**आ रक्षोनीतसीतामुखकमलसमुल्लासहेतोश्च सेतोः।**
**आ च प्राच्यप्रतीच्यक्षितिधरयुगलादर्कचन्द्रावतंसात्**
**मीमांसाशास्त्रयुग्मश्रमविमलमना मृग्यतां मादृशोऽन्यः॥** इति।

श्रुत्वा चैतद्वचनं कुपितेनास्थानपण्डितेन वादार्थमाहूतो यदाऽयम्, तदा एतदीयतेजःप्रकर्षं पश्यन्त्या राज्ञ्या नायं यामुनेयः पराभूतो भवेदिति प्रशंसन्त्या कृतसङ्केतो राजा विजयिने राज्यार्धदाननिश्चयवान् वादार्थमेनौ न्ययुङ्क्तराम्। लौकिके शास्त्रीये च विषये आस्थानपण्डितं विजित्य विजयश्रिया दीप्यमानं चैनं राज्ञ्योपलालितं यथाप्रतिश्रुतं राज्यार्धदानेन सम्भावयाम्बभूव स भूपतिः। स्वीकृत्य च राज्यार्धं

राजभवने सदारपरिवारं कृतवसतिं स्वपरमाचार्यश्रीमन्नाथमुनिपौत्रमेनं स्वेनैव प्रापितवैष्णवदीक्षं नामकरणसंस्कारकाल एव स्वशिष्यं दिदृक्षवोऽपि श्रीराममिश्राचार्याः संरक्षकवेष्टितत्वाद्राजान्तर्भवनस्याप्राप्तैतत्समागमा एतदीयमहानसाधिकृतपुरुषद्वाराऽवगतैतत्प्रियशाकाः शाकोपयोग्यलर्कपत्राण्यर्पयामासुः षण्मासान् यावदेतत्समागमकाम्यया। 'अनुवर्तनेनापि यामुनं सुशिक्षितसम्प्रदायार्थं दर्शनस्थापकं विधेही'ति स्वाचार्याज्ञा पालितैवमेतैः। (श्रीराममिश्रचरितेन च परित्यज्यापि स्वमानमाचार्याज्ञा पालनीयेति ज्ञाप्यते।) व्यतीतेऽपि षाण्मासिके काले यामुनार्यसमागमसूचकमपश्यन्त एते त्रिचतुराणि निवृत्ताः शाकार्पणतो दिनानि। तदात्वे च भोजनेऽलर्कपत्रशाकमपश्यन् यामुनेयः कुतो दिनचतुष्टयतोऽस्मदभिमतः शाको न क्रियत इत्यन्वयुक्त माहानसिकम्। एको विप्रवृद्धः प्रतिदिनमर्पयति स्म, परं त्रिचतुरदिनेभ्यो न ज्ञायते केनापि हेतुना नायातीति तेन प्रतिबोधितश्चायं विस्मितः पुनः स आगच्छति चेदस्मत्सन्निधिं प्रापयितव्य इति तमादिश्यान्तर्भवनं प्रविवेश। श्रीराममिश्राश्चाचार्याज्ञापरिपालनश्रद्धया अप्रच्युतधृतयः पुनरपि पत्रशाकमर्पयितुं गता माहानसिकेन च यथानिदेशं श्रीयामुनेयसन्निधिं प्रापिताः। एतांश्च समागतानभ्युत्थानाभिवादनासनप्रदानादिना सत्कृत्यान्वयुङ्क्त सविनयं केनार्थेन एतावत्कालमलर्कपत्राण्यर्पितानि, अपेक्षितोऽर्थोऽर्थनीय इति। श्रुत्वा चैतद्वचनं प्रत्यब्रुवन् श्रीराममिश्राः—न वयमर्थार्थिनः, भवत एव केचनार्था देयाः(उपदेश्याः) मम सकाशे वर्तन्ते, तन्नित्यमत्र ममागमनमनिरुद्धं विदधातु भवानिति। तथैवानुमते च यामुनेयेन प्रत्यहमागत्य श्रीमद्भगवद्गीतायास्तात्पर्यार्थान् रहस्यार्थांश्च सम्प्रदायप्राप्तानुपदिदिशुर्यामुनाय। प्रत्यहं गीतार्थश्रवणाभ्यासपरिपाकतः प्रवृद्धज्ञानभक्तिवैराग्यश्चायं गीताप्रतिपाद्यपुरुषोत्तमप्राप्त्यव्यवहितमुख्यसाधनं किमित्यपृच्छच्छ्रद्धाभक्तिभ्यां सम्पन्नः। तदात्वे च गीताचरमश्लोकप्रतिपाद्यशरणागतिप्रकारसर्वस्वमस्मा उपदिश्यान्ते चोक्तवन्तः श्रीराममिश्राः—भवत्पूर्वपुरुषैः सम्पाद्य रक्षितं निधिमहं जानामि, यदि मया सहागम्यते, तर्हि तं दर्शयामि भवत इति। तथैवेति चानुगामिनमेनं'न च ज्ञानस्य सङ्कोचः न चैव यमगोचरः। तस्माद्रङ्ग महापुण्यं को न सेवेत बुद्धिमान्॥' 'मरुद्वृधाया मध्यस्थं चन्द्रपुष्करिणीतटे। श्रीरङ्गमतुलं क्षेत्रं श्रिया जुष्टं शुभास्पदम्॥' इति प्रसिद्धानुभावं भूलोकवैकुण्ठं श्रीमद्रङ्गनगरमानाय्य शेषभोगे शयानं श्रीरङ्गनाथं भगवन्तं प्रदर्श्य अयमेव पूर्वैरार्जितोऽव्ययो निधिरिति च प्रतिबोधयामासुः। श्रीमद्यामुनेयोऽपि 'विमानं प्रणवाकारं वेदशृङ्गं महाद्भुतम्। श्रीरङ्गशायी भगवान्

प्रणवार्थप्रकाशकः ॥' इत्युक्तवैभवं शेषशायिनं सर्वशेषिणं भगवन्तं श्रियःपतिं पुरुषोत्तमं श्रीरङ्गनाथं 'किरीटकेयूरकरत्नकुण्डलं प्रलम्बमुक्तामणिहारभूषितम् । विशालवक्षःस्थलशोभिकौस्तुभं श्रिया च देव्याऽध्युषितोरुवक्षसम् ॥ प्रतप्तचामीकरचारुवाससं सुमेखलं नूपुरशोभिताङ्घ्रिकम् । सुवर्धुनीजातमृणालकोमलं दधानमच्छरुछवियज्ञसूत्रकम् ॥ भुजोपधानं प्रसृतान्यहस्तं निकुञ्चितोत्तानितपादयुग्मम् । सुदीर्घमुद्बाहुमुदग्रवेषं भुजङ्गतल्पं पुरुषं ददर्श ॥' इत्युक्तरीत्याऽनुभूय निरस्तसमस्तेतरभोगाशः 'क्षेत्राणि मित्राणि धनानि नाथ पुत्राश्च दाराः पशवो गृहाणि । त्वत्पादपद्मप्रवणात्मवृत्तेर्भवन्ति सर्वे प्रतिकूलरूपाः ॥' इत्युक्तरीत्या प्रतिकूलबन्धकवर्गं सन्यस्य, 'परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि । एषणात्रयनिर्मुक्तः स भैक्षं भोक्तुमर्हति ॥' इति स्मृत्युक्तं पारिव्राज्यमास्थाय श्रीरङ्ग एव न्यवात्सीत् स्वाचार्यैः श्रीराममिश्रैरुपदिष्टसर्वार्थः सच्छिष्येभ्यः द्राविडसंस्कृतवेदान्तार्थान् व्याचक्षाणः दर्शनाचार्यपदं निर्वहन् भगवद्गुणानुभवैकपरः सिद्धित्रयादिप्रबन्धमुखेन च सम्पोषयन् श्रीमद्विशिष्टान्तसिद्धान्तम् । श्रीराममिश्राचार्यविषयकं च स्तुतिपद्यमिदं गुरुपरम्परायामनुसन्धेयं प्रथितम्—अयत्नतो यामुनमात्मदासमलर्कपत्रार्पणनिष्क्रयेण । यः क्रीतवानास्थितयौवराज्यं नमामि तं राममेयसत्त्वम् ॥ इति । श्रीमद्यामुनेयमुनिवैभवविषयाणि चानुसन्धेयानि—श्रीराममिश्रसच्छिष्यं वन्दे तत्त्वार्थकोविदम् । वादादवाप्तराज्याद्यो विरक्तो यामुनोऽभवत् ॥ सिंहानंनांशभवमीश्वरयोगिसिन्धुमुक्तामणिं महितनाथमुनीन्द्रपौत्रम् । प्रज्ञाविशेषजलधिं प्रतिवादितूलझञ्झानिलं हृदय चिन्तय यामुनार्यम् ॥ यत्पदाम्भोरुहध्यानविध्वस्ताशेषकल्मषः । वस्तुतामुपयातोऽहं यामुनेयं नमामि तम् ॥ इत्यादीनि ।

एवं श्रीमद्रङ्गनगरे दर्शनं प्रवर्तयन् सच्छिष्यमण्डलाढ्यः सोऽयं परमाचार्यः श्रीमद्यामुनमुनिः स्वानन्तरमेतद्दर्शनप्रतिष्ठापकाचार्यः को वा भविता इति कदाचिच्चिन्ताकुलः श्रीकाञ्चीतः समागतानां मुखतः श्रीमन्महाभूतपुर्याम् आसूरि केशवयज्वनः पुत्रतया प्रकटः श्रीमान् रामानुजः (यः स्वतःसिद्धसार्वज्ञ्यः पुराणसंहिताप्रसिद्धानन्ता-

---

टिप्प०—१ सिंहाननाख्यभगवद्दिव्यपारिषदांशोऽयं परमाचार्य इत्यनेन ज्ञायते । गुरुपरम्पराप्रभावे ह्यग्रे शेषाशनांशत्वमुक्तमस्य । शक्तिद्वयसमावेशादिना निर्वाहः कार्यः ।

वताररूपः प्रकटितानन्तरूपश्च) काञ्च्यां साम्प्रतं यादवप्रकाशसविधे पूर्वपक्षमभ्यस्यति नाम, यादवप्रकाशेन मायावादपरतयोपनिषद्वाक्ययोजनाकालेषु च सोऽयं विशिष्टाद्वैतपरतया श्रुतिवाक्यानां समन्वयं वर्णयतीत्युपश्रुत्य तद्बुद्धिवैभवं प्रशंसन् तदानीमेवैनं दिदृक्षुः सह शिष्यवृन्देन श्रीकाञ्चीं प्रति प्रस्थितो मार्गक्रमेण **'वेगवत्युत्तरे तीरे क्षेत्रे सत्यव्रताह्वये। अस्ति काञ्चीति विख्याता पुरी पुण्यविवर्धनी॥' 'क इति ब्रह्मणो नाम तेन तत्रार्चितो हरिः। तस्मात्काञ्चीति विख्याता पुरी पुण्यविवर्धनी॥'** इति प्रसिद्धवैभवां तां नगरीं प्राप्य तत्रत्यैः श्रीवैष्णवैः स्वशिष्यभूतश्रीमत्काञ्चीपूर्णसूरिप्रमुखैः प्रत्युद्गमनाभिवादनादिना सत्कृतः पुरस्कृत्य च तान् सह शिष्यमण्डलेन **'अस्ति हस्तिगिरिर्नाम तत्र शैलवरो महान्। विधात्राऽभ्यर्चितो विष्णुस्तस्य शैलस्य मूर्धनि॥ पुण्यकोटीति विख्यातं विमानं पुण्यवर्धनम्॥'** इत्युक्तप्रकारेण हस्तिगिरिशिखरे पुण्यकोटिविमाने चतुर्मुखादिभिः सेव्यमानं श्रीमहादेव्या समेतं भगवन्तमर्थितार्थपरिदानदीक्षितं देवाधिराजं संसेव्य हस्तिगिरितटे वल्मीकाग्रभागे गोष्ठीं कृत्वा यावदास्त, तदैव यादवप्रकाशं समण्डलं भगवन्तं संसेव्यायान्तं दृष्ट्वैषु रामानुजः क इति पर्यपृच्छत् पार्श्वस्थान्। तैः प्रदर्शितं च श्रीमद्रामानुजमाजानुबाहुं पृथुदीर्घविशालामललोचनमनन्तभोगवदापाण्डरसुकुमारशुभ्रसुगन्धिकमनीयाभोगं दीर्घाकारं महावैभवव्यञ्जकलक्षणैर्लक्षितं लक्ष्मणमिव लक्ष्मीसम्पन्नं सादरं लोचनाभ्यां पिबन्निव निर्निमेषतया संपश्यन् कृपाकटाक्षामृतपूरैरभिषिच्यैनं दर्शनप्रतिष्ठापकजगदाचार्यपदे मङ्गलानि चाशासानः तदानीमेव यादवप्रकाशच्छात्रमण्डलगतत्वाद्वार्ताप्रसङ्गात्रकाशमलभमानः स्वाभिमतपरिपूरणाय वरदं शरणमुपगम्य पुनः स्थानिकानापृच्छ्य सपरिवारः श्रीरङ्गनगरमासाद्य यथापूर्वं दर्शनं प्रवर्तयन्नवर्तत। अथ कदाचिद्यादवप्रकाशेनोपवर्णितमसदर्थमाक्षिप्य समीचीनमुपनिषदर्थं प्रतिपादयति रामानुजे कुपितेन तेन स्वान्तिकतोऽध्ययनान्निषेधिते श्रीकाञ्चीपूर्णसूरिनिदेशेन भगवत्सेवाविशेषतत्परे सति, तमिममुदन्तमुपश्रुत्यैनमानेतुं स्वशिष्यमुख्यं श्रीमहापूर्णाचार्यं श्रीकाञ्चीं प्रति प्राहिणोद्यामुनमुनिः। स चोपेत्य तां पुरीं तत्रत्यैरभ्यर्चितः सेवाक्रमेण भगवन्तं संसेव्य श्रीरामानुजसन्निधिप्रसङ्गोचितदेशे स्वाचार्यप्रणीतं स्तोत्ररत्नमनुसन्दधानो यदैवैनं श्लोकमनुसन्दधे **स्वाभाविकानवधिकातिशयेशितृत्वं नारायण त्वयि न मृष्यति वैदिकः कः। ब्रह्मा शिवः शतमखः परमस्वराडित्येतेऽपि यस्य महिमार्णवविप्रुषस्ते॥** इति, तदैवैनं श्लोकं श्रुत्वा एतत्सन्निधिमुपसद्य श्रीरामानुजः एतस्य प्रणेता को वा आचार्यः? योऽयं

देवतान्तरपारम्यमोहघनान्धतमसावृते जगत्यस्मिन् देवतान्तरपारम्यप्रतिक्षेपपूर्वकं औपनिषदपरमपुरुषश्रीमन्नारायणपारम्यं वक्ष्यतीत्यपृच्छत्। अस्मदाचार्यः श्रीमद्यामुनमुनिरेतत्प्रणेतेति प्रत्युत्तरयति च श्रीमति महापूर्णे तमाचार्यप्रवरं संसेवितुमिच्छामि, दुर्लभो ह्यस्मिन् लोके एवंविधो ज्ञानी महात्मा–'**असन्त एवात्र हि संभवन्ति हसन्तिकायामिव हव्यवाहः। अत्रैव सन्तो यदि संभवन्ति तत्रैव लाभः सरसीरुहाणाम्॥**' इतिवदिति व्यजिज्ञपत्। यदि परमाचार्यसंसेवने रुचिरुत्कटा तर्हि मया सहागन्तव्यमित्युक्तवन्तं च पूर्णाचार्यमनुगच्छन् श्रीमद्रामानुजः सहैव तेन यावच्छ्रीमद्रङ्गनगराभ्याशं श्रीमत्सह्यजोत्तरतीरमाससाद, तावत्तैव दैवयोगाच्छ्रीमद्यामुनेयमुनौ परमपदमलङ्कृतवति तदीयविमलचरममङ्गलविग्रहं यतिमेधविधिना संस्कर्तुमानीतवन्महच्छ्रीवैष्णवजनवृन्दं कावेरीदक्षिणतीरे दृष्ट्वाऽवगतवृत्तान्तः परमं विषादमापन्नः समदुःखेन श्रीपूर्णाचार्येण कथञ्चिदाश्वस्तचित्तः सहैव तेन प्राप्य दक्षिणं तीरं दण्डवत्प्रणिपातपुरस्सरं परमाचार्यविमलचरमविग्रहमापादचूडं संसेवितवान्। तदात्वे चाकुञ्चितमङ्गुलित्रयं करतलीयं परमाचार्यस्य दृष्ट्वा चापृच्छत्तदन्तरङ्गान्तेवासिनः किमङ्गुलित्रयाकुञ्चनमिदं पूर्वत एवासीत्? उताद्यैव जातमिति। तैश्चाकस्मादिदानीमेव जातमिति निर्दिष्टे पुनः परिपप्रच्छ–किं कर्तव्यार्थसङ्कल्पनं स्वीयं व्याख्यानावसरेषु भवत्सु न्यवेदयन् किञ्चित्परमाचार्या एत इति। तैश्च तदोक्तम्–ब्रह्ममीमांसायाः श्रीमद्विशिष्टाद्वैतसिद्धान्तपरतया भाष्यं रचनीयं वृत्तिग्रन्थानुसारतः, श्रीमत्प्रपन्नजनकूटस्थशठकोपमुनिप्रकटितायाः सहस्रगीतेश्च व्याख्यानकरणादिना परिपोषणं विधेयम्, श्रीमन्नारायणपारम्यकर्मज्ञानाङ्गकभक्तियोगमोक्षोपायत्वव्यवस्थापकयोः व्यासपराशरयोर्विषये साङ्गसमग्रप्रपत्त्यनुष्ठानप्रकाशकदीर्घशरणागतिरूपसहस्रगीत्यादिमुखेन श्रीवैष्णवसम्प्रदायाद्यप्रवर्तकस्य श्रीमच्छठकोपमुनेश्च विषये उपकारस्मृतिः प्रकटीकरणीयेति एतत्त्रयनिर्वर्तने स्वीयेच्छाऽस्मासु प्रकटीकृताऽसकृद्व्याख्यानसमये इति। श्रुत्वा चैतच्छ्रीमद्रामानुजः प्रतिजज्ञे–यदि दासजनेऽस्मिन् परमाचार्याणामेषां परिपूर्णकृपा स्यात्, मम चेदं शरीरं सुदृढम्, परमपुरुषश्चानुकूलो भवेत्, तर्हि कामनात्रयमेतत्सम्पादयिष्यामीति। प्रतिज्ञाते चैवं श्रीमद्रामानुजेनाङ्गुलित्रयं यथापूर्वमार्जवमापद्यत। दृष्ट्वा चैनां देवीं घटनां सर्वे प्रशशंसुरेनं यामुनार्यपदाश्रिता आचार्याः–अस्त्येव भवति कृपा परिपूर्णा परमाचार्याणाम्, एतदीयदिव्यशक्तिश्च शतमुखी भवति सञ्जाता भविष्यति, भवानेव च परमाचार्यसङ्कल्पानुसारेण दर्शनप्रतिष्ठापकाचार्यो भूयादिति च। अथ च परमाचार्यस्य संस्कारादिर्यथाविधि निरवर्त्यत श्रीमहापूर्णप्रभृतिभिः।

कालक्रमेण च श्रीमहापूर्णाचार्यकृपाप्राप्तपारमैकान्त्यहेतुपञ्चसंस्कारकः विरज्य गृहेभ्यः परिगृहीततुरीयाश्रमः श्रीभगवद्रामानुजमुनिः श्रीमद्रङ्गनगरे दर्शनं प्रतिष्ठापयन् वहुमुखतः परमाचार्याभिलषितार्थत्रयं च परिपूरयति स्म स्वयं श्रीमद्भाष्यप्रणयनेन स्वशिष्यकुरुकेश्वरद्वारा षट्सहस्रग्रन्थमितसहस्रगीतिव्याख्यासम्पादनेन स्वशिष्यपुत्रेभ्यः पराशरव्यासपराङ्कुशनामकरणेन च। श्रीमद्भगवद्रामानुजमुनिवैभवं त्वनन्तपारं वहु वेदितव्यमत्राप्रस्तुतत्वान्न प्रसज्यते। (उक्तेतिवृत्तेन च गुरुकामः पूरणीयः शिष्येणेति ज्ञाप्यते)। परमाचार्याश्च स्वशिष्यमुख्येषु पञ्चसु उभयवेदान्तरहस्यार्थान् पृथक् पृथगुपदिश्य श्रीमद्रामानुजाय भवद्भिरुपदेष्टव्या इमेऽर्था इति निर्दिष्टवन्तः। परमाचार्याणां श्रीमद्यामुनमुनीनां श्रीमद्रामानुजे यादृशी कृपा, यादृशी प्रीतिः, यादृशी च भावनाऽऽसीदिति निरूपितेनैतावतोन्नेतुं शक्यतैवेह कुशलैः। तदिदं यामुनार्यदिव्यचरितवैभवैकदेशमात्रमत्र प्रदर्शितं गुरुपरम्पराप्रभावानुसारतः।

तदेवं सम्पन्ना दैव्या शक्त्या अस्मत्पूर्वाचार्याः वेदवाह्यकुदृष्टिमतान्धकारपटलावृतालोकं दिङ्मोहमुपागतं लोकमिममौपनिषदविशिष्टाद्वैततत्त्वालोकप्रसारणमुखेनोन्मीलितलोचनं निःश्रेयसमार्गाविस्खलितगतिकं च विदधिरे कृपयाऽपारयेति अहो सद्भाग्योन्मेषो दैवस्य जीवजातस्येत्यलमति प्रसज्य।

प्रसङ्गे चास्मिन् सिद्धित्रयस्यावतरणकारणं परमाचार्यहृद्गतं प्रकाशयामः। तत्प्रमेयं च सङ्गृह्णीमः।

## सिद्धित्रयस्यावतरणकारणं प्रमेयसङ्ग्रहश्च—

इह खलु विचित्राधिकारिपूर्णे जगति द्वैविध्यं नरेषु प्रथतेतरामास्तिकनास्तिकभेदतः। अनादिनिधनाविच्छिन्नपाठसम्प्रदायस्वतःप्रमाणभूतवेदशास्त्रोक्तार्थेषु नास्तीति मतिर्येषु ते नास्तिकाः, अस्तीति मतिमन्तश्च तेष्वास्तिका इति विदितैव व्यवस्था वैदिकानां गोष्ठीषु। तत्र नास्तिकेषु केचित् प्रत्यक्षमेव प्रमाणमिति वदन्तः पाञ्चभौतिकं देहमेवात्मानमभिमन्यन्ते **अयं लोको नास्ति पर** इति मानिनो विमूढाः। केचित् पुनः क्षणिकविज्ञानचैतन्यमेव प्रवाहरूपेणानुवर्तमानमात्मानं वदन्तः परमार्थतः शून्यस्वभावमेव तं सङ्गिरन्ते। आस्तिकेष्वपि केचित् ज्ञानसुखाद्यशेषविशेषगुणविरहितं जडरूपं पाषाणकल्पं परमार्थावस्थायामात्मानमाचक्षते। केचित्पुनश्चैतन्यमात्ररूपमेनं ज्ञानानन्दरहितमेव मन्यन्ते। त इमे वेदशास्त्रप्रामाण्यमुपगच्छन्तोऽपि तदुपसर्जनीकृत्य

स्वस्वाभिमतमर्थंतत्त्वं युक्त्यैव व्यवस्थापयितुं चेष्टन्ते। मते चैतेषां परमपुरुषार्थभूतस्य मोक्षस्य पुरुषार्थत्वमेव दुर्भिक्षं वर्तते। केचित्पुनः नित्यमेकमेव विभु चैतन्यमविद्यया नानात्मभावेन भासमानमाविद्यानि च सुखदुःखानि भुञ्जानमविद्ययैव तत्त्वसाक्षात्कारेणाविद्यानिवृत्तौ व्यपगतविशेषं ज्ञानानन्दगुणरहितं जडानानन्दव्यावृत्तिमात्ररूपं व्यवस्थास्यतीति कथयन्तो वेदान्तशास्त्राण्यपि स्वाभिमतार्थे नयन्तस्ततो भूय इव तमो विशन्ति। अपरे तु परमार्थोपाधिभेदेन ब्रह्मण एव जीवभावमुपाधिनिवृत्तौ च ब्रह्मभावं जीवानामुशन्ति। अन्ये पुनर्ब्रह्मण एव जडजीवेशरूपेण परिणामं तेषां ब्रह्मणश्च भेदाभेदं व्यामिश्रं व्याचक्षते। अभ्युपगच्छन्तोऽपि वेदशास्त्रप्रामाण्यं वेदान्तवादेषु परममुक्तौ सार्वज्ञ्यापरिच्छिन्नदुःखगन्धविधुरानन्दानुभवादिविशेषमाक्रोशत्सु वधिरा इव भवन्ति केचित्। अन्ये पुनः श्रुत्वाऽप्यान्यपर्यं तेषु कल्पयन्ति स्वमनीषयैव। सर्वे इमे स्वाभिमतार्थमेव त्रय्यन्ततात्पर्यविषयं वदन्ति। अनभिमतार्थप्रतिपादनादिना त्रयीविनाशनाय प्रवृत्ताः सर्वेऽपि तत्प्रकोपेन स्वयमेव बाधिता भवन्ति शलभसधर्माण इति चाहुः श्रीपराशरभट्टार्याः श्रीवत्साङ्कमिश्रसूनवः—**हर्तुं तमः सदसती च विवेक्तुमीशो मानं प्रदीपमिव कारुणिको ददाति। तेनावलोक्य कृतिनः परिभुञ्जते तं तत्रैव केऽपि चपलाः शलभीभवन्ति॥** इति। औपनिषदपरमपुरुषवरणीयताहेतुगुणविशेषविरह एव तेषामयथाप्रतिपत्तौ निदानमिति च तत्तातपादाःश्रीवत्साङ्कमिश्राः—**ये तु त्वदङ्घ्रिसरसीरुहभक्तिहीनास्तेषाममीभिरपि नैव यथार्थबोधः। पित्रभ्रमञ्जनमनाप्नुषि जातु नेत्रे नैव प्रभाभिरपि शङ्खसितत्वबुद्धिः॥** इति। ( अमीभिरपि—सोपबृंहणैर्वेदैरपि )

अन्यच्च-यथावदात्मतत्त्वमप्रतिपद्यमाना वैपरीत्येन अन्यथा च प्रतिपद्यमाना आत्महनः, आत्मचोरा इति चोपक्रुश्यन्ते शास्त्रे **'अन्यथा सन्तमात्मानं योऽन्यथा प्रतिपद्यते। किं तेन न कृतं पापं चोरेणात्मापहारिणा॥'** इत्यादौ। भगवतः कौस्तुभस्थानीयमात्मतत्त्वमपहरतां स्वतन्त्रबुद्ध्या युक्तमेवात्मचोरत्वम्, युक्तश्च मायिककारागारबन्धः कर्मपाशनिगलितानामनन्तदुःखमोहभयोपजननः। आत्महन्तॄणां देहात्मवादिनां चान्धतमसप्राप्तिः श्रुता **'अनन्दा नाम ते लोका अन्धेन तमसा वृताः। तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः॥'** इति।

तदेवमात्मतत्त्वाज्ञानिनां दुरत्ययभवार्णवमध्यपातमौपनिषदाध्यात्मतत्त्वज्ञानप्रति-

भटनानाविधदर्शनापदेशबाह्यकुदृष्टिप्रबन्धप्रचुरप्रचारं चावलोक्य जगत्यां दयमानमनसो जीववर्गेषु सिद्धित्रयमवतारयामासुः आत्मपरमात्मसंवित्तत्त्वानां प्रमाणतः प्रतिष्ठापकं युक्तिप्रधानं परमाचार्याः श्रीभगवद्यामुनमुनयः ।

तत्र तावत् **आत्मसिद्धौ** पूर्वनिर्दिष्टप्रतिपक्षिपक्षजातप्रतिक्षेपपूर्वकमात्मतत्त्वं निरणायि वेदशास्त्रानुसारिसत्तर्कैः सच्छास्त्रसंमतं देहादिविलक्षणमजडं नित्यं ज्ञानानन्दगुणकं परब्रह्मगुणानुभवदास्यैकरसं परब्रह्मशेषभूतं उपासनादिप्रीतभगवत्प्रसादाधीनमुक्तिकं च । **ईश्वरसिद्धौ** च निरीश्वरवादिनां कर्मजडानामीश्वरसाधकप्रमाणदूषणान्यपाकृत्य त्र्य्यन्तप्रमाणानुग्राहकैस्तर्कैः सर्वेश्वरः प्रसाधितः । **संवित्सिद्धौ** च प्रमेयतत्त्वव्यवस्थापकप्रमितिरूपं संवित्तत्त्वं विशोधितं मातृमेयमितीनां परमार्थतः स्वरूपभेदव्यवस्थापनमुखेन । क्व पुनर्विषयग्राहकं जीवात्मनां धर्मभूतं ज्ञानं सङ्कोचविकासार्हम्, क्व पुनरौपनिषदं परं तत्त्वं सच्चिदानन्दरूपमनघानन्तशुभगुणसागरमनन्तमहाविभूति अप्राकृतस्वासाधारणदिव्यरूपं श्रीमत् पुरुषोत्तमाख्यं परं ब्रह्म । तदेव परमं तत्त्वं प्रमाणाधीनप्रमितिरूपं भवत्यन्तःकरणवृत्त्यवच्छिन्नम्, अन्तःकरणावच्छिन्नं च ज्ञातृरूपमित्याद्या मायिनां कल्पना, सहोपलम्भनियमादभेदो ज्ञेयज्ञात्रोर्ज्ञानत इति प्रकटसौगतकल्पना च निरस्ते विस्तरेणात्र । चिदचितोः शरीरतया परब्रह्मापृथक्सिद्धप्रकारत्वोपपादनपूर्वकं चिदचिद्विशिष्टस्य ब्रह्मणः समाभ्यधिकराहित्यरूपमद्वितीयत्वमद्वितीयश्रुत्यर्थ इति व्यवस्थापनाच्च सुप्रतिष्ठापितोऽत्र विशिष्टाद्वैतसिद्धान्तः केवलाद्वैतादिपक्षप्रतिक्षेपेणेति सङ्क्षेपः । अत्र चायं श्लोकः परमाचार्यविषयकः श्रीमति वेदार्थसङ्ग्रहे श्रीमद्भगवद्रामानुजमुनिभिरनुसंहितोऽनुसन्धेयः **'परं ब्रह्मैवाज्ञं भ्रमपरिगतं संसरति तत् परोपाध्यालीढं विवशमशुभस्यास्पदमिति । श्रुतिन्यायापेतं जगति विततं मोहनमिदं तमो येनापास्तं स हि विजयते यामुनमुनिः ॥'** इति ।

प्रकृतमनुसरामः—सत्सु च पूर्वाचार्यप्रबन्धेषु बहुषु सांप्रतं परमाचार्यश्रीमद्भगवद्यामुनमुनिप्रणीतस्य सिद्धित्रयस्य तावत् व्याख्यानमिदं श्रीवैष्णवदासेन मया प्रणीतं मुद्राप्य प्रकाश्यते । आशासे चेदं सुमनश्चेतःप्रसादकं भूयादिति ।

श्रीभूतपुरीनिवासरसिकैः श्रीभगवद्रामानुजाचार्यदिव्यवंशावतीर्णैस्तन्नामधेयैरस्मद्विद्यागुरुचरणैश्च दासजनस्यास्याभ्यर्थनमुररीकुर्वाणैः सव्याख्यानस्य सिद्धित्रयस्यास्य प्रस्तावना समनुगृहीता या परमगभीरा, सा च प्रकाशिता रसिकबुधजनमनोविनो-

दायात्र; दासजनविषयकृपापरीवाहरूपं दासजनस्यास्य गुरुकुलात्समावर्तने तैरेव प्रसादितं शुभाशीर्वचनपत्रं च ।

अभ्यर्थये च एवमेव पूर्वाचार्यप्रबन्धप्रवचनव्याख्यानकरणादिना दासजनस्यास्य कालक्षेपं सङ्कल्पयतु यावदायुषं स भगवान् सत्यसङ्कल्पः परमकारुणिक औपनिषदः परमपुरुषः श्रियःपतिरिति श्रीः ।

VADTAL (Post)
Dt. KAIRA. W. Ry.
(Via) ANAND
(Gujarat)
18 th APRIL 1954

इति प्रस्तोता, व्याख्याता,
P. B. Ananngaracharya;
Siromani
HEAD PANDIT
Sanskrit Patasala



## एतन्मुद्रापणार्थमेकाधिकशतं समर्पितवतां महात्मनां धन्यनामावली ।

सद्गुरु. शास्त्री. हरिजीवनदासजी
" " कृष्णस्वरूपदासजी
" " नारायणस्वरूपदासजी (पु. हरिस्वरूप)
" " नारायणस्वरूपदासजी (पु. नरनारायण)
" " श्वेतवैकुण्ठदासजी
" " हरिबलदासजी
" " हरिचरणदासजी
" " विष्णुप्रसाददासजी
" " कृष्णस्वरूपदासजी (पु. उत्तमचरण)
" " लक्ष्मीप्रसाददासजी

सद्गुरु. स्वामी. ब्र. मायातीतानन्दजी
" पुराणी. धर्मस्वरूपदासजी
" शास्त्री. कृष्णकेशवदासजी
" " हरिस्वरूपदासजी (पु. जिष्णुदास)
" " हरिस्वरूपदासजी (पु. हरिप्रसाद)
" " नीलकण्ठदासजी
" " हरिप्रसाददासजी
" " नारायणचरणदासजी (गढडा)
" को. स्वयंप्रकाशदासजी (जामनगर)

---

सूचना—अन्येषां च धनसाहाय्यकारिणां नामानि अग्रे प्रकाशयिष्यन्ते ।

अन्यच्च—एतत्पुस्तकापेक्षिभिर्व्याख्यातुः सकाशतः धनादेशद्वारा (M. O.) मूल्यप्रेषणेन वा वी. पी. द्वारा वा यावदपेक्षितं पुस्तकमेतत् प्राप्तव्यम् ।

## धन्यनामावलीशेषपूर्तिः—

स० शास्त्री भगवत्स्वरूपदासजी (जूनागढ)।

कच्छ-भुजनगरीयहरिभक्ताः।

रा. रा. भोगिलाल मणिलाल त्रिवेदी (पीज)।

रा. रा. शेठ रणछोडदास हरगोविन्ददास (मालेगाम) स० स्वामि यज्ञपुरुषदासजीद्वारा।

एतैरपि एकशतं समर्पितमेतन्मुद्रापणार्थम्।

---

एकपञ्चाशन्मुद्राः समर्पितवतां नामानि—

स० पुराणी जगत्पावनदासजी।

स० शास्त्री कुञ्जविहारिदासजी।

विद्वान् न. च. श्रीरघुनाथाचार्यः (वरंगल N. S. Ry)।

स० शास्त्री धर्मजीवनदासजी (जूनागढ) द्वारा चैकपञ्चाशत् प्राप्ता।

सर्वेभ्योऽपि च धनसाहायककारिभ्यो महाशयेभ्यो धन्यवादाः। पञ्चशताधिकसहस्रद्वयेन चैतन्मुद्रणमभिनिर्वृत्तमिति निवेद्यते व्याख्यात्रा॥



## प्रस्तावनायाम्–

| पृ.– | पं.– | मुद्रितम्– | पठनीयम्– |
|---|---|---|---|
| ३ | १६ | मध्ययता– | मधियता– |
| १२ | १७ | कारोया मुना– | कारो यामुना– |
| १५ | १ | श्रियः पति– | श्रियः पतिं– |
| १७ | २६ | देवीं– | दैवीं– |
| १९ | २५ | अनन्दा– | असुर्या– |



## एतत्पुस्तकप्राप्तिस्थानादिसङ्केतः–

Apply To,

P. B. Annangaracharya - Shiromani
Head Pandit, Sanskrit Pathashala
**VADTAL** (Post)
Dst. Kaira, (Via) Anand, W. Ry.

[ पुस्तकप्रेषणभृतिः ( पोस्टेज ) मूल्यात् पृथक् ]

---

॥ श्रीरस्तु ॥

श्रीमते रामानुजाय नमः ।

ईश्वरस्वातन्त्र्यपरामर्शात्मिका

# अनुयोगमाला

अण्णङ्गराचार्यशिरोमणिसंग्रथिता

---

त्वं विश्वस्य सुहृद्दयाजलधरः शेषी श्रुतौ विश्रुतः
किञ्चावाप्तसमस्तकामविभवः शक्तश्च लक्ष्मीपतिः ।
यद्येवं तु न सिञ्चसे जनिमृतिव्याध्यादिदुःखार्दितान्
नानातापसमाकुलान् निजजनान् कारुण्यवार्भिः कथम् ॥ १ ॥
किञ्चानेकनिषिद्धकर्मनिरताः श्रुत्यादिविद्वेषिणः
त्वां चैवापलपन्त ईशमिह संदृश्यन्त आढ्याः सुखैः ।
ये चैव त्वदनन्यभावविभवास्ते दुःखभाजो भृशं
यद्येवं वद तावको गुणगणो विश्वासयोग्यः कथम् ॥ २ ॥
जीवाः पूर्वभवार्जितं ननु पुनर्भुञ्जन्ति कर्म स्वकं
पुण्यापुण्यमयं विपाकसमयप्राप्तं ह्यलङ्घ्यं त्विति ।
तत्तत्कर्मसमाश्रयेण ननु तेऽयुक्तः समाधिर्यतः
तत्तत्कर्मनिबर्हणेऽपि चतुरः सर्वस्य धाता स्वयम् ॥ ३ ॥
स्यादेवं किल वत्सलोऽपि नृपतिः पुत्रं प्रियं ह्यात्मनो-
प्यत्याचारपथप्रवृत्तिनिरतं शास्त्येव लोके यथा ।
इत्यप्युत्तरमञ्जसा न घटते त्वय्येव सर्वान्तरे
तत्तत्कर्मचये शुभाशुभमये संयोजयत्यात्मनः ॥ ४ ॥
जीवस्योत्क्रमणे तनोरिव समस्तस्यापि मत्तो न वै
विश्लेषे सति धारणेति कलयन् सर्वान्तरात्मा भवन् ।
सर्वं प्राक्तनवासनावशतया संप्रेरयामि स्वयं
त्वित्येवं न च शोभते प्रतिवचो नित्यं स्वतन्त्रस्य ते ॥ ५ ॥

तत्तत्कर्मसमाश्रयेऽपि जगतः सर्गादिके कर्मणि
स्यादेवाखिलशासितुर्न च मम स्वातन्त्र्यभङ्गः क्वचित्।
श्रुत्यादिर्मम शासनं तदनुवृत्त्युल्लङ्घनाभ्यां भवत्
तत्तज्जीवगतं च कर्म हि मतं सङ्कल्परूपं मम ॥ ६ ॥

ये वै केचिदनेकजन्मसु चितैर्यज्ञादिसत्कर्मभिः
क्षीणस्वान्तमला गुरूपसदनाल्लब्धात्मविद्याः पुनः।
ज्ञात्वा मां च जगत्पतिं निजकृतानन्तापराधस्मृतेः
संतप्ताः शरणं गतास्तदवनात्सार्थौ दयादिर्गुणः ॥ ७ ॥

उत्सर्गः शास्त्रसिद्धो ननु भवति ममानादिसंकल्पमूलो
जीवस्यानादिकालाज्ज्ञनिमृतिपरिवृत्त्यातुरस्यावनेऽयम्।
प्रेक्षे कंचित्कदाचिन्नियममननुसृत्याप्यनन्येश्वरत्वात्
स्वेच्छामात्रान्न चैवं मम भवति पुनः पक्षपातः समस्य ॥ ८ ॥

इत्येवं प्रतिभाषणे तु चतुरः सर्वं जगत् कन्दुक-
स्थानापन्नमदृष्टदण्डनिहतं वम्भ्रम्यमाणं मुहुः।
दृष्ट्वा केलिरसं भुनक्षि रमया यद्यप्यथापि प्रभो
भक्तानां बहु शोचतां न तु पुनर्युक्ता ह्युपेक्षेदृशी ॥ ९ ॥

किं च त्वं यदि देहिनां हितचिकीर्षातः प्रवृत्तो जग-
त्सर्गादौ ननु तर्हि ये सुकृतिनः संजातरागास्त्वयि।
प्रारब्धं विनिहत्य तानुपचितप्रेम्णोऽचिरात् किं नय-
स्योकं स्वं न कृतेऽनुयोग इति ते स्वातन्त्र्यमेवोत्तरम् ॥ १० ॥

यदहो चापलमेतत् त्वग्रे चपलेन ते कृतं देव।
क्षान्त्वा तदिदं दासे प्रसीद दृष्ट्वा गुरून् वरान् श्रीश ॥ ११ ॥

---

सूचना—योऽयं जीवेश्वरवादप्रतिवादगर्भ ईश्वरस्वातन्त्र्यपरामर्शोऽनुयोगमाला-नाम्ना मया कृतः, सहृदयहृदयाह्लादनाय सोऽप्यत्र प्रकाशितः। इति व्याख्याता. P. B. A.

श्रीः ।

श्रीहरिर्जयति ।

श्रीमद्भगवद्यामुनमुनये नमः ।

श्रीमते रामानुजाय नमः । नमश्चास्मद्गुरुपरम्पराभ्यः ।

परमाचार्यश्रीमद्यामुनमुनिसमनुगृहीते सिद्धित्रये—

# आत्मसिद्धिः ।

## सिद्धाञ्जननामकव्याख्योपेता ।

यत्पदाम्भोरुहध्यानविध्वस्ताशेषकल्मषः ।
वस्तुतामुपयातोऽहं यामुनेयं नमामि तम् ॥ १ ॥

(मू०) प्रकृतिपुरुषकालव्यक्तमुक्ता यदिच्छा-
मनुविदधति नित्यं नित्यसिद्धैरनेकैः ।
स्वपरिचरणभोगैः श्रीमति प्रीयमाणे
भवतु मम परस्मिन् पूरुषे भक्तिभूमा ॥ १ ॥

---

(व्याख्या) जगज्जन्मस्थितिलयै रममाणं परात्परम् ।
स्वामिनं सर्वजगतां श्रियःपतिमुपास्महे ॥ १ ॥
ज्ञानवैराग्यभक्तीनां शेवधिं करुणार्णवम् ।
यामुनार्यं मुनिवरं परमाचार्यमाश्रये ॥ २ ॥

---

टि०—१. यत्पदेत्यादिपद्यं तावत् परमाचार्यवर्यश्रीमद्यामुनमुनिविषयस्तुतिरूपं तदनुगृहीतप्रबन्धानामध्ययनाध्यापनप्रारम्भादिसमयेष्वनुसन्धेयमिति संप्रदायः । इदं च श्रीभगवद्रामानुजमुनिभिर्यतिराजराजैराचार्यचरणैः स्वपरमाचार्य-

(व्याख्या) श्रीभाष्यादिप्रबन्धेन तत्त्वं सन्दर्शयन् परम् ।
रामानुजार्यो भगवान् दयतां मयि संश्रिते ॥ ३ ॥
देशिकेन्द्रदयासारमवलम्ब्य विधीयते ।
सिद्धित्रयस्य व्याख्यानं रीत्या सरलया मया ॥ ४ ॥
क यामुनार्यश्रीसूक्तिसन्दर्भः क च मे मतिः ।
अत्यल्पविषयाऽथापि चापलं त्वपराध्यति ॥ ५ ॥
विशिष्टाद्वैतसिद्धान्तनिर्धारणधुरन्धराः ।
संश्रितेषु दयासारा देशिकाः शरणं मम ॥ ६ ॥
वात्स्यं श्रीवादिभीकृद्गुरुकुलतिलकं कृष्णमार्यं गुणाढ्यं
तातं मन्त्रप्रदं मे द्रविडनिगमसूक्त्यर्थसन्दर्शकं तम् ।
नत्वा रामानुजार्यं गुरुवरमपि मे भाष्यकृद्वंशदीपं
हारीतं चारुकीर्तिं बुधकुलतिलकं यामुनोक्तीर्विवृण्वे ॥ ७ ॥
श्रीमन्नागपुराभिख्याभिजनो वादिभीकरः ।
अण्णङ्गरार्यदासोऽहं विवृणोमि गुरोर्गिरः ॥ ८ ॥

---

श्रीमद्यामुनेयमुनिविषयकमनुसंहितम् । द्रोणस्यैवैकलव्यो भगवतो यामुनमुनेः शिष्यभावमुपगता इमे। पद्यार्थस्तु—गाढाज्ञानान्धकारमध्यपतितो विनष्टप्रायोऽहं यदीयचरणारविन्दयुगलनिरन्तरसप्रेमसंस्मरणप्रभावत एव निरस्ततत्त्वज्ञानादिविरोधिसमस्तदुरितचयः स्वात्मपरमात्मतत्त्वसंबोधेन वस्तुत्वं 'अस्ति ब्रह्मेति चेद्वेद, सन्तमेनं ततो विदु'रिति श्रुतिप्रसिद्धं प्राप्तवान्, तं प्रसिद्धानुभावं भगवन्तं यामुनेयं परमाचार्यचरणं प्रणमामि केवलं तत्प्रसादलब्धसमुज्जीवनः प्रत्युपकर्तुमशक्तः कल्पशतेनापि यथावत्करणत्रयेणेति। गुणिनिष्ठगुणाभिधानं हि स्तोत्रम् । समस्तदुरितनिवर्तनसज्ज्ञानप्रवर्तनादिक्षमस्मरणकत्वलक्षणपरमाचार्यनिष्ठगुणाभिधायित्वात्स्तुतित्वं सूपपन्नमस्य। स्वशेषत्वपरशेषित्वप्रकाशकव्यापारो हि प्रणामो नाम। सोऽयं प्रयुज्यते मयाऽऽचार्यचरणेष्विति कीर्तनाच्चाऽऽचार्ये स्वनैच्यं यथा प्रकटीभवेत्, तथैव वर्तितव्यमन्तेवासिनेति ज्ञापितं भवतीति ध्येयम् ।

(व्याख्या) अथ खलु भगवान् श्रीमद्यामुनमुनिः श्रीवैष्णवसंप्रदायप्रवर्तकाचार्येषु प्रथमपरिगणितस्य परमयोगिनो योगरहस्यन्यायतत्त्वशास्त्रप्रणेतुर्भगवतः श्रीमन्नाथमुनेः पौत्र ईश्वरमुनितनुजन्मा विशिष्टाद्वैतसिद्धान्तप्रवर्तनधुरन्धरः प्रतिवादिवारणप्रकटाटोपविपाटनक्षमः परमाचार्य आत्मसिद्धिनामकं वेदान्तप्रकरणमुपक्रममाणोऽविघ्नपरिसमाप्तिप्रचयगमनादिफलं मङ्गलमाशीरूपं वस्तुनिर्देशं च कुर्वाणः शिष्यशिक्षायै निवध्नाति 'प्रकृती'ति। प्रकृतिर्माया, तत्कार्याणि समष्टिव्यष्टिरूपाणि व्यक्तानि, प्रकृतिप्राकृतपरिणामहेतुः कालः, तद्बद्धो जीवराशिश्चेति लीलाविभूतिस्थाः सर्वे सङ्गृहीताः शब्दचतुष्टयेन। मुक्ताः भगवदुपासनाप्रभावाद्भववन्धनात्कर्मपाशप्रग्रथिताद्विनिर्मुक्ताः। एते प्रकृत्यादयो यस्यैव परमपुरुषस्येच्छां सङ्कल्परूपां सदा समनुसरन्ति स्वरूपस्थितिप्रवृत्तिषु, तस्मिन् पूरुष इत्यन्वयः। इमानि च सर्जनावनसंहरणसंसारविमोचनानि सङ्कल्पैकनिष्पाद्यानि भगवतो लीलारसाय कल्पन्ते। एवं लीलाविभूतियोग उक्तः। अथ नित्यविभूतियोगमाह 'नित्य'मिति। नित्यमिति पूर्वोत्तरयोरन्वितं मध्यमणिन्यायेन। सदोद्भूतापहतपाप्मत्वादिस्वरूपैः सर्वज्ञैर्भगवदनुभवजनितप्रीतिकारिताशेषशेषवृत्त्यन्वयत एवाधिगतभोगैरनन्तैरनन्तगरुडविष्वक्सेनादिभिर्नित्यसूरिभिः श्रीमति महावैकुण्ठे दिव्येऽक्षरे धाम्नि सदा निरतिशयप्रीतिमनुभवति नारीणामुत्तमायाः श्रियो वल्लभे पुरुषोत्तमे परब्रह्मणि मम भक्तिप्रचयो भूयादित्याशंसा। उभयविभूतिनाथे रमानाथे भक्तिर्हि सर्वश्रेयस्करी। तत्तद्भक्त्याशंसनमुचिततरम्। भक्तिरेव भगवति प्रार्थ्या चेतनैः। स हि स्वयमेव श्रेयो विदधाति। तत्तस्मिन् स्वश्रेयःप्रार्थना नोचिततरा भक्तानामिति चानेन ज्ञाप्यते। अचेतनभेदश्चेतनभेदश्च परमार्थतः, श्रीमन्नारायणस्यैव

(मू०) विरुद्धमतयोऽनेकाः सन्त्यात्मपरमात्मनोः ।
अतस्तत्परिशुद्ध्यर्थमात्मसिद्धिर्विधीयते ॥ २ ॥
संमतं हि सर्वसमयेषु आत्मज्ञानं निःश्रेयसहेतुरिति । श्रूयते

---

पारम्यं, सर्वचेतनाचेतनानां तद्विभूतित्वं, निरतिशयप्रेमगर्भतदुपासनस्यैवापवर्गहेतुत्वमविच्छिन्नपूर्णभगवदनुभवगर्भसेवाया एव परमपुमर्थत्वं चेति स्वाभिमताः प्रकरणार्था अत्र संसूचिताः ॥ १ ॥

प्रकरणारम्भप्रयोजनमभिधत्ते 'विरुद्धे'ति । आत्मपरमात्मविषये हि नाना विप्रतिपत्तयः सन्ति। मतीनां विरुद्धत्वं विरुद्धाकारावगाहित्वम्। यतो मुमुक्षूणामात्मपरमात्मतत्त्वं जिज्ञासमानानां तद्विषये वादिविवादनिमित्ता विप्रतिपत्तयः सन्ति, अतस्तत्परिशुद्ध्यर्थं—आत्मपरमात्मतत्त्वमतेः तत्तद्वादप्रयुक्तासद्विरुद्धाकारप्रकारकत्वरूपदोषनिरसनेन यथावस्थिताकारावगाहित्वलक्षणशुद्धियोगसंपादनार्थमात्मसिद्धिनामकं प्रकरणं विरच्यते सत्प्रमाणतर्कैरात्मपरात्मतत्त्वनिर्णयफलमित्यर्थः। परावरात्मतत्त्वं प्रधानविषयः। परपक्षप्रतिक्षेपो नान्तरीयकः। आत्मतत्त्वनिर्णयश्च साक्षात्प्रयोजनमेतत्प्रकरणस्येति सूचितम्। परम्परया निःश्रेयसाभिष्वङ्गश्चास्याभिप्रतः। विषयप्रयोजनोक्तेः संवन्धाधिकारिणौ चाक्षेपगम्यौ। एवमनुवन्धिचतुष्टयसंपत्तिरनुसंहिता। परावरात्मतत्त्वप्रतिपादकश्रुत्यन्तानुग्राहकन्यायप्रपञ्चनं प्रकरणस्यास्य मुख्यं कृत्यम्। ततश्चात्मपरमात्ममननोपयोगीदं संपद्यत इति वोध्यम् ॥ २ ॥

अनर्थकायात्मतत्त्वज्ञानाय न कोऽपि प्रेक्षापूर्वकारी प्रवर्तेतेति स्वग्रन्थफलस्यास्य निःश्रेयसाभिष्वङ्गमाविष्करोति 'संमत'मिति। नन्वस्तु नामाऽऽत्मज्ञानस्य मोक्षसाधनत्वम्, अतिरिक्तपरमात्मज्ञानस्य तत्कुत इत्यत्राऽऽह 'श्रूयते' इति। वाह्यानां विमत्यामपि

च 'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति' 'आत्मानं चेद्विजानीयात्' 'तरति शोकमात्मवित्' 'ब्रह्मविदाप्नोति पर'मित्यादिः परावरात्मतत्त्वज्ञानस्यापवर्गसाधनत्वं प्रतिपादयन् वेदान्तवाक्यगणः ।

तत्रास्मिन्नात्मनि परस्मिंश्चानेकविधा विप्रतिपत्तयः तीर्थकराणाम् । तद्यथा—आत्मविषये तावत् देहमेव केचिदात्मानमाचक्षते। इन्द्रियाण्यन्ये। मन इत्यन्ये।प्राणमपरे। अध्यस्तज्ञातृ-

---

वैदिकवर्याणामात्मन इव परमात्मनोऽपि तत्त्वज्ञानस्य मोक्षसाधनत्वे न विमतिरिति भावः। परात्मा—परंब्रह्म पुरुषोत्तमः श्रीमन्नारायणः। अवरात्मा—जीवात्मा। शिष्टं स्पष्टम्।

ननु सन्दिग्धे हि न्यायप्रवृत्तिः। वेदान्तैरेव परावरात्मतत्त्वं सुनिश्चितमिति कथं तत्र शङ्का, कथंतरां च न्यायप्रवृत्तिः ?। उच्यते। श्रुतिभिरर्थावगमेऽपि प्रसिद्धमतिविभवानां तीर्थकराणां विविधवादश्रवणतः श्रुतितात्पर्य एव सन्देहप्रवृत्तेः श्रुत्यर्थयाथात्म्येऽपि शङ्का संभवदुदया। इममेवाऽऽशयं हृदि निधायात्मतत्त्वे सन्देहसन्दोहिका विप्रतिपत्तीरुपक्षिपति 'तत्रे'ति। तीर्थं—दर्शनं तीर्थसाम्यात्। दर्शनं हि आन्तराज्ञानमलनिर्हरणपूर्वकं तत्त्वज्ञानरूपां शुद्धिमात्मनामुपजनयति। तत्कुर्वन्तीति तीर्थकराः—दार्शनिकाः। तद्यथा—उक्तं विप्रतिपत्तिबाहुविध्यं यथा—येन प्रकारेण, तद्वर्ण्यत इति यावत्। 'देहमेवे'ति। देहाद्यात्मत्ववादिनश्चार्वाकभेदाः। 'मन इत्यन्ये' इति। मन इत्यप्रसिद्धं किमपि केचिदात्मेत्याचक्षत इत्यर्थः। 'आत्मानमाचक्षत' इत्युत्तरत्राप्यन्वेति। सौगतमतं शाङ्करमतं चाह तन्त्रेण 'अध्यस्ते'ति। बोधमात्रं—चैतन्यमात्रम्। अनहङ्कारम्—अहंबुद्धिशब्दाविषयम्। आविद्यमहङ्कार-

भावमनहङ्कारं बोधमात्रमितरे। देहेन्द्रियमनःप्राणबोधविलक्षण-माकाशादिवदचित्स्वभावमागन्तुकबोधसुखदुःखाद्यसाधारणगुणा-धारमहङ्कारगोचरमपरे। अपरे तु बोधैकस्वभावमेव, स्वभावधवल-मिव स्फटिकमणिमुपधानविशेषापादितारुणिमगुणादिनिर्भासमन्तः-करणोपधानापादितरागद्वेषसुखदुःखाद्यशिवगुणनिर्भासमनुदितान-स्तमितस्वरूपप्रकाशं स्वयंज्योतिषमिममभिदधति। अन्ये तु ज्ञाना-नन्दस्वभावम्। आश्रयानुकूल्यप्रतिलब्धानन्दसुखादिव्यपदेशबो-धविशेष एवास्य स्वाभाविक इत्यन्ये।

---

ग्रन्थिस्थं ज्ञातृत्वमात्मन्यारोप्यत इत्येकः पक्षः। अनादिवासनया ज्ञानस्यैव ज्ञातृभावाद्यारोप इति चापरः। तार्किकमतमाह 'देहेन्द्रिये'ति। बोधः—ज्ञानम्। देहेन्द्रियमनःप्राणधीभ्योऽन्यमचैतन्यस्वरूपमागन्तुक-ज्ञानसुखादिविशेषगुणवन्तमहंबुद्धिशब्दगोचरमात्मानं काणादा गौत-माश्चाचक्षत इत्यर्थः। अचित्स्वभावमित्यनेनाकाशादेरिवात्मस्वरूपस्य जडत्वं विवक्षितम्। अहङ्कारः,—अहमिति बुद्धिः शब्दश्च। साङ्ख्य-मतमाह 'अपरे' इति। बोधैकस्वभावमेव—बोधश्चैतन्यं, तदेव स्वो भावः स्वरूपं यस्य तम्, ज्ञानस्वरूपमेव। उपधानम्—उपाधेः सन्नि-धानम्। इमम्—आत्मानम्। यथा स्वभावतो धवल एव स्फटिका-दिर्जपाकुसुमाद्युपाधिसन्निधानेनारोपिततत्तद्रक्तादिरूपेण प्रतिभासते, एवं नित्यस्वप्रकाशः स्वयंज्योतिरात्माऽन्तःकरणसन्निधानत आरोपित-सुखदुःखादितद्गुणवत्तया भासते केवलम्। वस्तुतो नित्यनिर्दुष्ट एवाय-मिति भावः। 'अन्ये त्वि'ति। मीमांसकैकदेशिनः सिद्धान्त्येकदेशिनो वा। ज्ञानानन्दौ स्वाभाविकधर्मावात्मन इत्यमीषामाशयः। सिद्धा-न्तिनां मतमाह 'आश्रये'ति। आनन्दोऽपि नातिरिक्तः, किन्तु आत्मनः

तथा–अनुमानसमधिगम्यः; आगमैकवेद्यः; मानसप्रत्यक्षवेद्यः; ग्राहकतयैव सकलविषयवित्तिषु प्रत्यक्षः; ज्ञानस्वभावतयानुदितानस्तमितस्वरूपप्रकाशः स्वयंज्योतिः; ईदृशोऽप्यागमानुमानयोगजप्रत्यक्षैः स्वेतरसकलविलक्षणस्वाभाव्येन विशदविशदतरविशदतमतयाऽन्ततो यथावदपरोक्ष्यत इति ।

---

अनुकूलत्वेन प्राप्त आनन्दसुखादिनिर्देशो येन, एवंभूतो ज्ञानविशेष एव सः। स एव चात्मनः स्वभावः। संसारित्वदुःखित्वादि तु कर्मोपाधिकमिति भावः। यावदुक्तोपपन्नश्चात्मेति हार्दम्। तत्तद्वाद्युक्तेषु यावदुपपन्नम्, तावदाकारवत्त्वं चात्मनः संमतमेव हि सिद्धान्ते ।

आत्मस्वरूपे विप्रतिपत्तीरुक्त्वा तद्ग्राहकप्रमाणे ता उपक्षिपति 'तथा अनुमाने'ति। सौत्रान्तिकीय आनुमानिकत्वपक्षोऽयम् । अनुमानं च अहंविज्ञानं सालम्बनं विज्ञानत्वान्नीलपीतादिविज्ञानवदित्याद्युदाहार्यम् । विलक्षण आत्मा अनुमानगोचर इति नैयायिकपक्षो वाऽत्र कीर्तितः स्यात् । अग्रिमविवरणानुसारात् । 'आगमैकवेद्य' इति । श्रोत्रियाणां पक्षोऽयम् । अहंबुद्धेर्देहालम्बनतयैवोपपत्तेः सज्ञातपरार्थत्वाद्यनुमानस्याप्रयोजकत्वादिना च शास्त्रैकगम्य आत्मेत्यमीषामाशयः। 'मानसे'ति। तार्किकाणां भाट्टानां च पक्षोऽयम्। 'ग्राहकतयैवे'ति । प्राभाकरपक्षोऽयम् । ग्राहकतया–ज्ञातृतया । ज्ञानस्य त्रितयावभासकत्वाद्घटप्रत्यक्ष एव घट इव तज्ज्ञानं ज्ञाता चात्मा प्रकाशेते इत्यमी। साङ्ख्यादिमतमाह 'ज्ञानस्वभावतये'ति। स्वो भावः स्वभावः स्वरूपम्। नित्यस्याऽऽत्मनो ज्ञानस्वरूपतया इतरानधीननित्यस्वप्रकाशोऽयमित्येते सिद्धान्तिनामाशयमाह 'ईदृशोऽपी'ति । विशदतमतयेत्यनन्तरं 'गृहीत' इति शेषः । प्रत्यक्त्वादिनैवास्य

तथा—परममहान्; अणुपरिमाणः; शरीरपरिमाणः; स्वतः परिमाणरहितोऽपि व्याप्यवस्तुपरिमितिकृतपरिच्छेद इति। व्याप्तिरपि चैतन्यमात्रेण; स्वरूपेणेति। तथा क्षणिकः; यावच्छरीरोष्मस्थायी; आप्राकृतप्रलयावस्थायी; आमोक्षस्थायी; कूटस्थो नित्य इति। सर्व-

---

स्वप्रकाशत्वादेहादिव्यावर्तकनित्यत्वाणुत्वज्ञातृत्वादिप्रकारेणाऽऽगमेन विशदतया, मननतो विशदतरतया, योगजप्रत्यक्षतो विशदतमतया च गृहीतोऽयं मुक्तौ स्वाभाविकासङ्कुचितापरोक्षज्ञानप्रभया कार्त्स्न्येनानुभूयत इत्यर्थः।

आत्मनः परिमाणेऽपि ता निर्दिशति 'तथे'ति। नैयायिकपक्षमाह 'परममहा'निति। तत्त्वं चापकर्षानाश्रयमहत्परिमाणम्। विभुत्वसहचरितम्। तत्प्रतिभटं सिद्धान्तिनां पक्षमाह 'अणुपरिमाण' इति। माध्यमं परिमाणं मन्यमानानामनैकान्त्यवादिनां मतमाह 'शरीरपरिमाण' इति। सत्त्वैकान्त्यवादिनां साङ्ख्यानां मतमाह 'स्वत' इति। परिमाणराहित्यं विभुत्वादात्मनाम्। परिमाणवत्त्वे हि परिच्छिन्नत्वमविभुत्वं प्रसज्यत इत्येतेषां हार्दम्। औपाधिकं चास्य परिमाणमित्याह 'व्याप्ये'ति। व्याप्यान्तःकरणपरिमाणौपाधिकपरिमाणोऽयं वन्धे इत्यर्थः। व्याप्तावपि तामाह 'चैतन्ये'ति। स्वधर्मभूतज्ञानद्वारिकैव व्याप्तिरिति सिद्धान्तिपक्षः। यथाऽन्तःकरणाधीनं परिमाणम्, तथा ज्ञानाधीनं व्यापकत्वमिति सादृश्येनोपस्थितत्वात् सिद्धान्तपक्षस्य प्रथमनिर्देशोऽत्र। 'स्वरूपेणे'ति। आत्मा स्वरूपतः सर्वगत इति नैयायिकादयः। कालसंवन्धेऽपि ता उपक्षिपति 'तथे'ति। क्षणिकत्वं सौगतानामभिमतम्। यावच्छरीरोष्मस्थायित्वं चार्वाकाणाम्। आप्राकृतप्रलयस्थायित्वं ब्रह्मदेवादीनाम्, आमोक्ष-

शरीरेष्वेकः; प्रतिक्षेत्रं नानाभूत इति च तथा तथा प्रतिपद्यन्ते ।

तथा परमात्मविषयेऽपि—केचित् समस्तवस्तुसाक्षात्कारिणं सर्वशक्तिमीश्वरमेव नाभ्युपगच्छन्ति । अभ्युपगच्छन्तोऽप्येके प्रत्यस्तमितमितिमानमातृमेयेश्वरेशितव्यादिभेदविकल्पकूटस्थविज्ञा-

---

स्थायित्वमौडुलोम्युपज्ञानाम् । कूटस्थनित्यत्वं नैयायिकादीनां सिद्धान्तिनां च । कूटस्थत्वम्—निर्विकारत्वम् । नित्यत्वं सर्वकालसत्ता । सङ्ख्यायामपि तामाह 'सर्वे'ति । एकजीववादो मायावाद्येकदेशिनाम् । प्रतिशरीरमात्मभेदो नैयायिकादीनां सिद्धान्तिनां च । चकारोऽनुक्तविप्रतिपत्तिसमुच्चायकः । 'तथा तथे'ति । स्वस्वाभिमततत्तद्विरुद्धाकारेणात्मानं ते ते वादिनो मन्यन्त इत्यर्थः ।

जीवात्मस्वरूपादौ विप्रतिपत्तीरुक्त्वा परमात्मस्वरूपादौ ता उपक्षिपति 'तथा परमे'ति । 'नानैव विप्रतिपत्तयः तीर्थकराणा'मिति शेषः । 'केचि'दिति । चार्वाका बौद्धा आर्हताः कर्मजडाश्चेत्यर्थः । सेश्वरवादिष्वपि नैकमत्यमित्याह 'अभ्युपगच्छन्तोऽपी'ति । एके—केचिदद्वैतिनः । काल्पनिकं कल्पितेश्वरभावम् । कल्पनाप्रकारमाह 'प्रत्यस्तमिते'ति । कूटस्थम्—अविकारि नित्यं विज्ञानमात्रं सत्यम् । यत्रेशेशितव्यादिभेदप्रपञ्चो मातृमेयतदवच्छिन्नमितित्वादिरपि नैवास्ति । एवंभूतेऽधिष्ठानेऽविद्ययैव नानाशक्तिमत्या वियदादिनानाऽचित्प्रतिभासो रज्ज्वामिव सर्पाद्यवभासः । आविद्यभूतसमष्टिव्यष्ट्यवच्छिन्नज्ञानैश्वर्यादिमहिमभेदप्रतिभासश्च । तत्र समष्ट्यवच्छिन्नज्ञानैश्वर्यादिमत्तया भासमानं चैतन्यमीश्वरः । व्यष्टिरूपदेवादिदेहाद्यवच्छिन्नज्ञानादिमत्तया नानात्वेन च भासमानं तदेव जीवजात-

नैकरसमनाद्यविद्योपदर्शितवियदादिभेदावच्छिन्नज्ञानैश्वर्यादिमहिमविकल्पतया काल्पनिकमाचक्षते। अपरे तु यथोक्तस्वरूपमेवाविद्योपधानेन तद्गुणसारतया प्रकल्पितब्रह्मादिस्थावरपर्यन्तविविधजीवभेदं स्वाधीनविचित्रविवर्तस्वभावमायोपहिततया समासादितसार्वज्ञ्यादिसंपदमुपहितमिममभिदधति। तथाऽन्ये प्रकृष्टसत्त्वोपादाननिमित्तस्वतन्त्रप्रधानपरिणामविशेषमात्रनियमनिर्वाहितसर्वैश्वर्यमर्यादमाद्रियन्ते। अनुपहितमपि परिणामिनमपरे प्रतिपेदिरे। अपरिणामिनमपि स्वमायांशभूतविचित्रान्तःकरणदर्पणतलप्रतिबिम्बिततया प्रतिपन्नविश्वतैजसप्राज्ञभावं तमेकमेव चेतन-

मित्येतेषामाशयः। अविद्याया एव जीवेश्वरभावकल्पकोपाधित्वमेतन्मते। मायाऽविद्योपाधिभेदवादिनां मतमाह 'अपरे त्वि'ति। निर्भेदचैतन्यमात्रमेवाविद्योपहितं नानाजीवभावेन मायोपहितं चेश्वरभावेन परिस्फुरति। तत्राऽविद्याकृतत्वाज्जीवभेदः कामक्रोधलोभाद्याविद्यगुणप्रधानोऽविद्यापरवशश्च। ईश्वरस्तु स्ववशवर्तिविविधपरिणामशीलमायाशक्त्याऽधिगतसार्वज्ञ्यसर्वैश्वर्यादिमहिमेत्यमीषामाशयः। योगतन्त्रनिष्ठानामीश्वरसमादरणरीतिमाह 'तथाऽन्ये' इति। औपाधिकमेवेश्वरत्वमेतन्मतेऽपीति तथेत्यनेनाभिप्रेतम्। स्वतन्त्रप्रकृतिपरिणामविशेषस्य यो विशेषो नित्योद्रिक्तसत्त्वकत्वरूपः प्रकृष्टसत्त्वप्रधानांशोपादानत्वप्रयुक्तः, तेन संपादिता सर्वैश्वर्यव्यवस्था यस्य तमीश्वरमाद्रियन्त इत्यर्थः। सदा शुद्धसत्त्वात्मकान्तःकरणादिरीश्वरोपाधिः। तदुपहितचैतन्यमात्रवपुः पुरुषविशेष ईश्वरः। उपाधिविशेषाधीनमेव तस्यैश्वर्यमिति भावः। यादवप्रकाशपक्षमाह 'अनुपहितमपी'ति। सिन्धुरिव फेनबुद्बुदतरङ्गभेदेन ब्रह्मैव जडजीवेश्वररूपेण भवतीति परिणामवादोऽयम्। प्रतिबिम्बवादमाह 'अपरिणामिनमपी'ति। 'तमेकमेव चेतन'-

मितरे रोचयन्ते । अन्ये तु स्वाधीनत्रिविधचेतनाचेतनस्वरूपस्थिति-प्रवृत्तिभेदं स्वाभाविकनिरवधिकातिशयज्ञानबलैश्वर्यवीर्यशक्तितेजः-प्रभृतिसकलकल्याणगुणगणमहार्णवं पुरुषविशेषमीश्वरमातिष्ठन्ते ।

तथा तद्विशेषेऽपि हरिहरविरिञ्चभास्करात्मना अनभिमत-

---

मित्यनेन मायोपहितं चैतन्यमीश्वरः । अन्तःकरणेषु मायिकेषु तस्यैव प्रतिविम्वभेदा जीवा इत्याभासलक्षणत्वं जीवानां विज्ञायते । यद्वा मायायां प्रतिविम्बितं चैतन्यमीश्वरः । तस्य मायांशभूतविचित्रान्तः-करणेषु प्रतिविम्वभेदा जीवा इति भावः । विश्वादिर्जागृतिस्वप्नसुषुप्त्य-भिमानी । सिद्धान्तिनां मतमाह 'अन्ये' त्विति । त्रिविधाश्चेतनाः—ज्ञातृत्ववन्तो वद्धमुक्तनित्याः । त्रिविधाश्चाचेतनाः—ज्ञातृत्वरहिताः प्रकृतिकालनित्यविभूतयः । ज्ञानरूपत्वेऽपि नित्यविभूतेरज्ञातृत्वाद-चेतनत्वम् । तेषां सर्वेषां स्वस्वाकारसंपत्तिः, निष्पन्नस्वरूपाणामुत्तरोत्तर-कालानुवृत्तिरूपा स्थितिः, प्रवृत्तिविशेषाश्च तत्तत्कार्यानुगुणा यदधीना एव सदा, स ईश्वरः । स च न निर्गुणः । किन्तु स्वाभाविकोत्कृष्टतम-षाड्गुण्यप्रभृत्यनन्तकल्याणगुणगणरत्नाकरः । निर्गुणत्वं चास्य हेयगन्धा-भावात् । अयं च पुरुषविशेषः—त्रिविधजीवात्मविलक्षणः पुरुषोत्तमः श्रियः—पतिरित्येतेषां हार्दम् ।

पुरुषविशेष ईश्वर इत्युक्तम । स किंनामरूप इत्यपेक्षायामाह 'तथा तद्विशेषेऽपी'ति । ईश्वरीयनामरूपादिविषयेऽपि नैकमत्यं वादिनामित्यर्थः । तथाहि—एक एवेश्वरो मूर्तिचतुष्टयं गृह्णाति कार्य-वशादित्येके । त्रिमूर्तिवादिनस्त्वादित्यरूपं परित्यजन्ति । हरिहरैक्य-वादिनस्तु ब्रह्मरूपमपि । शैवास्तु हर एवेश्वर इत्यभिमन्यन्ते । श्रीवैष्ण-

तत्तन्मूर्तिपरित्यागेन च चतुस्त्र्येकमूर्तितया विवदन्ते। मूर्तिविशेषविषयाश्च नित्यत्वानित्यत्वभौतिकत्वाभौतिकत्वस्वार्थपरार्थत्वादिवितर्काः प्रादुर्भवन्ति; परिजनस्थानादिगोचराश्च। तथा प्रमाणतोऽपि–आनुश्रविक एवेत्येके। आनुमानिकश्चेत्यन्ये। विशिष्टप्रत्यक्षसमधिगम्यश्चेत्यपरे।

तथा आत्मपरमात्मनोः संबन्धेऽपि–अनाद्यविद्योपादानभेदास्पदोऽयमीश्वरेशितव्यतादिरूपसंबन्धः। परमार्थतस्त्वेकं तत्त्वमिति केचित्। व्यतिरेकाभावेऽप्यतिरिक्तो जीव इत्यन्ये। स्वत-

---

वास्तु हरिरेवेत्यामनन्ति। एवं हैरण्यगर्भाणां सौराणां च तत्तदेकमूर्तिपक्षोऽप्यनुसन्धेयः। ईश्वरमूर्तिगतविशेषेष्वपि विप्रतिपत्तीराह 'मूर्ती'ति। स्वार्थत्वम्–स्वभोगसिद्ध्यर्थत्वम्। परार्थत्वम्–जीवानुग्रहैकार्थत्वम्। वितर्काः–विप्रतिपत्तयः। 'परिजने'ति। परिजनादयः सन्ति नेति, नित्याः अनित्या इति, प्राकृता अप्राकृता इति च पक्षभेदाः परिजनस्थानादावनुसन्धेयाः। 'प्रमाणतोऽपी'ति। सार्वविभक्तिकस्तसिल्। प्रमाणविषयेऽपीत्यर्थः। शास्त्रैकप्रमाणक इत्येके। आगमानुमानप्रमाणक इत्यपरे। श्रुतो मतश्च श्रुतितोऽनुमानतश्च प्रेमपूर्वानुध्यानसंस्कृतमनोग्राह्यश्चेति तु सिद्धान्तिनः॥

अथ जीवपरयोः संबन्धेऽपि विप्रतिपत्तीर्निर्दिशति 'तथा आत्मे'ति। अद्वैतिनां पक्षमाह 'अनादी'ति। अविद्याकृतभेदावलंबनत्वादीशेशितव्यत्वादेर्व्यावहारिकत्वमेव न परमार्थत्वमित्याशयोऽमीषाम्। प्रतिबिम्बपक्षाभिप्रायेणाऽऽह 'व्यतिरेके'ति। बिम्बतो भेदाभावेऽपि प्रतिबिंबानां भेदप्रतिपत्त्यादिगोचरत्वलक्षणोऽतिरेको–विशेषोऽस्तीति भावः। भास्करपक्षमाह 'स्वत' इति। स्वरूपतोऽभेदः।

स्त्वैक्यम्, उपाधितो भेद इति विशिष्टस्वरूपभावेन भिन्नाभिन्नत्वमितरे। नानात्वे सत्येवाऽभेदो नामान्वयः अंशांशिभावलक्षणः, समवायः परतन्त्रतालक्षणः, शेषशेषित्वरूपः, स्वस्वामिभावः, भृत्यस्वामिलक्षण इति च नानाविधा वादाः।

तथा परमपुरुषार्थभूते ब्रह्मप्राप्तिलक्षणमोक्षेऽपि—स्वरूपोच्छित्तिलक्षणः, अविद्यास्तमयलक्षणः, निःशेषवैशेषिकात्मगुणोच्छेद-

---

औपाधिको भेदः। भेदाभेदयोर्विरुद्धयोः केवलस्वरूप एवासंभवादित्याशयः। यादवप्रकाशपक्षमाह 'नानात्व' इति। अंशांशिभावलक्षण इत्यस्याऽन्वय इत्यनेन संवन्धः। अंशांशित्वाद्भेदाभेदोपपत्तिः। भेदसमानाधिकरणाभेदस्यैव तादात्म्यस्य सामानाधिकरण्यार्थत्वमिति हार्दमेतेषाम्। 'समवाय' इत्यादिः सिद्धान्तिनां पक्षः। नानासंवन्धोपगमाज्जीवपरयोः सिद्धान्ते नानासंवन्धकीर्तनम्। अंशांशिभावलक्षण इत्यस्य सिद्धान्तपक्षत्वमपि संभवति। परतन्त्रता—अपृथक्सिद्धिः तद्रूपः समवायः, न त्वतिरिक्तो वैशेषिकमतवदिति भावः। परगतातिशयाधानेच्छाप्रक्लृप्तस्वरूपादिकत्वं शेषत्वम्। यथेष्टविनियोगार्हत्वं स्वत्वम्। प्रेर्यचेतनत्वं भृत्यत्वमिति भिदा। एतत्प्रतिसंवन्धित्वलक्षणं च शेषित्वादीति बोध्यम्। भृत्यस्वामीति भावप्रधाननिर्देशः। भृत्यस्वामित्वलक्षण इति यावत्। तथैव वा पाठः संभाव्यते।

अथ मुक्तिस्वरूपे विप्रतिपत्तीराह 'तथा परमे'ति। ब्रह्मप्राप्तिलक्षणेति स्वाभिमतोक्तिः पराभिमतानां मुक्तिस्वरूपाणां पुरुषार्थत्वायोगसूचनार्था। चार्वाकाणां शून्यवादिनां च स्वरूपोच्छित्तिपक्षः। योगाचाराणां मायिनां वा पक्षो द्वितीयः। कणादादिपक्षस्तृतीयः। विशेष एव वैशेषिकः। साङ्ख्यपक्षस्तुरीयः। तद्भावसाधर्म्य-

लक्षणः, कैवल्यरूपः, तद्भावसाधर्म्यलक्षणः, तद्गुणसङ्क्रान्तिलक्षणः, तच्छायापत्तिलक्षणः, सांसिद्धिकानन्दादिस्वरूपाविर्भावलक्षणः, तद्गुणानुभवजनितनिरतिशयसुखसमुन्मेषोपनीतात्यन्तिकतात्किङ्करत्वलक्षण इति तथा तथा विवदन्ते।

तत्साधनतोऽपि–कर्मयोगलभ्यः, ज्ञानयोगलभ्यः, अन्यतरानुगृहीतान्यतरलभ्यः, उभयलभ्यः, उभयपरिकर्मितस्वान्तस्यैकान्तिकात्यन्तिकभक्तियोगलभ्य इति।

तदेवमनवसितविशेषविमर्शकजनविमतिदर्शनात्, तत्तत्पक्षसाधनबलाबलानवगमाच्च ततस्ततः सन्दिहानाः प्रेक्षावन्तो न ताव-

---

लक्षण इत्यद्वैतिनां स्यात्। तच्छब्दो ब्रह्मपरः। ब्रह्मभाव एव साधर्म्यं मुक्तिरिति। यद्वा–ब्रह्मरूपसाम्यप्राप्ति, ब्राह्मगुणप्राप्ति, ब्रह्मकान्तिप्राप्तिलक्षणमुक्तिभेदपरं पदत्रयम्। 'सांसिद्धिके'ति मीमांसकादीनां मतम्। 'तद्गुणे'त्यादि सिद्धान्तिनाम्। स्वरूपाविर्भावोऽप्यत्र गर्भितः। किङ्करत्वं सेवाकरणम्।

मुक्त्युपायेऽपि ता आह 'तत्साधनतोऽपी'ति। कर्मज्ञानसमुच्चयपक्षो यादवप्रकाशीयः। 'उभये'ति सिद्धान्तिपक्षः। कर्मयोगज्ञानयोगाभ्यां संस्कृतचेतस एव भक्तियोगो नाम परभक्तिरुदेति। कर्मज्ञानाद्यङ्गिका सैव परब्रह्मप्राप्तिलक्षणमोक्षसाधनम्। तस्याश्चैकान्तिकत्वं भगवदेकविषयत्वम्। आत्यन्तिकत्वं चाविच्छिन्नत्वम्। परज्ञानपरमभक्त्योरेतद्विपाकरूपत्वमेवेति भावः।

विप्रतिपत्तिप्रदर्शनस्य विचारारम्भोपयोगितां समर्थयति 'तदेव'-मिति। परीक्षकाणां विप्रतिपत्तिभेदे कस्मिंश्चिदपि वा पक्षे यावत्सत्प्रमाणतर्कमूलकत्वादिविशेषो नावधार्यते, तावत्तत्त्वे सन्देहो न निवर्तते। यावच्च निरुक्तविशेषानवधारणम्, न तावत्तत्तत्साधने व्याप्तिपक्षधर्मता-

त्परमपुरुषार्थाय घटेरन्, यावदयमात्मा परमात्मा च स्वरूपतः प्रमाणतः संबन्धतः प्राप्तितः तत्साधनतश्च न निर्णीयेतेति तत्प्रतिबोधायेदमारभ्यते ।

यद्यपि भगवता बादरायणेनेदमर्थान्येव सूत्राणि प्रणीतानि । विवृतानि च तानि परिमितगम्भीरभाषिणा द्रमिडभाष्यकृता ।

---

योगित्वलक्षणबलनिर्धारणम् । न च विरुद्धसाध्यसाधनयोर्वास्तविकव्याप्तिपक्षधर्मतोपपत्तिरेकस्मिन्नेव धर्मिणि । तथा च समबलतया प्रतीयमानानां नानापक्षसाधनानां सत्प्रतिपक्षभावेन साध्यनिर्णयो दुर्घटः । न चार्थसन्देहादेव मुक्तिः । तथा च पक्षभेदे जाग्रति यत्र वास्तवो विशेष इति विचारः प्राप्तावसरः । विचारेणान्यतमपक्षे विशेषावधारणे तु तत्पक्षसाधनस्याधिकबलत्वज्ञानात्सत्प्रतिपक्षभावनिवृत्तेस्तेनार्थतत्त्वनिर्णयोपपत्तिः । तत् मुक्तिसाधनोपयोग्यर्थतत्त्वनिर्णयायाऽऽत्मस्वरूपादिगोचरान्यतमपक्षस्य सत्प्रमाणतर्कमूलकत्वादिविशेषव्यवस्थापनपरस्य विचारग्रन्थस्याऽऽरम्भो युक्त एवेति समुदिताशयः ।

ननु—आत्मपरमात्मनोर्नानाविप्रतिपत्तिनिरसनार्थं पूर्वाचार्यप्रबन्धानां प्रवर्तनमेव कार्यम् । कृतं नूत्नप्रबन्धप्रणयनप्रवृत्त्येत्याशङ्कामन्तर्निधायाह 'यद्यपी'ति । इदमर्थान्येव—आत्मपरमात्मतत्संबन्धाद्यर्थतत्त्वनिर्णयार्थान्येव, सूत्राणि—ब्रह्ममीमांसासूत्राणि । एषामेव मुख्यं सूत्रत्वमिति स्कान्दोक्तम् "निर्विशेषितसूत्रत्वं ब्रह्मसूत्रस्य चाप्यतः । सविशेषाणि सूत्राणि ह्यपराणि विदो विदुः ॥ मुख्यस्य निर्विशेषेण शब्दोऽन्येषां विशेषतः । इति वेदविदः प्राहुः शब्दतत्त्वार्थवेदिनः ॥" इति । 'विवृतानी'ति । परिमितत्वं—शब्दसङ्क्षेपः । गभीरत्वम्—अर्थगांभीर्यशालित्वम् । द्रमिडभाष्यकृत्—द्रमिडाचार्य-

विस्तृतानि च तानि गम्भीरन्यायसा(ग)रभाषिणा श्रीवत्साङ्कमिश्रेणापि । तथापि आचार्यटङ्क-भर्तृप्रपञ्च-भर्तृमित्र-भर्तृहरि-ब्रह्मदत्त-शङ्कर-श्रीवत्साङ्क-भास्करादिविरचितसितासितविविधनिबन्धन-

---

संज्ञकः छान्दोग्यव्याख्यानस्य वाक्याभिधस्य टङ्काचार्यापराभिधान-ब्रह्मनन्दिकृतस्य भाष्यकर्ता । ब्रह्मसूत्राणामपि भाष्यं कृतमनेनेति एतच्छ्रीसूक्तिसन्दर्भादवगम्यते । 'विस्तृतानि चे'ति । तानि—द्रमिडाचार्यकृतब्रह्मसूत्रभाष्यवाक्यानि । 'विवरणग्रन्थे' इति शेषः । तानि—ब्रह्मसूत्राणि वा । श्रीविष्णुपुराणव्याख्याने विष्णुचित्तीये विवरणवाक्यानि समुद्धृतानि सन्ति । 'तथापी'ति । अयं भावः—यद्यपि पूर्वाचार्यप्रबन्धेष्वध्यात्मतत्त्वं सपरिकरं निरूपितमेवास्ति, अथापि पाश्चात्यैः ब्रह्ममीमांसादिव्याख्याच्छलेन नानामतानां प्रवर्तितत्वादाचाऽप्रामाण्यहेत्ववधारणात् तद्ग्रन्थेष्वपि श्रद्धायाः सिद्धान्तग्रन्थेष्विव संभवात् तेषु च विप्रतिपत्तिबाहुल्येन विचलितबुद्धयो नाञ्जसा तत्त्वज्ञानं प्राप्नुयुरिति तत्तन्मतसारासारविवेकोपयोगितत्तन्मतपरीक्षात्मकप्रकरणारम्भ आवश्यक एवेति । आचार्यटङ्कादिषु निर्दिष्टेषु केचित् सिद्धान्तिनः, अन्ये तु मतान्तरानुयायिनः स्युः । तत्प्रबन्धेषु च सितासितत्वम्—अस्फुटप्रतिपादकत्वमन्यथाप्रतिपादकत्वं च यथासंभवं योज्यम् । यद्वा—टङ्कश्रीवत्साङ्कावपि अत्र निर्दिष्टौ मतान्तरस्थौ वाक्यविवरणकर्तृभिन्नौ स्याताम् । वाक्यकर्तुर्टङ्कसंज्ञा च वेदार्थसङ्ग्रहटीकातोऽवगम्यते । 'तत्प्रतिपत्तये चे'ति । केचिदस्फुटतयाऽर्थतत्त्वमवगच्छन्ति, केचित्पुनः केनापि हेतुना मतान्तरग्रन्थेषु श्रद्धालवोऽत एव वञ्चितबुद्धयोऽन्यथैव प्रतिपद्यन्त इति अर्थतत्त्वस्य स्फुटप्रतिपत्तये अन्यप्रबन्धानां सितासितत्वप्रतिपत्तये च प्रकरणारम्भो युक्त एवेत्याशयः । पूर्वा-

श्रद्धाविप्रलब्धबुद्धयो न यथावत्, अन्यथा च प्रतिपद्यन्त इति युक्तः प्रकरणप्रक्रमः ॥ ( इत्युपोद्घातप्रकरणम् )

तत्र—देहेन्द्रियमनःप्राणधीभ्योऽन्योऽनन्यसाधनः ।
नित्यो व्यापी प्रतिक्षेत्रमात्मा भिन्नः स्वतः सुखी ॥ ३ ॥

---

च्चार्यप्रबन्धानां शास्त्ररूपाणां प्रकरणमिदमात्मसिद्ध्यादीति च हार्दम् । प्रकरणं चेदं शारीरकमीमांसायाः, न्यायतत्त्वशास्त्रस्य च । शास्त्रैक-देशार्थप्रतिपादनतत्परत्वे सति शास्त्रार्थप्रतिपत्त्युपयोगि ( विरोधिमत-निरासादि ) कार्यान्तरव्यापृतिमत्त्वं प्रकरणत्वम् । तदुक्तम् "शास्त्रै-कदेशसंबद्धं शास्त्रकार्यान्तरे स्थितम् । मतं प्रकरणं नाम" इति ॥

प्रथमं तावदात्मतत्त्वमुपवर्णयति 'तत्रे'ति । 'देह' इति । निरूपणीय-तयोपक्षिप्तेषु घटकीभूत आत्मा देहादितो विलक्षणः स्वयंप्रकाशः नित्यः सूक्ष्मतया सर्वव्याप्तिक्षमः प्रतिशरीरं भिन्नः आनन्दस्वभाव इत्यर्थः । धीः—विषयप्रकाशकं ज्ञानमात्मनो धर्मभूतम् । तदाधार-त्वात्तद्विलक्षणत्वम् । अनन्येन स्वेन साधनं सिद्धिः प्रकाशो यस्य सोऽनन्यसाधनः । नित्यत्वमुत्पत्तिविनाशरहितत्वम् । व्यापीत्यनेना-णुसूक्ष्मत्वं फलितम् । स्वतः सुखी—स्वरूपत एवानुकूलप्रकाशलक्षण-सुखवान् । सुखस्वरूप इति यावत् । यद्वा स्वाभाविकमानन्दित्व-मस्य; दुःखित्वं त्वौपाधिकमेवेति भावः ॥ ३ ॥

ननु देहमेवात्मानं प्रत्यक्षतः प्रतिपद्यामहे । अहं जानामीति ज्ञाता ह्यात्मा अहमिति चकास्ति । देहश्चाहङ्कारगोचरः, स्थूलोऽहं कृशोऽहमिति दर्शनात् । देहस्य हि स्थौल्यादियोगः । अतस्तत्समानाधिकरणतयाऽयमहङ्कारः शरीरालम्बन इत्यवश्याश्रयणीयम् । इतरथा सकललौकिकपरीक्षकव्यवहारोपरोधश्च । न चायं लाक्षणिको व्यवहारः; मुख्यवृत्तिभूमेः पृथगसिद्धत्वात् । न

---

उक्तमात्मतत्त्वमसहमानः शरीरात्मवादी चार्वाकः प्रत्यवतिष्ठते 'ननु देहमेवे'ति । प्रत्यक्षं हि मुख्यं प्रमाणम् । न च तदतिलङ्घनेन कश्चनार्थः साधयितुं शक्यते । प्रत्यक्षं च स्थौल्यादियोगिनं देहमेव ज्ञातारमहमर्थमात्मानं प्रतिपादयतीति देह एवात्मेति भावः । देहस्यैवाहंबुद्धिविषयत्वमुपपादयति 'देहश्चे'त्यादिवाक्यद्वयेन । 'अत' इति । तत्समानाधिकरणतया—देहाभिन्नार्थविषयकतया । इत्थंभावे तृतीया । अयमहङ्कारः—स्थूलोऽहमित्यहंप्रत्ययः प्रत्यक्षरूपः । शरीरालम्बनः—शरीरविषयकः । शिष्टं स्पष्टम् । प्रत्यक्षातिक्रमे दोषमाह 'इतरथे'ति । प्रत्यक्षमूला हि व्यवहाराः समुपलभ्यन्ते पण्डितपामरसाधारणा अर्थक्रियाकारिणो मुख्या एव । तद्विरोधः प्रत्यक्षातिक्रमे प्रसज्यत इत्यर्थः । ननु 'स्थूलोऽहं जानामी'ति प्रतीतिर्भ्रान्तिरेव पामराणाम् । पण्डितानां त्वतिरिक्तात्मगोचरैवाहं जानामीति । अहं स्थूल इति तु व्यवहारः पण्डितानां लाक्षणिक इत्याशङ्कामनूद्य प्रतिक्षिपति 'न चाय'मिति । अयं व्यवहारो लाक्षणिक इति च नेत्यन्वयः । वाच्यमिति शेषः । प्रतिक्षेपयुक्तिमाह 'मुख्ये'ति । अहंपदशक्तिविषयस्य देहव्यतिरिक्तस्यानुपलम्भनिरस्तत्वाद्देह एव मुख्यत्वमहम्प्रत्ययव्यवहारयोरिति भावः । जानाम्यह—

चानेकावयवयोगिशरीरालम्बनत्वे ज्ञात्रवभासस्य तदीयरूपावयवाद्यवभासेनान्वयिना भवितव्यम्, येन तदन्वयाभावात् जानामीति प्रत्ययः शरीरातिरिक्तमवगमयेत्। बाह्येन्द्रियप्रत्यक्ष एव तथा नियमदर्शनात्। स्वान्तस्याऽऽन्तरगुणाधारतावभास एव सामर्थ्यनियमात्। अनवधृतावयवविशेषस्याप्यनेकावयवयोगिनो महिमगुण-

---

मिति ज्ञातृत्वप्रतीतेर्देहगोचरत्वेऽनुपपत्तिमाशङ्कते 'न चे' त्यादिना। अन्वयिना—नियतेन। सावयवार्थप्रत्यक्षत्वव्यापकं तदवयवादिप्रकाशकत्वमिति नियमो नेति भावः। सति नियमे यत्प्रसक्तं तदाह 'येने'ति। इति सिध्येदिति शेषः। तदन्वयाभावात्—शरीरावयवादिप्रकाशान्वयाभावात्तदप्रकाशकत्वाच्छरीरातिरिक्तमेवावगमयेदहं जानामीति। न तु शरीरं सावयवमिति नियमफलम्। ज्ञातृत्वप्रत्यक्षं शरीराविषयकम्, तदवयवाविषयकत्वात्। यद्यदवयविविषयं तत्तदवयवगोचरम्, यथा घटादि प्रत्यक्षमित्यत्र प्रयोगे निरुक्तनियमस्योपयोगः। निरुक्तनियमस्यासंभवे हेतुमाह 'बाह्ये'ति। सहचारदृष्टेर्हि नियमविज्ञानम्। सहचारश्च बाह्यप्रत्यक्ष एव दृष्ट इति तद्विषय एव निरुक्तनियम इति भावः। ननु भवतु सहचारदर्शनं बाह्य एव। नियमस्त्वसङ्कोचात्प्रत्यक्षमात्रगोचरोऽस्त्वित्यत्राह 'स्वान्तस्ये'ति। आन्तरो गुणो ज्ञानसुखादिर्योग्यः। तदाधारत्वमात्रेण धर्म्यवभासकत्वं मनसः। नतु धर्मान्तरस्य। बहिरस्वातन्त्र्यान्मनसः। तथाच रूपसावयवत्वादिग्रहासंभवात् मनसा ज्ञातृत्वमात्रेण शरीरग्रह इति प्रत्यक्षसामान्ये नियमो नोपसंहर्तुं शक्यत इति भावः। बाह्यत्वेऽपि शरीरस्य ज्ञानाद्युपरागेणान्तरत्वमित्यभिमानः। अवयविगोचरबाह्यप्रत्यक्षत्वव्यापकं तदवयवगोचरत्वमिति नियमेऽपि व्यभिचारमाह 'अनवधृते'ति। त्र्यणुकचाक्षुषे-

शालिनः त्र्यणुकस्य प्रथमप्रत्यक्षाभ्युपगमात् । वायोश्च त्वगिन्द्रियेण स्पर्शाधिष्ठानमात्रतयोपलम्भदर्शनाच्च । देहव्यतिरिक्तात्मगोचरत्वेऽपि यथा तदीयगुणान्तराग्रहणम्, तथेहापि । यथा तत्र बाह्यप्रत्यक्षगोचर एव सङ्ख्यापरिमाणादिग्रहणनियमः ।

---

ऽतीन्द्रियत्वेन तदवयवस्याग्रहाद्व्यभिचार इति भावः । अनेकावयवयोगिनः—अनेकावयवसमवेतस्य, स्वसमवेतसमवायेनानेकावयवविशिष्टस्य । महिमगुणशालिनः—महत्परिमाणवतः । त्रसरेणुप्रत्यक्षानन्तरं चाक्षुषद्रव्यत्वादिना तस्य सावयवत्वानुमानादुपनीतद्व्यणुकभानं द्वितीयादित्र्यणुकप्रत्यक्षे संभवतीति व्यभिचारस्थलं त्र्यणुकप्रत्यक्षं प्रथमत्वेन विशेषितम् । ननु योग्यावयवकावयविबाह्यप्रत्यक्षस्य तदवयवगोचरत्वमिति नियमोऽस्त्विति चेत्तत्रापि तं दोषमाह 'वायोश्चे'ति । स्पर्शवत्त्वमात्रेण वायुस्पार्शने तदवयवविषयकत्वाभावात्तत्र व्यभिचारो निरुक्तनियमस्येति भावः । सत्येवावधाने वाय्ववयवादिग्रहः । अन्यदा तु त्वक्सन्निकृष्टस्य वायोः स्पर्शवत्त्वेनैवोपलम्भ इत्यभिमानः । अहं जानामीति प्रतीते रूपाद्यविषयत्वेन शरीराविषयत्वसाधनेऽप्रयोजकत्वमाह 'देहव्यतिरिक्ते'ति । ज्ञातृत्वप्रतीतेरित्यादिः । तदीयगुणान्तरम्—आत्मनिष्ठसङ्ख्यादि । 'तथेहापी'त्यनन्तरमुपपद्यत इति शेषः । अयं भावः—द्रव्यग्राहीन्द्रियस्य योग्यसन्निकृष्टतद्गुणग्राहकत्वमिति नियमः । तथा चातिरिक्तात्मवादे यथा सङ्ख्यादीनां तद्गुणानामयोग्यत्वान्न मनसा ग्रहः एवं देहात्मवादेऽपि तदीयरूपादेरयोग्यत्वादेव न मनसा ग्रह इति । न च रूपवद्द्रव्यप्रत्यक्षे रूपग्रहणं नियतमिति वाच्यम् । घटादिस्पार्शनेऽनैकान्त्यात् । 'यथा तत्रे'ति । यथा तत्र—अतिरिक्तात्मवादे बाह्यप्रत्यक्ष एव द्रव्यग्राहिणस्तद्गतसङ्ख्यादिग्राहित्वमिति नियम्यते, तथा देहात्मवादेऽपि नियम्यतामिति भावः । 'तथेहापी'तिं पुनरनुसन्धेयम् ।

एवं च प्रत्येकं परमाणुषु चैतन्यानुपलब्धेः, तदभ्युपगमे चैकशरीर एवानेकसहस्रचेतनापातात्, अकारणगुणपूर्वकस्य कार्यद्रव्यवर्तिनो विशेषगुणस्यासम्भवान्न शरीरविशेषगुणश्चैतन्यम्, अयावच्छरीरभावित्वाच्चेत्यादयोऽनुमानभेदाः प्रत्यक्षबाधितविषयतया न पराक्रमितुं क्षमन्ते। विशेषगुणत्वे च प्रतिषिध्यमाने देहगुणत्वाभ्यु-

---

एवमहं जानामीति प्रत्यक्षस्य देहविषयकत्वं समर्थितम्। अनेन देहचैतन्यबाधकानुमानानां बाधितत्वमाह 'एवं चे'ति। चैतन्यं न शरीरविशेषगुणः आकारणगुणपूर्वकत्वात्, अयावद्द्रव्यभावित्वाद्वा संयोगवदिति देहचैतन्ये बाधकमनुमानम्। तत्र प्रथमहेतोरसिद्धिं परिहरति 'प्रत्येक'मित्यादिना। ननु परमाणुषु देहारंभकेषु चैतन्यं मास्तु। येनानेकचेतनप्रसङ्ग एकस्मिन् देहे। अकारणगुणपूर्वकश्च रूपादिः पाकजो दृष्टः। तद्वद्भवतु चैतन्यमित्यत्राह 'कार्यद्रव्ये'ति। पीलुपाकोऽत्राभिमतः। तथा च कार्यद्रव्यविशेषगुणत्वव्यापकं स्वसमवायिसमवायिवृत्तिसजातीयगुणासमवायिकारणकत्वरूपं कारणगुणपूर्वकत्वम्। व्यापकनिवृत्त्या च चैतन्ये शरीरविशेषगुणत्वस्य निवृत्तिरिति भावः। द्वितीयानुमाने च यो यः कार्यद्रव्यविशेषगुणः स स यावद्द्रव्यभावीति सामान्यतो व्यतिरेकव्याप्तिः पीलुपाकनयेन वाच्या। 'इत्यादय' इत्यादिपदेन चैतन्यं न देहस्य विशेषगुणः तन्निष्ठविशेषगुणान्तरवैधर्म्यादित्यनुमानं ग्राह्यम्। न पराक्रमितुं क्षमन्ते—देहचैतन्यं बाधितुं न प्रगल्भन्ते। कुतः? प्रत्यक्षबाधितविषयतया। प्रत्यक्षबाधेन निरुक्तानुमानानामेव नोदयः संभवति। प्रबल उपजीव्यत्वेन प्रत्यक्षप्रमाणबाधनं च दुर्बलैरेतैरनुमानैर्दुष्करमिति भावः। अयावद्द्रव्यभाविनामकारणगुणपूर्वकाणामपि संयोगादीनां शरीरगुण-

पगमप्रसङ्गश्च । अपि चेच्छानुविधायिक्रियत्वेन्द्रियवत्त्वादयः शरीरे दृश्यमानाः संप्रतिपन्नाचैतन्याद्धटादेरत्यन्तव्यावर्तमानाः शरीरमेव चेतनमवगमयन्ति । क्रमुकफलताम्बूलदलावयवादिषु प्रत्येकमविद्यमानस्यापि रागस्येवावयविनि संयोगविशेषात्, देहारम्भकपरमाणुसंश्लेषविशेषादेव देहे चैतन्यस्याप्याविर्भावो नानुपपन्नः ।

---

त्वदृष्टैर्निरुक्तहेतुभिरपि चैतन्ये शरीरगुणत्वस्याभावो न साधयितुं शक्यत इत्याशयेनाह 'विशेषे'ति । शरीर एवोपलम्भाच्चैतन्यं तद्गुण एव । निरुक्तहेतुभिस्तद्विशेषगुणत्वनिषेधनेऽपि न क्षतिः । पारिभाषिकं हि विशेषगुणत्वम् । भावनान्यो यो वायुवृत्तिवृत्तिस्पर्शावृत्तिधर्मसमवायी तदन्यत्वे सति गुरुत्वाजलद्रवत्वान्यगुणत्वं विशेषगुणत्वमित्यत्र गुरुत्वादेरेव ज्ञानादेरप्यन्यत्वं प्रक्षिप्यतामिति भावः । अकारणगुणपूर्वकत्वादिहेतूनामप्रयोजकत्वाच्छरीरविशेषगुणत्वेऽपि ज्ञानादेर्न क्षतिरित्यभिप्रयन्नाह 'अपि चेच्छे'ति । शरीरविशेषगुणान्तरवैधर्म्याज्ज्ञानस्याशरीरविशेषगुणत्वं चेदिष्यते, तर्हि संप्रतिपन्नाचेतनघटादिविधर्मत्वाद्देहस्य चैतन्यवत्त्वमेव कुतो नेष्यते लाघवादिति भावः । इन्द्रियवत्त्वादय इत्यादिपदेन प्राणवत्त्वं ग्राह्यम् । इच्छानुविधायिक्रियत्वं—साक्षादिच्छाधीनप्रवृत्तिमत्त्वं देहस्य । घटादेस्तु देहव्यापारद्वारकमेव तदिति भावः । शरीरं चेतनावत् इच्छानुविधायिक्रियत्वादिन्द्रियादिमत्त्वाद्वा यन्नैवं तन्नैवं यथा घटादीति व्यतिरेकानुमानं च देहस्य चैतन्येऽत्र वाक्ये गर्भितम् । कार्यद्रव्यविशेषगुणत्वस्य कारणगुणपूर्वकत्वव्याप्तावनैकान्त्यमप्याह 'क्रमुके'ति । क्रमुकफलसंमिश्रचूर्णकोपलिप्तताम्बूलपत्रस्य दन्तसङ्घट्टनैः पूर्वावयवविनाशे तदवयवानां संश्लेषविशेषतो निष्पन्ने पिण्डितावयविनि रक्तं रूपमवयवेष्वविद्यमानं संश्लेषविशेषत एव

चर्वणजनितहुतवहसंयोगसंपादितपाटलिमभिः परमाणुभिर्द्व्यणुकादिक्रमेण कारणगुणपूर्व एव तत्र रागोदय इति चेत्; नः प्रमाणाभावात्। अपि च सितासितादितन्तुषु प्रत्येकमविद्यमानमपि चित्ररूपं विशेषगुणं तदारब्धे पटे स्फुटमुपलभमानाः कथं कारणगुणपूर्वकत्वमुक्तगुणस्याध्यवस्येम ?। न चावयवरूपातिरेकेणावयविनि

---

तेषामुत्पन्नमिति तत्र व्यभिचार इति भावः। आक्षिपति 'चर्वणे'ति। दन्तसंमर्दैः पूर्वावयविनो द्व्यणुकपर्यन्तस्य नाशे परमाणुषु स्वतन्त्रेषु चर्वणोद्भूतमुख्याग्निसंयोगलक्षणपाकवशाद्रक्तरूपस्योत्पत्तेः कारणगुणपूर्वकमेव पिण्डितावयविनि रक्तं रूपमिति न व्यभिचार इति भाव आक्षेप्तुः। परिहरति 'न प्रमाणाभावा'दिति। संश्लेषविशेषस्यैव क्वचिद्रूपान्तरप्रयोजकत्वमेष्टव्यम्। यथा हरिद्राचूर्णे चूर्णकजलसंयोगेनैव हि रक्तं रूपं दृष्टम्। तथात्रापि संभवात् पाककल्पनायां मानाभाव इति भावः। चर्वणस्थले पीलुपाकेनैव रूपान्तरमित्याग्रहेऽपि स्थलान्तरे व्यभिचारमाह 'सितासिते'ति। न हि चित्रपटस्थलेऽवयवेषु पाकसंभवः। न चावयवेषु चित्रं रूपम्। तथा चावयविविशेषगुणस्य स्वसजातीयावयवगुणपूर्वकत्वमिति नियमस्य चित्ररूपेऽनैकान्त्यमिति भावः। साजात्यं रूपत्वाद्यवान्तरजात्या विवक्षितम्। न हि नीलतन्तुभिः शुक्लपटारंभः। रूपत्वादिना साजात्यविवक्षायां तु तस्यापि प्रसङ्ग इति। ननु चित्रं नाम रूपान्तरं नेष्यते। न चैवं नानारूपतन्तुभिरारब्धश्चित्रपटो नीरूपः स्यात्। रूपादेर्व्याप्यवृत्तित्वनियमादव्याप्यवृत्तिनानारूपवत्त्वस्य तस्मिन्नुपगमासंभवादिति वाच्यम्। अवयवरूपेणैव चाक्षुषत्वोपपत्तौ चित्रपटस्य नीरूपत्वेऽपि क्षतिविरहात्। समवायस्वसमवायिसमवेतत्वान्यतरसंबन्धे-

चित्रं नाम रूपान्तरं नास्त्येव । अवयविनोऽचाक्षुषत्वप्रसङ्गात् । अवयवरूपैरेव तदुपपादने सर्वमेव कार्यद्रव्यं नीरूपमापद्येत । अनुभवविरोधः, सर्वव्यवहारविरोधश्च । विशेषगुणश्च काठिन्यं करकद्रव्यवर्ति अकारणगुणपूर्वकं दृश्यत इत्यनेकान्तश्च । न च संयोगविशेषः काठिन्यम्; तस्य द्विष्ठत्वात्; अस्य तु करकद्रव्यैकवर्तित्वात्; स्पर्शविशेषतया पदार्थविद्भिरभ्युपगमाच्च ।

---

नोद्भूतरूपस्य द्रव्यचाक्षुषे हेतुत्वोपगमादिति चेदत्राह 'सर्वमेवे'ति । एवमवयवरूपेणैव चाक्षुषोपपत्तेः सर्वस्याप्यवयविनो रूपवत्त्वं नेष्यतामित्यर्थः । इष्यत एवमेव लाघवादित्यत्राह 'अनुभवे'ति । साक्षाद्रूपवत्त्वोपलम्भव्यवहारयोरबाधितयोः सत्त्वादिष्टापत्तिर्नीरूपत्वेऽवयविनः कर्तुं न शक्यत इत्यर्थः । चित्रः पट इति चाबाधितप्रतीतिव्यवहारतश्चित्रं रूपमप्येष्टव्यमिति भावः । नन्ववयवनानारूपैरव्याप्यवृत्त्येव नानारूपं चित्रपट उपेयते प्रतीतिबलात् । तथा च न तत्र व्यभिचार इत्यत्राह— 'विशेषगुणश्चे'ति । जलीयस्य करकस्यावयवसंश्लेषविशेषादारम्भकसहकारिवैचित्र्याच्च द्रवत्वरहितस्य कठिनस्पर्श उपलभ्यमानो न कारणगुणपूर्वकः । जलपरमाणुषु कठिनस्पर्शस्याभावात् । तथा च करकस्पर्शे कारणगुणपूर्वकत्वनियमस्य व्यभिचार इति भावः । नन्ववयवसंयोगविशेष एवास्तु काठिन्यम् । तथा च कानैकान्त्यमित्यत्राह 'न च संयोगे'ति । अवयवसंयोगविशेषस्य काठिन्यरूपत्वे तस्यावयविन्यवृत्तेः कठिनः करक इति प्रतीतिव्यवहारौ न स्याताम् । कथञ्चित्तदुपपादनेऽपि चाक्षुषद्रव्यवृत्तिसंयोगस्य चाक्षुषत्वात्काठिन्यस्य चक्षुषाऽप्युपलंभप्रसङ्ग इति भावः । 'स्पर्शविशेषतये'ति । त्वङ्मात्रग्राह्यगुणत्वात्काठिन्यं स्पर्शविशेष एवेति साम्प्रतम् । पदार्थविद्भिः काणादैः स्पर्शविशेषतयैव च तदभ्युपगतमिति भावः ।

दृश्यस्य देहस्य कथं द्रष्टृत्वमिति चेत्; को विरोधः ? । अयमेव यदेकस्यां क्रियायामेकस्य कर्मत्वं कर्तृत्वं च न घटत इति । यद्येवम्, व्यतिरेकवादे वा कथमात्मनि अहमिति प्रत्ययः । रूपभेदादिति चेत्, समानमिदं देहात्मवादेऽपि । अपि च परसमवायिक्रियाफलगामि कर्म । स्वसमवेतज्ञानफलभागिनः शरीरस्य कर्मत्व-

---

देहात्मवादे कर्तृकर्मभावविरोधमाशङ्क्य परिहरति—'दृश्यस्ये'त्यादिना । 'को विरोध' इति । विरुद्धार्थे हि कथन्ता । द्रष्टुर्दृश्यत्वेऽविरोधात्का नाम कथन्तेति भावः । विरोधमाह 'अयमेवे'ति । तत्क्रियायां तदैव कस्यचित्कर्तृत्वं कर्मत्वं च न युक्तम् । क्रियया आप्तुमिष्टतमं हि कर्म साध्यरूपम् । क्रियाश्रयः कर्ता च सिद्धरूपः । सिद्धसाध्ययोर्नैक्यं संभवतीति विरोधः कर्तृकर्मत्वयोरिति भावः । आक्षेप्तुर्मुखेनैव समाधिं वाचयितुं प्रतिवन्दीमाह 'यद्येव'मिति । समाधिमाहाक्षेप्ता 'रूपभेदा' दिति । समाधितौल्यमुत्तरमाह देहात्मवादी 'समान'मिति । यथा अतिरिक्तात्मवादेऽहन्त्वादिना कर्मत्वम्, मनःसंयोगवत्त्वादिना च कर्तृत्वं ज्ञानक्रियायामित्याकारभेदादविरोध उच्यते, तन्न्यायस्य न देहात्मवादे दण्डनिवारणमिति भावः । वस्तुतो यादृशस्य कर्मत्वस्य कर्तृत्वेन विरोधः, न तादृशं ज्ञानकर्मत्वम् । अतोऽपि न दोष इत्याह—'अपि च परे'ति । 'स्वसमवेतज्ञानफलभागिन' इति । स्वनिष्ठज्ञाननिरूपितविषयतावत इत्यर्थः । विषयताया विषयिनिरूप्यत्वात् ज्ञानफलत्वोपचारः । 'कर्मत्वमेव नास्ती'ति । मुख्यं कर्मत्वं नास्तीत्यर्थः । अयं भावः—परसमवेतक्रियाजन्यफलाश्रयत्वं मुख्यं कर्मत्वम् । यथा ग्रामस्य गमनकर्मत्वम् । विषयविषयिभावलक्षणममुख्यमेव तु ज्ञानादिकर्मत्वम् । सवि-

मेव नास्तीति न पर्यनुयोगावकाशः। अतो देह एवात्मेति बार्हस्पत्याः। तथाच "पृथिव्यापस्तेजो वायुरिति तत्त्वानि, तेभ्यश्चैतन्यं, किण्वादिभ्यो मदशक्तिवत्" इति सूत्रम्।

(इति देहात्मत्वपूर्वपक्षप्रकरणम्)

---

षयार्थकधातुयोगे कर्मत्वं विषयतारूपमिति हि तार्किकाणां समयः। अस्य ज्ञानकर्तर्यप्युपगमान्नात्मानं जानातीत्यादेरनुपपत्तिः। मुख्यस्यैव तु कर्तृत्वेन विरोध इति। नचामुख्यमिदं कर्मत्वं नानुशासनसिद्धमिति वाच्यम्। 'कर्तुरीप्सिततमं कर्मे'त्यस्यैव तन्त्रेणास्मिन्नपि प्रमाणत्वोपगमात्। कर्तुः ज्ञातुः, क्रियया—ज्ञानेन, आप्तुमिष्टतमं—ज्ञातव्यत्वेनाभिमतं कर्मेति चात्र पक्षेऽक्षरार्थो वाच्यः। अनिष्टस्य ज्ञातस्य तु 'तथा युक्तं चानीप्सित'मित्यनेनैव क्रियायुक्तं—ज्ञानेन विषयतया संबद्धं अनीप्सितं ज्ञेयत्वेनेच्छाऽविषयभूतमपि कर्मेति चार्थोऽमुख्यकर्मत्वपक्षे। व्यवहारस्य ज्ञानफलत्वेऽपि तदाश्रयत्वाभावान्न विषयस्य मुख्यं कर्मत्वम्। आत्मनः स्वव्यवहाराश्रयत्वेऽपि तद्धेतुस्वगोचरस्वनिष्ठज्ञानस्य न परसमवेतत्वमिति न तत्। व्यवहारानुगुण्यलक्षणज्ञानफलविवक्षायां तु विषयस्य घटादेर्ज्ञानकर्मत्वं मुख्यं स्यान्नाम। अधिकमग्रे वक्ष्यामः। समर्थितं देहात्मत्वं निगमयति 'अत' इति। बार्हस्पत्याः—बृहस्पतिप्रणीतलोकायततन्त्रनिष्ठाश्चार्वाकाः। ऐश्वर्यमहिमक्षयायासुराणां वैदिकश्रद्धाविलोपकं मोहकं तन्त्रं निर्मितं सुरगुरुणा सुरेन्द्रानुनयविवशेनेति च प्रसिद्धिः। देहस्यैव चैतन्ये तत्सूत्रं प्रमाणयति 'तथा चे'ति। पृथिव्यादीनि चत्वार्येव भूतानि तत्त्वानि। तैः संहत्य निष्पादिते देहे प्रत्येकमसदपि चैतन्यमुद्भवति। किण्वादिभ्यो निष्पादिते सुराद्रव्य इवापूर्वा मदशक्तिरिति सूत्रार्थः।

अत्र प्रतिविधिर्देहो नात्मा प्रत्यक्षबाधतः ।
न खल्वहमिदङ्कारावेकस्यैकत्र वस्तुनि ॥ ४ ॥

अहं जानामीति प्रत्यग्वृत्तिरहमिति मतिरिदङ्कारगोचराच्छरीरान्निष्कृष्टमेव स्वविषयमुपस्थापयति घटादेरिव । पराग्वृत्तिरिदमिति शरीरविषयिणी च शेमुषी स्वविषयमहङ्कारगोचराद्विवेचयति यथाऽयं घट इति । इतरथा स्वपरविभागानुपपत्तेः । न चैकस्मिन्नेव रूपभेदादेवं प्रतीतिः । न हि देवदत्तो दण्डिनमात्मानं दण्ड्ययमिति प्रत्येति ।

---

अथ देहात्मवादनिरासः 'अत्र प्रतिविधि'रित्यादिना । अत्र—देहस्यात्मत्वे, **प्रतिविधिः**—प्रतिविधानम्, बाधकप्रमाणम् । बाधो वा । उपन्यस्यत इति शेषः । 'प्रत्यक्षबाधतः' इति । इदंत्वेन ग्रहणमेव हस्तगेहादेरिव देहस्यात्मभेदग्रहलक्षणं तस्यात्मत्वे बाधकमित्यर्थः । एतदेवोपपादयति 'न खलु' इति । अहमिदंकारौ—अहमिदंप्रत्ययौ । स्वात्मगोचरोऽहंप्रत्ययः, स्वान्यगोचरश्चेदंप्रत्ययः एकस्य पुंस एकस्मिन्नेवार्थे न घटत इत्यर्थः । विवृणोत्येतत् 'अहं जानामी'त्यादिना । प्रत्यग्वृत्तिः—प्रत्यगर्थात्मविषयिणी । निष्कृष्टं—विलक्षणम् । पराग्वृत्तिः आत्मान्यविषया । अहङ्कारगोचरात्—अहंप्रत्ययविषयात् स्वात्मनः । शिष्टं स्पष्टम् । 'इतरथे'ति । इतरथा—अहमिदंप्रतीत्योर्विलक्षणार्थविषयकत्वाभावे । अयं भावः—अहमिति स्वस्मै भासमानः प्रत्यगर्थः स्वात्मा । स्वस्मा इदन्त्वेनं भासमानश्च परागर्थः पर इति स्वपरविभागो हि अहमिदंबुद्धिशब्दाभ्यामेव निरूप्यः । अर्थवैलक्षण्याभावे तयोरयं न घटत इति । अहमर्थस्यैव भवत्वाकारान्तरेण भानमिदंत्वेनेत्यत्राह 'नही'ति । प्रत्यक्त्वेनाहमिति भासमानस्यैव स्वात्मनोः दण्डित्वेनेदमिति भानं स्याद्दण्ड्ययमितीत्यर्थः ।

अन्यच्च, नियमितवहिरिन्द्रियवृत्तेरवहितमनसोऽहमिति स्वात्मानमवयतः करचरणोदराद्यवयवा न भासन्ते। स्थवीयसि चावयविनि शरीरेऽहमिति मतिगोचरेऽभ्युपगम्यमानेऽवश्यमवयवप्रतिभासेनाप्यन्वयिना भाव्यम्। न ह्यस्ति संभवः—अवयवी स्थवीयान् प्रचकास्ति; अवयवास्तु न केचन प्रथन्त इति। यत्तु त्र्यणुके व्यभिचार इति; तन्न। वातायनविवरदृश्यनिर्भागत्रसरेणुव्यतिरेकेण परमाणुस्वीकारे कारणाभावात्। प्रत्यक्षयोग्यावयवस्य तथा प्रतिभासनिय-

---

नन्वयमहमस्मीत्यादिप्रत्ययो भवत्येव स्वात्मनि। सत्यम्। तत्रापीदंशब्देन पराग्रूपधर्मोल्लेखः। आत्मस्वरूपस्योल्लेखोऽहमिति। तथा च प्रत्यग्वृत्तिरहंकारः, पराग्वृत्तिरिदङ्कार इति व्यवस्थायां नानुपपत्तिरिति हार्दम्।

ननु ममेदं वपुरिति ममायमात्मेतिवत्स्यादित्यरुचेराह 'अन्यच्चे'ति। हेत्वन्तरं च देहस्यानात्मत्वेऽस्तीति यावत्। तदेवाह 'नियमिते'ति। निवारितबहिरिन्द्रियप्रवृत्तेर्मानसमहमिति स्वात्मानुसन्धानं न देहगोचरम्, करचरणाद्यविषयकत्वात्। अवयविनः स्थूलस्य ग्रहणे कतिपयतदवयवभानस्यावर्जनीयत्वादिति भावः। अवहितमनसः—आत्मग्रहणेदंपरमनसः। अवयतः—जानतः। स्थवीयान्—अतिशयेन स्थूलः। प्रत्यक्षग्राह्यावयवसमवेत इति विवक्षितम्। अवयविग्रहणस्य तदवयवगोचरत्वमिति नियमस्य त्र्यणुकग्रहणेऽनैकान्त्यं वारयति 'वातायने'ति। जालरन्ध्रप्रविष्टरविकरग्राह्यनिरवयवत्र्यणुकातिरेकेण तदवयवावयवपरमाणुकल्पनायां प्रमाणाभावादित्यर्थः। त्रसरेणोर्निरवयवत्वान्न तद्ग्रहणे निरुक्तनियमस्य व्यभिचार इति भावः। परमाणुकल्पनामुपगम्याप्याह 'प्रत्यक्षे'ति। प्रत्यक्षयोग्या अवयवा यस्य, तस्यावयविनः अवयवभान-

भाद्वा न व्यभिचारः। न चावयविनि वहिरिन्द्रियग्राह्य एवायं नियम इत्युत्प्रेक्ष्यम्। प्रमाणाभावात्। अन्तःकरणस्य च केवलस्यावयविनि वृत्त्यसम्भवाच्च। वायोस्तु रूपाद्यभावात् केवलस्पर्शाधारतयोपलम्भः। तत्रापि तादृशानेकावयवप्रतिभासोऽस्त्येव स्पृश्यमान इव घटादाविति न तेन व्यभिचारः।

---

व्याप्यभानवत्त्वनियमान्न त्र्यणुकप्रत्यक्षे व्यभिचारः। तदवयवस्यातीन्द्रियत्वादिति भावः। 'न चावयविनी'ति। वाह्येन्द्रियजप्रत्यक्ष एवावयविभाननियतत्वमवयवभानस्येति कल्पनं स्वोत्प्रेक्षणमात्रम्। अवयविप्रत्यक्षत्वव्यापकत्वस्यावयवभाने स्वीकारे वाधकोपलम्भो हि वाह्यतत्प्रत्यक्षमात्रविषयकतया नियमसङ्कोचे मानम्। तदभावादिति भावः। ननु मनसा केवलमवयवि गृह्यते विनाऽवयवमित्यत एव नियमः सङ्कोचनीय इति चेत्तत्राह 'अन्तःकरणस्ये'ति। अद्वारीकृतवहिरिन्द्रियस्य मनसः केवलेऽवयवविशिष्टे वा शरीरादौ वाह्यार्थे ग्रहणप्रवृत्तेरसंभवाच्चेत्यर्थः। वाह्यार्थे स्वान्तस्यास्वातन्त्र्यमिति हि तार्किकाः। अतो न मनसा शरीरस्य ग्रहणं घटेत केवलेन। चैतन्यवत्त्वेन तस्यावाह्यत्वान्मनसा ग्रहणं भवेद्विनाऽवयवेनेति तु न कल्पनीयम्। तच्चैतन्य एव विगानादिति भावः। निरुक्तनियमस्य वायुस्पार्शनेऽनैकान्त्यं परिहरति 'वायोस्तु' इति। रूपादिमदवयविप्रत्यक्षस्य तदवयवगोचरत्वमिति नियमे नैव दोषः नीरूपत्वाद्वायोः स्पर्शवत्त्वमात्रेण तस्य स्पार्शनोपगमेऽपीति भावः। वस्तुतः वायुस्पार्शनस्यापि तदवयवगोचरत्वमित्याह 'तत्रापी'ति। अवयविसन्निकर्षे तदवयवसन्निकर्षस्यावर्जनीयत्वाद्योग्यसन्निकृष्टावयवभानस्यावयविभाननियतत्वेनावयविप्रत्यक्षस्य तदवयवगोचरत्वमिति नियमेऽपि न वायुस्पार्शने व्यभिचारः। तत्र तदवयवस्यापि भानात्, घटस्पार्शन इव घटावयवस्येति भावः।

यत्तु स्थूलोऽहं कृशोऽहमिति शरीरेऽहंप्रत्ययो दृश्यत इति; तदपि पर्यालोचनीयम्। तत्राप्यन्तःशरीरमहमाकारमेव किमपि वस्तु अहङ्कारो गोचरयति, न पुनश्चाक्षुष इव देहप्रत्ययः स्थौल्यबाल्यादियोगिदेहमात्रम्। अत एव ममेदं गृहमितिवत् ममेदं शरीरमिति भेदप्रतिभासो व्यवहारश्च। न ह्यसौ साक्षात्प्रतीतभेदनिमित्तः प्रतायमानः शिलापुत्रकशरीरव्यपदेशवदौपचारिको युक्त आश्रयितुं ममात्मेतिवत्। तत्राऽऽत्मशब्दस्यात्मनि वृत्तेरैकार्थ्यादविवादाच्च

---

देहात्मत्वसाधिकां प्रत्यक्षप्रतीतिं 'यत्तु' इत्यादिनाऽनूद्य समाधत्ते 'तदपी'त्यादिना। शरीरान्तर्वर्तमानमहमाकारम्–अहन्तालक्षणं प्रत्यगात्मानमेवाहंप्रत्ययो विषयीकरोति। स्थूलोऽहं जानामीत्यहंप्रत्ययो देहद्वारा स्थौल्यान्वितान्तरात्मगोचर एवेति भावः। मानसे प्रत्यये देहभानं तूपनयमर्यादया। स्थूलोऽहं जानामीति व्यवहारेऽपि शरीरवाची स्थूलशब्दस्तत्संबन्धिन्यन्तरात्मन्यौपचारिकः। सिद्धान्ते तु मुख्य एव। शरीरस्य चेतनं प्रत्यपृथक्सिद्धप्रकारत्वात्, अपृथक्सिद्धप्रकारवाचिनां च निष्कर्षकभिन्नानां शब्दानां धर्मिणि मुख्यवृत्तेरुपगमात्। अभ्रान्तीयप्रत्ययव्यवहारयोरित्थं गतिर्निरूपिता। समानाधिकरणप्रत्ययस्य देहवदात्मगोचरत्वे व्यधिकरणप्रत्ययव्यपदेशानुग्रहोऽप्यस्तीत्याह 'अत एवे'ति। ममेदं शरीरमिति भेदव्यपदेशस्य शिलापुत्रकस्य शरीरमितिवदौपचारिकत्वमस्त्वित्याशङ्कां व्युदस्यति 'न ह्यसा'विति। प्रतायमानः–प्रतन्यमानः विस्तार्यमाणः। प्रचुरं प्रयुज्यमानो लोकेनेति यावत्। प्रचुरव्यपदेशस्यौपचारिकत्वकल्पना न सांधीयसीति भावः। 'ममायमात्मे'त्यस्य तु मतद्वयेऽपि औपचारिकत्वमगत्या वाच्यमेवेत्याह 'तत्रे'ति। ऐकार्थ्यात्–अहमात्मशब्दयोरभिन्नार्थकत्वात्। अविवादाच्च–अहमर्थोत्म-

युक्तं तथाऽऽश्रयणम् । न चैवमत्र । अतो देहव्यतिरेकिणः चेतनस्य प्रत्यक्षसिद्धत्वात्तत्संबन्धिनि लाक्षणिको देहेऽहंशब्दप्रयोगः ।

बाह्यविषयेषु परस्परविरुद्धरूपपरिमाणसङ्ख्यासन्निवेशग्रहणेन व्यतिरेकस्य स्फुटत्वात् आत्मनि तादृशरूपान्तराग्रहणेन देहाभेदप्रतिभासभ्रमोऽविवेकिनाम् । इतश्च–इच्छानुविधायिस्वव्यापारोऽ-

---

नोरैक्ये विवादाभावाच्च । 'न चैवमत्रे'ति । शरीराहंशब्दयोरैकार्थ्यासिद्धेस्तदर्थैक्ये विवादाच्च 'ममेदं शरीर'मिति नोपचरितार्थं कल्प्यम् । किन्तु 'ममेदं गृह'मितिवन्मुख्यार्थमेव स्वीकार्यमिति भावः । देहे चाहंशब्द औपचारिक इत्याह 'अत' इति । अहं गच्छामीत्यादावहंशब्द आत्मवति देहे लाक्षणिक इति यावत् । देहात्मभ्रमवतां तु शक्तिभ्रममूलस्तथा प्रयोग इति बोध्यम् ।

एवं तर्कबलादहं जानामीति मानसप्रत्यक्षस्य सावयवदेहव्यतिरिक्तात्मपरत्वं व्यवस्थापितम् । एवं देहव्यतिरिक्तस्यात्मनो भाने सति कथं देहाभेदभ्रम उदेतीत्यत्राह 'बाह्ये'ति । सन्निवेशः–आकृतिः–अवयवसंस्थानम् । स्फुटत्वादित्यस्यानन्तरमभेदभ्रमस्यानुदयेऽपीति शेषः । देहाभेदप्रतिभासश्चासौ भ्रमश्चेति कर्मधारयः । भेदकाकाराग्रहादभेदभ्रमो देहात्मनोरविवेकिनां भेदकाकारग्रहरहितानामित्यर्थः । अयमाशयः–यद्यपि देहतो विभिन्नपरिमाण आत्मा । अथापि तत्परिमाणं न प्रत्यक्षम् । ज्ञानसुखादि प्रत्यक्षमपि न यावद्देहे तदसंभवग्रहः, तावत्तन्न भेदकम् । रूपाद्यप्येवमात्मनि तदसंभवग्रहमन्तरा न भेदकम् । सङ्ख्यादिस्तु साधारणत्वान्न भेदक इति । बाधकस्य भेदकाकारग्रहस्याभावमुपपाद्य ऐक्यभ्रमे साधकं सादृश्यज्ञानं चोपपादयति 'इतश्चे'ति । आत्मेच्छानुविधायिस्वव्यापारकत्वं देहस्यात्मना तौल्यमित्यर्थः । 'अभ्यूहति'

यमात्मा। इच्छयैव हि सङ्कल्पयति स्मरत्यभ्यूहति च। शरीरमपि तदिच्छानुविधायिशयनासनोत्थानादिचेष्टमिति भवत्यभेदभ्रमः; शुक्तिरजतादाविव। प्रणिहितमनसस्तु ज्ञातृतया सिद्ध्यन्तमहमाकारमर्थमनवयवमिदमिति परिस्फुरतः स्थूलादवयविनः शरीरात् पृथगपरोक्षयन्त्येव।

भवन्ति च—जानामीति प्रत्ययः शरीरविषयो न भवति; अर्थान्तरविषयो वाऽयम्; अप्रकाशमानतदवयवप्रतिभासत्वात्; य एवं-

---

इति 'उपसर्गादस्यत्यूह्योर्वेति वाच्य'मिति वार्तिकेण वैकल्पिकं परस्मैपदम्। अभ्यूहनम्—वितर्कणमुत्प्रेक्षणं वा। समानधर्मदर्शनात्प्रसक्तस्यैक्यभ्रमस्य भेदकाकारदर्शनतो निवृत्तिं दर्शयति 'प्रणिहिते'ति। प्रणिधानम्—अवधानम्। ज्ञातृतया सिद्ध्यन्तं—ज्ञातृत्वैकाकारेण प्रकाशमानम्। अनवयवम्—निरवयवम्। आत्मा हि मनोगोचरः, स चेत् सावयवः, तथा गृह्यते। न च तथा गृह्यते। किन्तु ज्ञातृत्वैकाकारः। अतो निरवयवः। एकरूपतयाऽनवयवतया ग्रह एव च भेदकाकारग्रहः। अवहितमनसो निरुक्तपरामर्शवतश्च मनसा देहवैलक्षण्येनात्मनः प्रत्यक्षं भवत्येवेति भावः। प्रणिहितेतिवाक्यं योगिप्रत्यक्षविषयतयापि योजयितुं शक्यते। एवमहं जानामीति प्रत्यक्षस्य देहातिरिक्तात्मविषयत्वं तर्कबलेन व्यवस्थापितम्।

इदमेव प्रयोगारूढं प्रदर्शयति 'भवन्ति चे'ति। प्रयोगा इति शेषः। प्रथमप्रयोगे शरीरविषयकत्वाभावः, अनन्तरप्रयोगे शरीरातिरिक्तविषयकत्वं चाहं जानामीत्यपरोक्षस्य प्रदिदर्शयिषितम्। उभयत्रापि हेतुरेक एव शरीरावयवाविषयकप्रतिभासत्वरूपः। अन्वय्युदाहरणमुभयत्र 'य एव'मिति। अयमिति प्रतिभासः—घटोऽय-

प्रकारः स तथा, यथाऽयमिति प्रतिभासः । यच्छरीरविषयं, न तत् तथा; यथोभयसंमतं शरीरज्ञानम् । तथा—शरीरमहंप्रत्ययगोचरो न भवति, इदमिति गृह्यमाणत्वात्, बाह्येन्द्रियग्राह्यत्वाद्वा, घटादिवदिति ।

किं च—अपरार्थं स्वमात्मानमात्मार्थेऽन्यच्च जानतः ।
सङ्घातत्वात् परार्थेऽस्मिन् देहे कथमिवात्मधीः ॥ ५ ॥

सर्वस्य बाह्याभ्यन्तरभोग्यवर्गस्य शब्दसुखादेरात्मार्थतां, भोक्तुश्चात्मनोऽनन्यार्थतां, सर्वस्य शेषितां प्रत्यक्षतः प्रतिपद्यामहे । न

---

मित्यादिप्रतिभासः । आद्ये व्यतिरेक्युदाहरण 'यच्छरीरे'त्यादिना प्रदर्श्यते । प्रत्यक्षपक्षकमुक्त्वा शरीरपक्षकमन्वयिनमाह 'तथा—शरीर'मिति । इदमिति गृह्यमाणत्वं—बाह्यत्वेन गृह्यमाणत्वम् । बाह्यत्वमिति फलितो हेतुः ।

शरीरपक्षकानात्मत्वसाधकप्रयोगे तृतीयं सङ्घातत्वरूपं हेतुमुपक्षिपति 'किं चे'ति । 'अपरार्थं'मिति । अपरार्थं-स्वप्रधानम्, स्वमात्मानम्-अहमर्थभूतमात्मानम्, आत्मार्थे—भोक्तृभूताहमर्थात्मार्थे, अन्यच्च—परागर्थजातं च, जानतः—विदतः, सङ्घातत्वात्—अवयवसन्निवेशवत्त्वात्, परार्थे—स्वभिन्नभोक्तृभोगार्थे, देहेऽस्मिन्, आत्मबुद्धिः कथं जायेतेति श्लोकार्थः ॥ अत्रायं प्रयोगः—देहो नात्मा परार्थत्वाद्रथादिवत् । न च स्वरूपासिद्धिः । सङ्घातत्वाद्देहस्य पारार्थ्यसिद्धेरिति भावः ॥ ५ ॥

आत्मत्वापरार्थत्वयोः परार्थत्वानात्मत्वयोश्च व्याप्यव्यापकभावं श्लोके पूर्वार्धोक्तं विवृणोति 'सर्वस्ये'ति । आत्मार्थताम्—भोक्त्रात्मभोगफलसाधनताम् । अनन्यार्थतया फलितं 'सर्वस्य शेषिता'मिति ।

च शरीरमनन्यार्थम्; सङ्घातत्वात्। सङ्घाता हि सर्वे परार्था दृष्टाः शयनासनरथादयः। न च सङ्घाताः संहतशरीराद्यर्था दृश्यन्त इत्यात्मनोऽपि संहतत्वमापद्यत इति वाच्यम्। तथा सति तस्यापि परार्थत्वप्रसङ्गात्। अपरार्थश्चायमात्मा प्रत्यक्षतः प्रकाशत इत्युक्तम्। योग्यानुपलम्भबाधितं चात्मनि सङ्घातत्वम्। सङ्घातान्तरार्थत्वे च

---

सर्वस्य भोग्यस्य भोक्तृत्वेन स्वामितां प्रधानतामित्यर्थः। शरीरस्यात्मत्वव्यापिकामनन्यार्थतां वारयति 'नच शरीर'मिति। सङ्घातत्वस्य पारार्थ्येनाविनाभावग्रहस्थलमुदाहरति 'सङ्घाता ही'ति। परार्थाः–भोक्तृपरभोगार्थाः। सङ्घातपरस्य संहतत्वदृष्टेः शरीरपरत्वेनानुमितस्याऽऽत्मनोऽपि सङ्घातत्वं स्यादित्याशङ्कामनूद्य प्रतिक्षिपति 'न च सङ्घाता' इति। 'तथा सती'ति। आत्मा सङ्घातरूपः संहतपरत्वादित्यनुमाने प्रतितर्कोऽत्र विवक्षितः आत्मा यदि सङ्घातः स्यात्तर्हि परार्थः स्यादिति। आत्मा न सङ्घातः अपरार्थत्वादिति प्रत्यनुमानं वा। सङ्घातदेहपरत्वेनानुमितस्याऽऽत्मनः सङ्घातरूपत्वे प्रत्यक्षबाधमप्याह 'योग्यानुपलम्भे'ति। यद्वा अनुमानबलात्प्रसक्तमपि सङ्घातत्वमात्मनः प्रमाणान्तरविषयीकारतो निवर्त्यतीत्याह 'योग्यानुपलम्भे'ति। शरीरं संहतपरार्थम्, सङ्घातत्वात् खट्वादिवदित्यत्र शरीरभिन्नत्वमुपाधिश्च। न च पक्षभिन्नत्वस्योपाधित्वेऽनुमानविलोपप्रसङ्ग इति वाच्यम्। यत्र पक्षे साध्याभावः प्रमाणान्तरेण निश्चितः तत्र वह्नेरनुष्णत्वानुमान इव पक्षभिन्नत्वस्योपाधित्वसंभवात्। प्रकृतेऽपि शरीरात्मवादिनां तदतिरिक्तात्मवादिनां वा संहतपरार्थत्वाभाव एवोपेयते शरीरस्येति तद्भिन्नत्वस्योपाधित्वे न दोष इत्यभिमतम्। सङ्घातत्वस्य संहतपरार्थत्वेन न व्याप्तिः। अनवस्थापादकत्वादित्याह 'सङ्घातान्तरे'ति। तस्यापि–साध्यघटकस्यापि सङ्घातस्य, तथा–

तस्यापि तथा, ततोऽन्यस्यापि तथेति न व्यवतिष्ठेत । न च व्यवस्थायां सत्यामव्यवस्था युक्ता । न च सङ्घातस्य परार्थत्वे परस्य संहतत्वमपि प्रयोजकम् ; भोक्तृतयैवात्मनः स्वार्थसङ्घातं प्रति परत्वोपपत्तेः । व्याप्त्यनुपयोगिनोऽपि दृष्टान्तदृष्टधर्ममात्रस्यानुरोधेनानुमानमिच्छतः सर्वानुमानोच्छेदप्रसङ्गः ।

---

सङ्घातान्तरार्थत्वम् । ततोऽन्यस्यापि—साध्यघटकसङ्घातानुमितस्य सङ्घातान्तरस्यापि, तथा—सङ्घातान्तरार्थत्वम् । 'न च व्यवस्थाया'मिति । सङ्घातत्वस्य परार्थत्वेन व्याप्तौ इष्यमाणायां व्यवस्थायां संभवत्यां संहतपरार्थत्वेन तस्य व्याप्तेराश्रयणमनवस्थाप्रयोजकत्वान्न युक्तमिति भावः । ननु भूयःसहचारदर्शनाधीनो हि व्याप्तिग्रहः । स च संहतपरार्थत्वेनैव सङ्घातत्वस्य भवेत्, खट्वादौ तथा दर्शनादित्यत आह 'न च सङ्घातस्ये'ति । परस्य संहतत्वमन्तरैव सङ्घातप्रयोज्यनियतभोगरूपातिशयभाक्त्वेन तं प्रति शेषित्वलक्षणं परत्वं—प्राधान्यं संभवतीति परार्थत्वनियमस्य सङ्घात उपपत्तेः सपक्षदृष्टमपि परस्य संहतत्वं नाविनाभावग्रहोपयोगि । संहतपरार्थत्वे साध्ये सङ्घातत्वहेतोरप्रयोजकत्वमिति च भावः । सपक्षे दर्शनमात्रेण व्याप्त्यनुपयोगिसर्वधर्मोपरागेण साध्यस्य पक्षेऽनुमानेऽनुमानाप्रामाण्यप्रसङ्गश्चेत्याह 'व्याप्त्यनुपयोगिनोऽपी'ति । पक्षे पर्वते सपक्षदृष्टमहानसीयत्वकारीषत्वाद्युपरक्तवह्नेरनुमानेऽप्रामाण्यप्रसङ्ग इति भावः । धर्ममात्रस्य—कृत्स्नस्य धर्मस्य । अनुरोधेन—व्यापकतावच्छेदककोटिघटनेन । अनुमानम्—पक्षे तावदाकारोपरक्तसाध्यानुमानम् । सर्वानुमानोच्छेदप्रसङ्गः—अनुमानमात्रप्रामाण्यविलोपप्रसङ्गः । शिष्टं स्पष्टम् । एवमहं जानामीत्यादेरहंप्रत्ययस्य प्रत्यक्षरूपस्य देहातिरिक्तविषयत्वं व्यवस्थापितं

अस्फुटत्वेऽपि भेदस्य शरीरे तदसंभवात् ।
तद्गुणान्तरवैधर्म्यादपि ज्ञानं न तद्गुणः ॥ ६ ॥

सर्व एव कार्यद्रव्यगतविशेषगुणः कारणगुणपूर्वक इति कथमतत्पूर्वकः शरीरे चैतन्यगुणः संभवेत्? ।

---

तर्केण । तथा चाहंप्रत्यय एव देहभेदप्रत्ययरूप इतीदङ्कारगोचरे देहे आत्मभेदोऽपि प्रत्यक्षसिद्ध इत्यवर्णि ।

अथ देह आत्मभेदस्याप्रत्यक्षत्वेऽपि तस्यानात्मत्वमचेतनत्वलक्षणमनुमानात् सेत्स्यतीत्याह 'अस्फुटत्वेऽपी'ति । यद्वा—ननु सङ्घातरूपोऽपि देह एवात्मोपेयते लाघवात् । देहभिन्नसङ्घातत्वमेव भवतु परार्थत्वव्याप्यमित्यत्राह 'अस्फुटत्वेऽपी'ति । प्रथमावतरणिकायां भेदस्याऽऽत्मभेदस्य शरीरेऽस्फुटत्वे—अप्रत्यक्षत्वेऽपीत्यर्थः । द्वितीयस्यां च परार्थत्वेन शरीर आत्मभेदस्याप्रसिद्धत्वेऽपीत्यर्थः । तदसंभवात्—तस्मिन्—शरीरे असंभवः—उदयायोगः तदसंभवः तस्मात् । यद्वा शरीर इति मध्यमणिन्यायेनोभयान्वयि । तदसंभवात्—ज्ञानस्यासंभवादित्यर्थः । अत्र च तच्छब्दयोरर्थवैरूप्यं सह्यम् । 'तद्गुणान्तरे'त्यत्र 'तद्गुण' इत्यत्र च तच्छब्देन शरीरस्य परामर्शनीयत्वात् । शरीरे ज्ञानगुणस्योत्पत्तेरयोगाच्छरीरविशेषगुणान्तरवैधर्म्याच्च न ज्ञानं शरीरविशेषगुण इति कारिकार्थः ॥ ६ ॥

शरीरे ज्ञानस्यासंभवं तावदुपपादयति 'सर्व एवे'ति । कारणगुणपूर्वकः—स्वसजातीयस्वाश्रयसमवायिसमवेतगुणासमवायिहेतुकः । 'संभवे'दिति । शरीरावयवेषु ज्ञानस्याभावात, भावे वा एकस्मिन्नेव देहेऽनेकचेतनप्रसङ्गात् न कारणगुणपूर्वकं शरीरे चैतन्यं भवेत् ।

यत्तु वार्हस्पत्य वचनम्—'पृथिव्यापस्तेजो वायुरिति तत्त्वानि, तेभ्यश्चैतन्यम्, किण्वादिभ्यो मदशक्तिवत्' इति; तदनुपपन्नम्। शक्तेरविशेषगुणत्वेन तथोपपत्तेः। सर्वद्रव्येषु तत्तत्कार्यसमधिगम्यः तत्प्रतियोगी शक्त्याख्यो गुणः साधारणः। नैवं चैतन्यम्, देहैकगुणत्वाभ्युपगमात्। कार्यत्वे सत्येकविधप्रत्यक्षसिद्धतया च

---

विशेषगुणत्वादकारणगुणपूर्वकत्वमपि देहे ज्ञानस्यासंभवीति भावः। 'शक्ते'रिति। सामान्यगुणत्वेन शक्तेरकारणगुणपूर्वकत्वमुपपद्यते। सर्वद्रव्यवृत्तित्वाच्च सामान्यगुणत्वम्। दृश्यतत्तत्कार्येणानुमेयः तत्प्रतियोगी—तत्तत्कार्येण निरूप्यस्वरूपः प्रयोजकत्वेन शक्त्याख्यो गुणः सर्वस्मिन्नपि द्रव्ये तत्तत्कार्यप्रतिनियतोऽस्तीति च 'शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः' इति पुराणरत्नवचनतोऽवगम्यत इति भावः। 'नैव'मिति। नैवं—न सामान्यगुणो ज्ञानम्। किन्तु शरीर एवोपगमाद्विशेषगुणः। द्रव्यत्वन्यूनवृत्तिगुणत्वं च तत्त्वम्। सिद्धान्तप्रक्रियेदम्। सिद्धान्ते परत्वादि च न गुणान्तरम्। क्षणसंवन्धाधिक्यादिनैव परत्वादिव्यवहारनिर्वाहादिति भावः। वैशेषिकप्रक्रिययाऽप्याह 'कार्यत्वे सती'ति। ज्ञानं विशेषगुणः कार्यत्वे सति एकविधप्रत्यक्षविषयत्वाद्रूपादिवत्। सङ्ख्यादेर्द्वीन्द्रियग्राह्यत्वात्तत्र व्यभिचारवारणाय एकविधेति प्रत्यक्षविशेषणम्। प्रभाभित्तिसंयोगे व्यभिचारवारणाय एकविधप्रत्यक्षविषयजातिमत्त्वं वक्तव्यम्। संयोगत्वजातेर्द्वीन्द्रियग्राह्यत्वान्न दोषः। आत्मनो मानसप्रत्यक्षविषयत्वात्तत्र व्यभिचारवारणाय कार्यत्वे सतीति। एवमपि प्रभात्वजातिस्वीकारे प्रभायां, वायोः स्पार्शनोपगमे वा वायौ व्यभिचारवारणाय एकविधप्रत्यक्षग्राह्यजातीयगुणत्वादिति वक्तव्यम्। गुणत्वप्रवेशे च कार्यत्वे सतीति चिन्त्यप्रयोजनमिति बोध्यम्। विशेषगुण-

विशेषगुणत्वात् । द्रव्यान्तरसंयोगसमासादितमदशक्तिभिरकार्यभूतैः परमाणुभिर्निजगुणपुरस्कारेण स्वकार्यद्रव्येषु मदशक्त्युत्पादोऽपि नानुपपन्नः । ताम्बूलरागस्तु पूर्वद्रव्यावयवविभागानन्तरं द्रव्यान्तरसंयोगजनितरक्तिमगुणैः कारणैः क्रियते । दृश्यते हि तत्रावयवेष्वपि प्रत्येकं रक्तिमगुणः । नच शरीरावयवेषु प्रत्येकं चैतन्यगुणः प्रज्ञायते प्रतिज्ञायते वा । तदुपगमे च एकशरीर एवानेकचेतनापातादङ्गाङ्गित्वाभावः, प्रतिसन्धानव्यवहारलोपश्च; देवदत्तदृष्ट इव यज्ञदत्तादेः ।

---

लक्षणे च ज्ञानादिभिन्नत्वं न दातुं शक्यं ज्ञानादेर्विशेषगुणत्वे प्रामाणिके सतीति च भावः । सङ्घातविशेषावयविवादे तु अवयवेषु चैतन्याभावादेव देहस्य चैतन्यं न संभवतीति चानुसन्धेयमत्र । ननु रसविशेषो गन्धविशेषो वा मादको मदशब्दवाच्यः । स च विशेषगुणो न कारणगुणपूर्वक इति कार्यद्रव्यविशेषगुणस्य कारणगुणपूर्वकत्वनियमो दुर्वच इत्यत्राऽऽह 'द्रव्यादीना'मिति । किण्वादीनां सम्मर्दनादिना द्व्यणुकपर्यन्तनाशे स्वतन्त्रैः परमाणुभिर्द्रव्यान्तरावयवसंश्लेषजनितमदैरारब्धे सुराद्रव्ये कारणगुणपूर्वक एव गुण इति भावः । अथ ताम्बूलरसरागेऽनैकान्त्यमुक्तनियमस्य परिहरति 'ताम्बूले'ति । स्पष्टोऽर्थः । 'न च शरीरे'ति । प्रज्ञायते—उपलभ्यते । प्रतिज्ञायते—साध्यते । देहावयवेषु चैतन्ये साधकाभावमुक्त्वा बाधकमप्याह 'तदुपगम' इति । अङ्गाङ्गित्वाभावः—नियाम्यनियामकभावलक्षणगुणप्रधानभावाभावः । एकचेतननियाम्यत्वे हि शरीरावयवानां व्यवहाराविसंवादो घटते । तेषामेव चेतनत्वे तु परस्परानियम्यतया परस्परवार्तानभिज्ञतया च व्यवहारविसंवादः प्रसज्यत इति भावः । 'प्रतिसन्धाने'ति । यमद्राक्षं

यत्तु—अकारणगुणपूर्वकं चित्ररूपं पटे इति; तन्न । नानारूपता हि चित्रता । सा च नानारूपैः तन्तुभिः क्रियत इति किमनुपपन्नमिति । प्रत्येकमविद्यमानमपि तच्चित्ररूपं तन्तुषु संहतेषु दृश्यत एव चित्रा इमे तन्तव इति । संभूय च तेषां पटारम्भकत्वम् । एवं तत्कारणेष्वपि तदिति न क्वचिद्व्यभिचारः । न चैकरूपनियमाभावेनावयविनोऽचाक्षुषत्वम्; महत्त्वैकार्थसमवायिना रूपवत्त्वेनैव चाक्षुषत्वसिद्धेः । अस्तु वा चित्रं नामैको रूपविशेषः । स तु रूपैरेव कारणगतैर्नानाविधैरारभ्यत इति दृष्टम् । न चैवमवयववर्तिभिरेव चैतन्यै-

---

तं स्पृशामीत्यादिप्रतिसन्धानस्य तन्मूलव्यवहारस्य च विलोपः प्रसज्यते । अवयवचैतन्ये द्रष्टुः स्प्रष्टुश्चान्यान्यत्वादिति भावः । अनिष्टापत्तिरिष्टहानिश्चात्रोक्ते पदद्वयेन । नानारूपता—विभिन्नजातीयरूपसमवायिता । विजातीयरूपेषु तन्तुषु संहतेषु चित्रप्रतीतिमाह 'प्रत्येक'मिति । 'एव'मिति । तत्कारणेष्वपि—चित्रपटकारणेषु तन्तुष्वपि । तत्—चित्रं रूपम् । 'एकरूपनियमाभावेने'ति । अव्याप्यवृत्तिनानारूपवति चित्रपटे व्याप्यवृत्त्येकरूपाभावेनेत्यर्थः । 'महत्त्वैकार्थे'ति । लौकिकविषयतया द्रव्यचाक्षुषे सामानाधिकरण्येन महत्त्वविशिष्टोद्भूतरूपस्य समवायेन हेतुत्वसंभवे हेतुतावच्छेदककोटौ व्याप्यवृत्तित्वविशेषणे प्रयोजनाभावः । तथा च चित्रपटस्य न चाक्षुषत्वानुपपत्तिरिति भावः । रूपस्य व्याप्यवृत्तित्वनियमेऽप्याह—'अस्तु वे'ति । 'न चैव'मिति । तन्तुगतविविधरूपैः पटे चित्ररूपारम्भवदवयवगतैरनुद्भूतचैतन्यैर्देहे उद्भूतचैतन्यारम्भोऽस्त्विति च न शङ्क्यम् । चितितन्मात्रस्यैव—चैतन्यसामान्यस्यैव मानाभावेन देहावयवेष्वसंभवात् । शरीरस्य चैतन्ये तदवयवेषु चैतन्यकल्पना, तत्कल्पनायामेव शरीरे चैतन्यसिद्धिरित्य-

रवयविनि शरीरे चैतन्यविशेषारम्भः। चितितन्मात्रस्यैव तेष्वसंभवात्। अतो न देहगुणः चैतन्यम्। एतेन सुखादयोऽपि शरीरगुणाः प्रत्युक्ताः।

अपि च दृढ एव शरीरे विरोधिगुणापातमन्तरेण कुसुमविलेपनगन्ध इव निवर्तमानः चैतन्यसुखादिर्न तद्गुणो भवितुमर्हति। न खलु तद्विशेषगुणा रूपादयस्तथा निवर्तन्ते। आत्मनः परेषां च शरीरगुणाः प्रत्यक्षयोग्याः, बाह्येन्द्रियग्राह्याश्च; न च तथा ज्ञानादिरिति नासौ तद्गुणः।

---

न्योऽन्यसंश्रयाच्चेति भावः। 'एतेने'ति। ज्ञानस्येव सुखादेरपि विशेषगुणस्य न शरीरधर्मत्वसंभव इति भावः। एवं 'शरीरे तदसंभवा'दिति व्याख्यातम्।

अथ 'तद्गुणान्तरवैधर्म्या'दित्येतद्विवृणोति 'अपि चे'ति। विरोधिगुणापातमन्तरा—पूर्वगुणनिवर्तकगुणप्रसङ्गं विना। कुसुमविलेपनगन्धः—स्रक्चन्दनगन्धः। 'न खलु त'दिति। अयं भावः—अग्निसंयोगेन रूपपरावृत्तावपि तदप्रसङ्गे रूपस्य यावद्द्रव्यभावित्वं दृष्टम्। न च ज्ञानादि स्थिरमेवम्। न चोत्तरोत्तरविशेषगुण एव पूर्वपूर्वज्ञानादिविरोधीति वाच्यम्। एवमपि अन्त्यस्य चिरमवस्थानप्रसङ्गादिति। अयावद्द्रव्यभावित्वं ज्ञानादेः शरीरविशेषगुणान्तरतो वैधर्म्यमित्युक्तं भवति। अथ वैधर्म्यान्तरं द्विधाऽऽह 'आत्मन' इति। स्वात्ममात्रग्राह्यत्वं मनोमात्रग्राह्यत्वं च ज्ञानादेः शरीरविशेषगुणान्तरवैधर्म्यमिति फलितम्। रूपादयो हि शरीरगुणाः स्वपरग्राह्या बहिरिन्द्रियग्राह्याश्च। न च तथा ज्ञानादीति। अत्र प्रयोगः—ज्ञानं न शरीरविशेषगुणः अयावद्द्रव्यभावित्वान्मनोमात्रग्राह्यत्वाद्वा यन्नैवं तन्नैवं यथा रूपादीति। एवं

किञ्च—उत्पत्तिमत्त्वात् पारार्थ्यात् सन्निवेशविशेषतः ।
रूपादिमत्त्वाद्भूतत्वाद्देहो नात्मा घटादिवत् ॥ ७ ॥
सच्छिद्रत्वाददेहित्वाद्देहत्वान्मृतदेहवत् ।
इत्यादिसाधनैर्न्याय्यैर्निषेध्या वर्ष्मणश्चितिः ॥ ८ ॥

एवं प्रत्यक्षविरोधात्, अन्वयमुखेन साध्यमुपस्थापयद्भिरुदीरितसाधनैरपहृतविषयतया इन्द्रियाश्रयत्वादिव्यतिरेकिहेतवो न साध्यमुपस्थापयितुमीशते।

( इति देहात्मवादनिरासप्रकरणम् )

सन्तु तर्हीन्द्रियाण्येवात्मा । न च तानीदन्तया प्रथन्ते; येन देहवदहङ्कारगोचराद्बहिष्क्रियेरन् । नापि तथोद्भूतरूपादिगुणानि

---

ज्ञानस्य शरीरधर्मत्वाभावसाधनेन शरीरस्यात्मत्वं प्रतिक्षिप्तं भवति। यथा—देहो नात्मा अज्ञातृत्वाद्घटादिवदिति ।

अत्रैव साध्ये साधनान्तराणि चाह 'उत्पत्तिमत्त्वा'दित्यादिकारिकाद्वयेन । पारार्थ्यं भोक्त्रन्तरार्थत्वम् । तच्च सङ्घातत्वात् । भूतत्वम्—बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम् । एतैर्हेतुभिः शरीरे चेतनभिन्नत्वं साध्यम् । न्याय्यैः—प्रतिज्ञाद्यवयवपञ्चकात्मकन्यायप्रतिपाद्यरूपपञ्चकोपपन्नैः । वर्ष्मणः—शरीरस्य । चितिः ज्ञानम् ॥ ७ ॥ ८ ॥

समर्थितमेतावता देहस्यानात्मत्वं प्रत्यक्षानुमानाभ्याम् । एतद्बाधितत्वमाह देहे आत्मत्वं साधयतां केवलव्यतिरेकिणाम् 'एव'मिति । अन्वयमुखेन—अन्वयव्याप्त्या । अपहृतविषयतया—बाधितसाध्यकतया, उपस्थापयितुं—व्यवस्थापयितुम् ।

अथेन्द्रियात्मवादमुपक्षिपति 'सन्तु तर्ही'ति । देहात्मत्वपक्षोक्तानि दूषणानि नात्र पक्षे प्रसज्यन्त इत्याह 'न च तानी'त्यादिवाक्यद्वयेन । बाधकाभावमुक्त्वा साधकमप्याह पक्षेऽत्र 'तद्व्यापारे'ति । ज्ञान-

स्थूलानि; येन तत्प्रतिभास इवेन्द्रियगोचरत्वेऽहंप्रत्ययस्य रूपावयवादिप्रतीतिः प्रसज्येत। तद्व्यापारफलं च ज्ञानं तद्धर्मि युक्तं स्नानाध्ययनादिफलवत्। अत एव सत्यतपाः 'द्रष्टुश्चक्षुषः' इति।

( इतीन्द्रियात्मत्वपूर्वपक्षप्रकरणम् )

तन्न। विकल्पासहत्वात्। तथा हि—किं प्रत्येकमिन्द्रियाणि चेतनानि, संभूय वा?। यदि प्रत्येकम्, इन्द्रियान्तरदृष्टस्येन्द्रियान्तरेण प्रतिसन्धानं न स्यात्। अस्ति च तत्—यमहमद्राक्षं तमहं स्पृशामीति। अत एव न संभूयापि चेतनत्वम्। न हि पञ्चभिरि-

---

मिन्द्रियधर्मः, इन्द्रियव्यापारफलत्वात, यद्व्यापारफलं यत् तत्तन्निष्ठम्, यथा स्नानाध्ययनादिव्यापारफलं शौचाक्षरराशिग्रहणादि स्नात्रध्येतृसमवेतमिति प्रयोगो वोध्यः। इन्द्रियस्य व्यापारः—अर्थसन्निकर्षार्थेन्द्रियप्रवृत्तिः, अर्थेनेन्द्रियस्य सन्निकर्ष एव वा। हेतौ द्रव्यभिन्नभावत्वे सतीति विशेषणं देयम्। तेन घटतद्ध्वंसानुकूलव्यापारवतो दण्डादेर्घटवत्त्वाद्यभावेऽपि न क्षतिः। इन्द्रियात्मत्वेऽनुमानमुक्त्वाऽऽप्तवाक्यमपि संवादरूपं निर्दिशति 'अत एवे'ति।

इन्द्रियाणामात्मत्वं निरस्यति 'तन्ने'ति। विकल्पासहत्वं नाम विकल्पधर्मिणः संभावितयावत्कोटिविकल्पने विकल्पितयावत्कोट्यन्यतमकोटिसंवन्धस्याप्यनर्हस्वरूपत्वम्। क्षोदक्षमत्वाभाव इति यावत्। प्रत्यक्षवाधाभावेऽपि यौक्तिकवाधोऽस्तीन्द्रियात्मत्व इति हार्दम्। प्रत्येकेन्द्रियचैतन्यपक्षे नानास्वामिक इव ग्राम एकस्मिन्नेव देहे नानाचेतनाधिष्ठानान्नित्यकलहादि प्रसज्यते इति दूषणं हृदि निधाय दूषणान्तरमाह 'इन्द्रियान्तरे'ति। इन्द्रियसङ्घातात्मत्वपक्षेऽपीदं साधारणम्। तदाह 'अत एवे'ति। अत एव—निरुक्तप्रतिसन्धानानुपपत्तेरेव। तामेवोपपादयति 'नही'ति। इन्द्रियसङ्घातो नानुभविता, नाप्यनुस्मर्ता।

न्द्रियैः संभूयैकं वस्त्वनुभूयतेऽनुसन्धीयते वा । एकेन्द्रियविगमे च प्रायणप्रसङ्गश्च । इन्द्रियचैतन्ये च तत्तदिन्द्रियापाये तत्तदिन्द्रियार्थ-स्मरणमपि न भवेत् । न च तद्व्यापारफलतया तत्समवायित्वं ज्ञानस्य । शस्त्रादिव्यापारजन्मनोऽपि पापादेः परसमवायित्वात् । अन्यथा च प्रष्टुर्मृत्युपपत्तिं शरणागतपरित्यागस्य नृशंसतां चाऽऽलोच्य सत्यतपसस्तथा वचनम् ।

( इतीन्द्रियात्मवादनिरासप्रकरणम् )

---

तथा हि—सङ्घातो यदि संयोगो बहुत्वसङ्ख्या वा, तर्हि गुणत्वादेव न ज्ञातृत्वसंभवः । यदि संयुक्तानां बहूनामेव सङ्घातत्वेन विवक्षा, तदापि नं बहूनामिन्द्रियाणां चाक्षुषाश्रयता स्पार्शनाश्रयता वा । तथा च द्रष्टुः स्प्रष्टुश्चान्यान्यत्वादुक्तप्रतिसन्धानानुपपत्तिरेवेति भावः । इन्द्रियसङ्घा-तस्याऽऽत्मत्वे दोषान्तरमाह 'एकेन्द्रिये'ति । सङ्घातस्य तावतैव विनष्ट-त्वान्निरात्मकत्वेन देहस्य मरणप्रसक्तिरिति भावः । प्रत्येकसङ्घात-पक्षद्वयसाधारणं दोषान्तरमाह 'इन्द्रिये'ति । द्रष्टुश्चक्षुषो विनाशे मयेदं दृष्टमिति स्मृतेरनुपपत्तिः । विद्यमानस्याद्रष्टृत्वात् । अन्यदृष्टस्यान्येन स्मृत्ययोगादिति भावः । इन्द्रियचैतन्ये बाधकान्युक्तानि । अथ तत्सा-धकमनुमानं दूषयति 'न च तद्व्यापारे'ति । पापादेरित्यादिपदेन द्वैधी-भावोऽपि ग्राह्यः । तयोश्छेत्तृच्छेद्यगततया शस्त्रेऽसमवेतत्वाद्व्यभिचार इति भावः । अत्र विपक्षे बाधकविरहादप्रयोजकत्वमपि बोध्यम् । अथ सत्यतपसो वचनं करणे कर्तृत्वोपचारेण प्रवृत्तमन्यपरं नेन्द्रियचैतन्ये प्रमाणमित्याह 'अन्यथा चे'ति । स्वाश्रमप्रविष्टवनमृगान्वेषणप्रवृत्तव्याध-कृतप्रश्नोत्तररूपं सत्यतपसो वचनम् 'द्रष्टुश्चक्षुषो नास्ति जिह्वा' इत्यादि । एतस्मिन्नर्थे श्लोकोऽयमनुगृहीतोऽस्मद्गुरुचरणैः 'या पश्यति न सा ब्रूते

अस्तु तर्हि मन एव चेतनम् । तथा सति हि पूर्वोक्ता दोषाः परिहृता भवन्ति । तद्धि सर्वेन्द्रियाध्यक्षं प्रज्ञायते प्रतिज्ञायते च । उपपद्यते चेन्द्रियान्तरेण प्रतिसन्धानम्; दर्शनानुसन्धानाधारस्य मनस एकत्वात् । तत्तदिन्द्रियापायेऽपि स्मरणमप्युपपद्यत एव, मनसो नित्यत्वात् ।

(इति मनआत्मत्वपूर्वपक्षप्रकरणम्)

तदपि नः करणत्वाच्चक्षुरादिवत् । बाह्यान्तरसकलविषयसंवेदनकरणतया हि मनः प्रकल्प्यते । बाह्येन्द्रियेषु यथायथं निजविषय-

---

या ब्रूते सा न पश्यति। दृष्टिर्वक्ति कथं व्याध वाणी वा वीक्षते कथम् ॥' इति। अनेन प्रष्टा व्याध इति गम्यते । अकथनेऽशनायापीडितस्य व्याधस्य मरणप्रसङ्गं, कथने च शरणागतपरित्यागनिबन्धनं महत्पापं पर्यालोच्य एवं वक्रोक्तिः कृता महर्षिणेति बोध्यम् ।

अथ मन आत्मत्वपक्षमुपक्षिपति 'अस्तु तर्ही'ति। 'तद्धी'ति। मनो हि प्रधानं सर्वेन्द्रियप्रेरकं च गम्यते प्रमाणतो, व्यवह्रियते च तथेत्यर्थः। इन्द्रियात्मत्वपक्षोक्तानां स्मृतिप्रतिसन्धानानुपपत्तिनानात्मप्रसङ्गादिदोषाणां नात्र पक्षे प्रसङ्ग इत्याह 'उपपद्यते चे'त्यादिवाक्यद्वयेन।

मनस आत्मत्वं दूषयति 'तदपि ने'ति। 'करणत्वा'दिति । सर्वत्र ज्ञाने करणत्वान्मनसो न तत्र कर्तृत्वमाश्रयत्वं संभवति। मनो हि न प्रत्यक्षविषयः । किंतु युगपज्ज्ञानानुत्पत्तिलिङ्गेन सकलज्ञाने करणविशेषतयाऽनुमीयते । तस्य च न ज्ञातृत्वं चक्षुरादेरिव संभवतीति भावः। एतदेवोपपादयति 'बाह्येन्द्रियेष्वि'ति । यत्साहायकविरहात्—यत्सहकारविरहात् । (सहायस्य कर्म-साहायकम्) यत्सन्निकर्षविरहादिति यावत् । तत्तदर्थग्राहकेन्द्रियस्येति शेषः । एवं बाह्यार्थेषु युगपज्ज्ञा-

सन्निकर्षभागिष्वपि यतो न युगपदेव सर्वे विषयाः प्रतीयन्ते, अतोऽवगच्छामः–अस्ति किंचिदपरमपि साधनम्, यत्साहायक-विरहान्न सर्वे प्रकाशन्ते, कश्चिदेवैकः प्रतीयते इति । तथा सुखा-दिसंवेदनान्यपि करणवन्ति, क्रियात्वात्, संवेदनत्वाद्वा, रूपादि-ज्ञानवदिति । तदेवं ज्ञानकरणतयाऽवगतस्य मनसः कथमिव ज्ञाने कर्तृत्वम्? । स्वातन्त्र्यलक्षणं हि तत् । तच्च स्वच्छन्दानुरोधेन साध्य-सिद्ध्यनुगुणोपकरणसंपादनसामर्थ्यम्; स्वसमवेतमेव वा गुणान्तरं तन्त्रीकृत्य प्रवृत्तिः । करणत्वं तु पराधिष्ठानाधीनव्यापारतारूपपार-

---

नानामनुत्पत्तिलिङ्गेन सर्वेन्द्रियसहकारित्वेनाणुभूतस्य मनसः करण-विशेषस्यानुमानमुक्त्वा आन्तरसुखादिसाक्षात्कारेषु करणतयाऽपि मनसोऽनुमानमाह 'तथा सुखादी'ति । ननु करणतयाऽनुमितस्यैव मनसो ज्ञानादौ कर्तृत्वमप्यस्तु लाघवादिति चेत्तत्राह 'तदेव'मिति । करणस्य कर्तृत्वं न संभवति । करणत्वकर्तृत्वयोर्विरोधात् स्वातन्त्र्यपार तन्त्र्यलक्षणयोरिति भावः । कर्तृत्वकरणत्वस्वरूपभेदं विवृणोति 'स्वातन्त्र्ये'-त्यादिना । कर्तृत्वं नाम स्वेच्छाधीनस्वप्रवृत्तिकत्वरूपस्वातन्त्र्यनियतं स्वेच्छयैव साध्यसिद्ध्यौपयिकसामग्रीसंपादनसामर्थ्यम् । करणत्वं च परेच्छाप्रयत्नाधीनस्वव्यापृतिकत्वलक्षणपारतन्त्र्यनियतं परस्य ईप्सित-क्रियानिष्पत्तौ प्रकृष्टोपकारकत्वलक्षणम् । न चैतयोरेकत्र समावेशः संभवतीति भावः । यद्यपि चेतनस्यैकत्र कर्तृत्वं करणत्वं च संभवेन्ना-माऽऽकारभेदतः । अथापि मनसश्चैतन्ये दृढतरप्रमाणाभावात् लोक-सिद्धव्याप्त्या च चक्षुरादिवत्परस्य चेतनस्य सुखाद्यनुभवकरणतयैव सिद्धेर्न मनसो ज्ञातृत्वम् । वस्तुतस्तु अत्यन्तातीन्द्रियेष्वर्थेषु शास्त्रमेव प्रमाणम् । ततश्च मनो विज्ञानमयस्य जीवस्योपकरणतयैव सिद्ध्यतीति

तन्त्र्यनियतं साधकतमत्वमिति कथमिवैकत्र मनसि परस्परविरुद्ध-तदुभयधर्मसंबन्धं प्रतिपद्येमहि ?। अथ तदपि मनः करणान्तरेण स्मरणादिषु कर्तृभावमनुभवति, तथा सति संज्ञामात्रे विवादः। य एव हि चक्षुरादिभी रूपादीन् आन्तरकरणेन च सुखादींश्चेतयते, स एवाऽऽत्मा। तस्मिन्नेव चेत् मनःसंज्ञा निवेश्यते, कामं निवेश्यताम्। न नः किंचिद्धीनम्। किन्तु तदा सर्वलौकिकव्यवहारो बाध्येतेत्यलमनेन।

( इति मनआत्मवादखण्डनप्रकरणम् )

आह—किमिदं मनो नाम ?। ननूक्तमान्तरं ज्ञानकरणं द्रव्यमिति। किं पुनरस्य साधनम् ?। ननूक्तं युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गमिति। उक्तं नाम; तथापि कथं तत्त्वान्तरसिद्धिः ?।

---

हार्दम्। ननु रूपसुखादिबाह्यान्तरपदार्थानुभवेषु मन एव कर्तृ। आन्तरसुखाद्यनुभवे करणं त्वान्तरमन्यत्कल्प्यत इति शङ्कते 'अथ तदपी'ति। परिहरति 'तथा सती'ति। एवं सति अस्मदिष्टस्य ज्ञातर्यन्तः-करणभेदस्य न काप्यनुपपत्तिः। संज्ञा तु ऐच्छिकीति नार्थे विवाद इत्यर्थः। ज्ञातुरात्मनो मनःसंज्ञायां व्यवहारविरोधमाह 'किन्तु'इति। मन इति नात्मनो व्यवहारो लौकिकानां वैदिकानां च। अतो मनःसंज्ञाऽऽत्मनि व्यवहारविसंवादादपार्थेति भावः।

अथात्र परमाचार्योऽयं विमर्शकभूमिकामास्थितः प्रसङ्गात् मनसस्तत्त्वविचारं प्रक्रमते 'आहे'ति। कश्चिद्विमर्शक इत्यादिः। विमर्शश्चायं तार्किकाभिमतानां मनःसाधकयुक्तीनां क्षोदक्षमत्वाभावप्रदर्शनार्थः। 'किमिद'मिति। किमिति स्वरूपप्रश्नः। किंपुनरिति प्रमाणप्रश्नः। मनसि प्रमाणमाक्षिपति 'उक्तं नामे'त्यादिना। युगपज्ज्ञानानुत्पत्ति-लिङ्गेन द्रव्यान्तरमान्तरं करणं न सिद्ध्यति। अदृष्टादिसहकारविरहेणैव

कल्पयित्वाऽपि हि तत् युगपत्स्मरणानुत्पत्त्युपपत्तयेऽवश्याश्रयणीयमेव निमित्तान्तरम् । सन्ति हि युगपदस्य स्मर्तुर्नानार्थानुभवभाविताः संस्काराः । अथ च न सर्वे स्मर्यन्ते । किञ्चिदेव कदाचित् स्मर्यते । संस्कारोन्मेषहेतूपनिपातक्रमात्तथात्वमिति चेत्, एवमपि प्रणिधानमात्रोद्बोधनीयसंस्कारस्य स्मृतियौगपद्यमापद्येत । यावदनुभूतसकलविषयसुस्मूर्षया सर्वतः प्रत्याहृतचेतसः साधारण्येन प्रणिदधतोऽपि न सर्व एवार्थाः स्मृतिमधिरोहन्ति । यदि तु शुभाशुभरूपतया स्मरणानामदृष्टवशाद्व्यवस्था, क्रमज्ञानस्वाभाव्याद्वा आत्मनः; तथा सति बहिरिन्द्रियेषु च यथायथं स्वविषयसंप्रयुक्तेषु तथैव युगपज्ज्ञानानुत्पत्तिरुपपद्यत इति कृतमिन्द्रियान्तरेण ।

---

युगपज्ज्ञानानुत्पत्त्युपपत्तेरिति भावः । युगपत्स्मरणानामनुत्पत्तयेऽदृष्टसहकारविरहोऽवश्यमेव शरणीकरणीयः स्वीकृतेऽप्यान्तरकरण इत्याह 'कल्पयित्वाऽपी'ति । नानार्थानुभवभाविताः—नानार्थानुभवजनिताः । 'संस्कारे'ति । संस्कारस्योन्मेषहेतुरुद्बोधकः । संस्कारोद्बोधकसमवधानक्रमात् स्मृतीनामयौगपद्यम् । उद्बुद्धसंस्कारस्यैव स्मृतिहेतुत्वात् । उद्बोधस्य क्रमभावित्वाच्चेति भावः । 'एवमपी'ति । प्रणिधानं—मनसोऽवधानेन चिन्तनम् । येषामर्थसंस्काराणां साधारणमुद्बोधकं प्रणिधानं कृतमनुभूतयावदर्थस्मृतीच्छयैकदैव तदाऽपि न यावदर्थस्मृतयो युगपत् जायन्ते । तत्सत्यपि नानार्थस्मृतिषु दृष्टकारणेऽदृष्टसहकारविरहादेव न स्मृतियौगपद्यम्, किन्तु एकस्यैवैकदा भवति स्मृतिरदृष्टसहकारादित्येषितव्यमिति भावः । शुभाशुभरूपतया—सुखदुःखजनकतया । नन्वेवमपि सुखहेत्वर्थानां शुभादृष्टबलाद्युगपत्स्मरणानि स्युरिति चेत्तत्राह 'क्रमे'ति । क्रमिकज्ञानभाक्त्वलक्षणात्मस्वभावबलाददृष्टसहकारविरहाच्च स्मृतियौगपद्य-

स्यान्मतम्—कादाचित्कस्य सुखादेरात्मसमवायिनो बाह्यविषया-दृष्टादिनिमित्तकारणस्यासमवायिकारणेन भाव्यम्। तच्चात्ममनः-सन्निकर्ष इति मनोद्रव्यसिद्धिरिति। तदसत्। सुखदुःखादिपूर्वकाल-जन्मनोऽभिमतानभिमतविषयसंपर्कजज्ञानस्याऽऽत्मसमवायिन एवासमवायिकारणत्वात्। तस्य च विषयसंप्रयुक्तेन्द्रियसंप्रयोग एवाऽऽत्मसमवेतोऽसमवायिकारणम्। तद्धेतुरपीन्द्रियव्यापारः प्रयत्नमदृष्टं चाऽऽत्मसमवेतमपेक्षमाणादात्मेन्द्रियसन्निकर्षादसम-वायिकारणात्। प्रयत्नस्य तु स्वपूर्वक्षणवर्ति कर्तव्यताज्ञानम्। प्रयत्न

---

स्यैव बाह्यार्थज्ञानयौगपद्यस्यापि परिहरणसंभवात् नाणुभूतं मनो बाह्येन्द्रियसहकारि करणान्तरमान्तरं कल्पनीयमिति समुदिताशयः।

मनसि प्रमाणान्तरमुपक्षिपति 'स्यान्मत'मिति। अत्र प्रयोगः—सुखादि साऽसमवायिहेतुकं भावकार्यत्वात्कार्यरूपादिवदिति। असम-वायिहेतुश्च सुखादावात्ममनःसंयोग एव, अन्यस्यासंभवादिति हृद-यम्। आत्मेत्यादि बाह्येत्यादि च षष्ठ्यन्तं पदद्वयं बहुव्रीहिवृत्तं सुखा-देर्विशेषणम्। पदद्वयेन च सुखादावात्मनः समवायिकारणत्वमदृष्टा-देर्निमित्तहेतुत्वं चोक्तम्। एतन्निरस्यति 'तदस'दित्यादिना। 'सुखे'ति। अनुकूलविषयस्य प्रतिकूलविषयस्य च ज्ञानस्यैवात्मनि नियतपूर्ववृत्तेः सुखे दुःखे च कारणस्य तत्रासमवायिहेतुत्वं युक्तम्। न तु आत्ममनस्सं-संयोगस्याप्रसिद्धस्य। तत्तद्विषयसन्निकृष्टेन्द्रियात्मसंयोग एव च तत्त-ज्ज्ञानेऽसमवायिकारणम्। कृतिसाध्यताज्ञानमेव प्रयत्ने तथा चिकीर्षा-द्वारा। कार्यताज्ञाने च स्मृतिरूपे उद्बुद्धसंस्कारः, अनुभवरूपे च लिङ्ग-ज्ञानादि तथा। संस्कारे चानुभवः तथा। प्रयत्न एवादृष्टस्याप्यसम-वायिहेतुः। इदमुपलक्षणम्। इच्छां प्रति इष्टजातीयत्वस्येष्टसाधनत्वस्य

एव त्वदृष्टस्यापीति नात्मविशेषगुणानां बुद्धिसुखदुःखेच्छादीनामसमवायिकारणसापेक्षतयाऽपि द्रव्यान्तरपरिकल्पनं न्याय्यम्।

यत्तु–नित्यद्रव्यविशेषगुणस्य द्रव्यान्तरसंयोग एवासमवायिकारणम्, पार्थिवपरमाणुष्वग्निसंयोगादसमवायिकारणाद्रूपोत्पत्तेरिति; तदपि स्थवीयः। पार्थिवपरमाणुषु रूपादयो दहनसंयोगादिति कुतोऽवगतम्?। कार्यद्रव्ये तथा दर्शनादिति चेत्, इह वा तर्हि किं न दृश्यते इष्टानिष्टप्राप्त्यवगमानन्तरं सुखादिर्जायत

---

वा ज्ञानं तथा। द्वेषं प्रति चानिष्टत्वस्य तत्साधनत्वस्य वा ज्ञानं तथा। आत्मविशेषगुणानां कुत्राप्यसमवायिहेतुत्वं नास्तीति प्रवादस्तु न श्रद्धेय इति समुदिताशयः। इच्छादीनामित्यादिपदेन द्वेषप्रयत्नादृष्टसंस्काराणां ग्रहणम्। अत्र विषयेन्द्रियसंयोगहेतुभूतस्येन्द्रियव्यापारस्य प्रयत्नवदात्मसंयोगासमवायिहेतुकत्वकथनं प्रसङ्गात्। कुत्रापि ज्ञानादौ आत्मविशेषगुणे मनोऽपेक्षा नास्तीति हार्दम्।

साधनान्तरं मनसि शङ्कते 'यत्तु नित्ये'ति। अत्र प्रयोगः—सुखादिर्द्रव्यसंयोगासमवायिहेतुकः कार्यत्वे सति नित्यद्रव्यविशेषगुणत्वात् पाकजपरमाणुरूपवदिति। द्रव्यान्तरसंयोगस्य सुखादौ असमवायिहेतुत्वासंभवान्मनःसंयोगस्यैव तथात्वेन परिशेषान्मनसः सिद्धिरिति भावः। एतद्दूषयति 'तदपी'ति। स्थवीयः—स्थूलतरम्। अविमृश्यभाषितमिति यावत्। अयं भावः—अन्वयव्यतिरेकसहचारदर्शनादेव हि सर्वत्र कारणत्वाध्यवसायः। पार्थिवाणुरूपादौ दहनसंयोगस्य हेतुत्वमपि ततो देहावयवादौ रूपादिपरावृत्तेर्दृष्टत्वाद्दृष्टानुसारादेव कल्प्यते। इह चानुकूलज्ञानादेरेव सुखादौ हेतुत्वं दृष्टम्। समवायिकारण आत्मनि प्रत्यासन्नत्वात्तस्यैवासमवायिहेतुत्वं च युक्तं तत्रेति नादृष्टद्रव्यान्तरसंयोगस्य

इति ? । दृष्टकारणव्यभिचारे हि कारणान्तरानुमानावसरः । न चेहास्ति व्यभिचारः । अतः प्रसिद्धकारणभावेष्वेव यत्र कार्यसमवायः तत् समवायिकारणम्, यत्तु तत्प्रत्यासन्नं तदसमवायि, यदन्यत् तन्निमित्तमिति व्यवस्थाश्रयणमुचितम् । न त्वनपेक्षिताप्रसिद्ध-द्रव्यान्तरसंयोगाभ्युपगमेन तस्यासमवायिकारणत्वाश्रयणम् । कारणान्तरानुपलब्धेः, दृष्टानुसाराच्चाणुगतरूपादौ तथाऽभ्यु-पगमः । इह तु तद्विपर्ययः प्रदर्शित एव । एवमपि व्याप्तिबलेन यदि द्रव्यान्तरसंयोगोऽनुमातव्यः, स तर्हि स्पर्शवद्द्रव्यसमवेतो भौतिक एव चोपलब्ध इति प्रसिद्धदेहादिसंयोग एवानुमानपर्यव-सानान्न नवमद्रव्यसिद्धिः ।

---

तथात्वेन कल्पनावसर इति । 'दृष्टकारणे'ति । दृष्टहेतोरभावेऽपि कार्यो-त्पत्तेर्दर्शने हि कारणान्तरकल्पनावसरः । न च दृष्टहेतोर्व्यभिचार इत्यर्थः । 'अत' इति । दृष्टहेतुष्वेव तत्तल्लक्षणयोगेन समवायिहेतुत्वादि व्यवस्था-प्यम् । ज्ञानादिदृष्टहेतुभिन्नस्यानपेक्षितस्याप्रसिद्धस्य द्रव्यान्तरसंयोगस्य हेतुत्वकल्पनायां तु क्लृप्तत्यागोऽक्लृप्तपरिकल्पना च । ज्ञानादेरसमवायि-हेतुत्वे बाधकस्यानुपलब्धेः तद्भिन्नत्वस्यासमवायिहेतुलक्षणे निवेशो-ऽनर्थकश्चेति भावः । 'इहे'ति । सुखादौ तु तद्विपर्ययः—कारणान्तरोपलम्भ-रूपं दृष्टान्ततो वैषम्यं प्रादर्शीति यावत् । एतावता पूर्वोक्तानुमानेऽप्रयो-जकत्वाद्व्याप्यत्वासिद्धिरुक्ता । व्याप्तिस्वीकारे चार्थान्तरमित्याह 'एव-मपी'ति । 'स तर्ही'ति । तर्हि स इत्यन्वयः । दृष्टान्ते सः द्रव्यान्तर-संयोगः भौतिकः—भूतारब्धः भौतिकप्रतियोगिक एव दृष्ट इति प्रकृतेऽपि भौतिकदेहादिप्रतियोगिकात्मानुयोगिकसंयोग एवानुमानपर्यवसानान्न काणादाभिमतनवमद्रव्यरूपाभौतिकमनःसिद्धिप्रत्याशेत्यर्थः । स्पर्शव-

अथोच्येत—भौतिकत्वे हि मनसः पृथिव्याद्यन्यतमत्वेन भवितव्यम् । तच्चानुमानान्तरैर्व्यतिरेकमापादयद्भिः प्रत्यासिद्धम् । तथा हि—न पार्थिवं मनः रसावगमनिमित्तेन्द्रियत्वाद्रसनावत् । न पाथसीयम्, गन्धग्रहणनिमित्तेन्द्रियत्वात् घ्राणवत् । एवमतैजसत्वाद्यपि तत्तदिन्द्रियागोचरग्रहणनिमित्ततया शक्याध्यवसानमित्यभौतिकत्वं मनस इति । तदनुपपन्नम् । धर्मिविशेषविपरीतसाधनात् । रसावगमनिमित्तेन्द्रियत्वमपार्थिवत्वमिव पाथसीयत्वमपि समर्थयति । एवं साधनान्तराण्यपि भूतान्तरव्यतिरेकमिवाऽऽत्मीय-

---

द्रव्यसमवेत इति निदर्शनाभिप्रायेण । स्पर्शवन्नित्यद्रव्यविशेषगुणं प्रत्येव कार्यभूतं द्रव्यान्तरसंयोगस्य हेतुत्वं दृष्टानुसारात्कल्प्यम् । न त्वस्पर्शनित्यद्रव्यविशेषगुणं प्रत्यपीति व्यज्यतेऽनेन । एवं सुखादावसमवायिहेतुत्वेन द्रव्यान्तरसंयोगस्य साधनं न संभवतीत्युक्तम् ।

अथ तत्साधनाभ्युपगमेऽपि विवक्षितमभौतिकं मनस्तत्त्वान्तरं न सेत्स्यतीति प्रपञ्चयति । तत्र शङ्का 'अथोच्येते'ति । प्रत्यासिद्धम्—प्रतिषिद्धम् । पाथसीयं-जलीयम् । शक्याध्यवसानं—शक्यनिश्चयम् । मनो न पार्थिवं तैजसादि वा रसावगमनिमित्तेन्द्रियत्वाद्रसनावत् । मनो न जलीयं गन्धग्राहकेन्द्रियत्वाद्घ्राणवदिति भौतिकत्वनिषेधः । युगपज्ज्ञानानुत्पत्तिलिङ्गेनाणुत्वेन सिद्धेर्न विभुद्रव्यान्तर्भावः । अतो नवमद्रव्यत्वसिद्धिर्मनस इत्यभिमानः । परिहरति 'तदनुपपन्न'मित्यादिना । 'धर्मी'ति । मनसि पक्षेऽभिमतो यो विशेषोऽभौतिकत्वरूपः, तद्विपरीतसाधकत्वादुक्तहेतूनामित्यर्थः । रसग्राहकेन्द्रियत्वं जलीयत्वं गन्धग्राहकेन्द्रियत्वादि पार्थिवत्वादि च मनसः साधयेदिति भावः । अत्र शङ्कते

भूतभावमापादयन्ति। अथ शब्दस्पर्शरूपरसगन्धेषु यद्गुणग्राहि यदिन्द्रियम्, तदेव तद्गुणकभूतारब्धम्; हन्त तर्हि तदेव तदितर-भूतव्यतिरेकितयाऽप्यवगतमिति न तदवगमकतामात्रेणाभिमत-व्यतिरेकसिद्धिः। अपि च शब्दादिगुणावगमसाधारणसाधनतया शरीरमिव पाञ्चभौतिकम्, एकद्वित्रादिमयं वा इतरभूतसंसृष्टमस्तु मनः। यथाऽऽम्नायते 'अन्नमयं हि सोम्य मन' इति। तन्न तत्प्रकृतित्वप्रतिपादनपरम्, अपितु तदधीनवृत्तितामात्रप्रदर्शनार्थम्

'अथ शब्दे'ति। रूपादिषु मध्ये गन्धमात्रग्राहकत्वं पार्थिवत्वसाधकम्। एवं रसमात्रग्राहकत्वादि च जलीयत्वादेः। तथा च मनसः पार्थिव-त्वादिसाधकहेतोरसिद्धिरिति भावः। अत्रोत्तरं 'हन्त तर्ही'ति। यद्भूत-गुणमात्रग्राहकं यदिन्द्रियं तदेव भूतान्तरव्यतिरिक्तत्वेन संप्रतिपन्नमिति भूतान्तरगुणग्राहकतामात्रेण न तत्तद्भूतगुणग्राहकस्य मनसः तत्तद्भूत-व्यतिरेकसिद्धिरित्यर्थः। गन्धाद्यग्राहकत्वमेवापार्थिवादिसाधकम्। तच्च मनसोऽभौतिकानुमाने पक्षे मनस्यसिद्धमिति भावः। अपार्थिवत्वाद्य-नुमाने तत्तद्भूतगुणाग्राहकत्वमुपाधिरिति चोक्तं भवति। एवमभौतिक-त्वानुमानं प्रदूष्य मनसो भौतिकत्वानुमानमुपस्थापयति 'अपि च शब्दादी'ति। मनः पाञ्चभौतिकं पञ्चभूतगुणावगमसाधनत्वाद्देहवदिति प्रयोगः। पञ्चभूतोपादनकत्वे गौरवाज्जातिसाङ्कर्यभीत्या च पक्षान्तरमाह 'एकद्वी'ति। देहस्येवैकभौतिकस्य भूतान्तरोपष्टब्धत्वाद्भूतान्तरगुणोप-लम्भसाधनत्वोपपत्तिर्मनस इति भावः। अस्य पार्थिवत्वे श्रुतिमपि संवादरूपेणोदाहरति 'अन्नमयं ही'ति। श्रुतेरान्यपर्यं शङ्कते 'तन्ने'ति। ननु इत्यादिः। तत्—निरुक्तश्रुतिवचनम्। 'तदधीने'ति। अन्नरसा-प्यायितस्यैव मनसः सङ्कल्पनादिव्यापारक्षमतयाऽन्नमयत्वं श्रूयतेऽन्न-

'आपोमयः प्राण' इत्यादिवत् । अतएवापवर्गदशायामपि मनोऽनुवृत्तिः । दर्शितं हि तत्रैवाष्टमे 'मनसैतान् कामान् पश्यन् रमते' 'मनोऽस्य दैवं चक्षु'रिति । तथा परस्याश्च देवतायाः 'सोऽन्यं कामं मनसा ध्यायीते'ति महोपनिषदि । 'मनसैव जगत्सृष्टि'मिति च पुराणे । उच्यते—सत्यमेवम् । द्रव्यान्तरपरिकल्पनातो वरमेवं वाऽऽश्रयणमित्युक्तम् । परमार्थतस्तु न भौतिकम्, नापि नवमं द्रव्यम् । क्व तर्हीदानीं मनःशब्दः ? । बुद्धावेव । अत एव हि बुद्धिमान् मनस्वीति व्यपदिश्यते । मनसोऽवस्थाभेदाश्च द्रागेवापरोक्ष्यन्ते क्षुभितं मे मनः, प्रसन्नं मे मन

---

रसपरिपोषितत्वलक्षणम्, वायुविशेषस्य प्राणस्येवाम्मयत्वं जलरसाप्यायितत्वादिति भावः । मनोऽभौतिकत्वे श्रुत्यर्थापत्तिमप्याह 'अत एवे'ति । यदि भौतिकं मनः, तर्हि मुक्तौ नानुवर्तेत देहादिवदिति । मुक्तौ मनोऽनुवृत्तौ श्रुतिमाह 'तत्रैवे'ति । छान्दोग्य एवाष्टमे प्रपाठके । 'अन्नमयं ही'ति तु षष्ठे । मुक्तस्य मनोयोगमुक्त्वा नित्यमुक्तस्वभावस्येश्वरस्यापि तत्र प्रमाणमुदाहरति 'तथे'ति । पुराणे—श्रीवैष्णवे पञ्चमेंऽशे । 'तन्ने'त्यादिनोक्तमाक्षेपमर्धाङ्गीकारेण परिहरति 'उच्यते' इति । सत्यमित्यर्धाङ्गीकारे । श्रुतेरान्यपर्येऽभ्युपगमः । मनसोऽतिरिक्ततत्त्वत्वेऽनुपगमः । एवं वाऽऽश्रयणम्—भौतिकत्वाश्रयणं वा । वाकारोऽनास्थायाम् । अत एव स्वाशयं प्रकटीकरोति मनोविषये 'परमार्थतस्तु' इत्यादिना । 'बुद्धावेवे'ति । बुद्धावेव मनःशब्दो वाचकत्वेन वर्तत इत्यर्थः । मुक्तस्येश्वरस्य च बुद्धिमत्त्वादेव समनस्कत्ववाचोयुक्तिः । तयोरमनस्कत्ववचनं तु कर्मकृतबुद्धिवृत्तिनिषेधाभिप्रायमिति भावः । बुद्धेरेव मनस्त्वे लौकिकव्यवहारमुक्त्वा लौकिकप्रत्यक्षमपि प्रदर्शयति

इति । एवं च मनसः करणतया व्यपदेशो बुद्ध्यहङ्कारयोरिव वृत्तिभेदप्रदर्शनपरः पूर्वेषामिति ।

उच्यते–यदि बुद्धिरेव मनः; यदि वा द्रव्यान्तरम्; उभयथाऽपि तस्य न चेतनत्वमिति किमनेनाप्रतिज्ञातस्वरूपविमर्शेन !

( इति प्रासङ्गिकमनस्तत्त्वविमर्शप्रकरणम् )

---

'मनस' इति। मनः प्रसन्नमित्याद्यध्यक्षं प्रत्यक्षबुद्ध्यालम्बनमेव संभवति, न त्वतीन्द्रियमनोगोचरमिति भावः । बुद्धिशब्देन ज्ञानं विवक्षितम् । ननु बुद्धेर्ज्ञानस्यैव मनस्त्वेऽन्तःकरणत्वोक्तिस्तस्य कथं सङ्गच्छत इत्यत्राह 'एवं चे'ति। विषयस्मृत्यादिहेतुभूतव्यापारवत्त्वप्रदर्शनार्थं बुद्धेरन्तःकरणत्वव्यपदेशः, अध्यवसायादिहेतुव्यापारवत्त्वप्रदर्शनार्थं बुद्ध्यादिव्यपदेश इव मनसोऽतिरेकवादेऽपीति भावः । अत्र विमर्शकेन सुखादिसाक्षात्कारकरणत्वेन मनसोऽनुमानं तार्किकाभिमतं न विमृष्टम् । अयमत्राशयः–इन्द्रियसौष्ठवोपघातयोरेव सुखदुःखरूपत्वात्तयोश्चातीन्द्रियत्वान्न तत्साक्षात्कारकारणतया मनोऽनुमेयम् । यद्वा ज्ञानविशेषरूपत्वात्तयोर्ज्ञानस्वयंप्रकाशत्वबलादेव तत्प्रतिभासोपपत्तिरिति ।

'आहे'त्यादिना विमर्शकेनातिरिक्तमनोनिरासे कृते सिद्धान्ती स्वाशयमाविष्करोति 'उच्यत' इत्यादिना । 'अप्रतिज्ञाते'ति । मनसोऽनात्मत्वमेव प्रतिज्ञातम्–प्रकृतम् । मनःस्वरूपतत्त्वविचारस्याप्रकृतत्वान्नास्माभिरिदानीमतिरिक्तमनःसाधने प्रवर्त्यत इत्याशयः । अस्तु वा मुक्तानामीश्वरस्य च मनो बुद्धिरूपमेव । बद्धानां तु मन आहङ्कारिकमन्तःकरणं श्रुतिबलादभ्युपगन्तव्यमेव । स्मृत्यादिकरणतया च तदभ्युपगमार्हम् । परं तु तस्य न चेतनत्वं शक्यमध्यवसितुमिति हार्दम् ॥

अस्तु तर्हि प्राण एवाऽऽत्मा, तथा सति तदन्वयिनि शरीरे सात्मकत्वप्रतीतिः, तद्विरहिणि निरात्मकत्वप्रतीतिश्चोपपद्येयाताम्। देहादुत्क्रान्तिर्लोकान्तरगमनं देहान्तरसञ्चारश्चोपपद्यन्तेतराम्, गत्वरस्वाभाव्यात् प्राणस्य। इतरथा परममहतो महतश्च स्पर्शविरहिणः परिस्पन्दानुपपत्तेरुत्क्रान्तिगत्यागतिश्रुतयो भाक्ताः स्युः।

(इति प्राणात्मत्वपूर्वपक्षप्रकरणम्)

इदमप्यसत्; वायुत्वादेव बाह्यवायुवत् प्राणस्य चैतन्यानुपपत्तेः। वृत्तिहीनेऽप्यात्मनि सुषुप्तौ प्राणस्य वृत्तिमत्त्वाच्च। तद्वृत्त्या हि सुप्तस्यापि सप्तधातुभावेनाशितपीतद्रव्यपरिणामः; श्वासप्रश्वासौ च। तनुतरतेजोबन्धानुविद्धः कौष्ठ्यमारुतो हि प्राणः। स च कण्ठमुखनासाभ्यन्तरे बहिश्च रेचितः त्वचा स्पृश्यमानो घटादिरिव स्फुटमनात्मतया चकास्ति।

---

प्राणात्मवादमुपक्षिपति 'अस्तु तर्हीं'ति। प्राणवति देहे जीवतीति, तद्रहिते च मृत इति व्यवहारात्प्राण एव जीवनकर्तृत्वाज्जीव इति भावः। 'इतरथे'ति। परममहतः, अमहतश्च, इति पदच्छेदः। अमहत्त्वमणुत्वम। निःस्पर्शत्वादात्मनि न क्रिया विभुत्वेऽणुत्वे वा संभवतीति भावः।

प्रतिक्षिपति वादमेनम् 'इदमप्यस'दिति। अत्र प्रयोगत्रयम्— प्राणो नात्मा, सुषुप्तौ व्यापारवत्त्वरूपादात्मवैधर्म्यात्। प्राणो नात्मा, त्वाचप्रत्यक्षग्राह्यत्वाद्घटादिवत्। प्राणो नात्मा वायुत्वाद्व्यजनपवनवदिति। 'तद्वृत्त्या' इति। प्राणव्यापारस्य भुक्तपीताहारपरिणामहेतुत्वम् 'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः। प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥' इति गीतास्मृतिसिद्धम्। 'तनुतरे'ति। अल्पतरपृथिवीजलतेजोंशोत्तम्भितो जठरगतो वायुविशेषः प्राण इत्यर्थः।

किञ्च—निरस्तो देहचैतन्यप्रतिषेधप्रकारतः ।
प्राणात्मवादो न पृथक् प्रयोजयति दूषणम् ॥ ९ ॥

अविभुत्वेनास्याऽऽत्मनः स्पर्शविरहिणोऽपि प्रयत्नादृष्टप्रेरणानुगुण्येन मनस इवोत्क्रान्तिगत्यादयो युज्यन्त इति न तन्निर्देशानामसुख्यार्थता । परिमाणनिरूपणेऽप्येतद्भविष्यतीत्यलमधुना ।

( इति प्राणात्मवादनिरासप्रकरणम् )

भवतु तर्हि संविदेवाऽऽत्मा, अजडत्वात् । जडत्वप्रतिबद्धं ह्यनात्म्यं घटादिषु दृष्टम् । जडत्वं च संविदो निवर्तमानं तदपि

---

प्राणात्मवादे देहात्मवाददूषणजातमतिदिशन्नाह 'निरस्त' इति । अनिरस्तोऽदूषितो हि प्रतिपक्षितयाऽवस्थितः प्राणात्मवादः निरासकयुक्त्यन्तरापादनप्रयोजकीभावमापद्येत । न तु देहात्मवाददूषणैरेव दूषितोऽसत्प्राय इति भावः ॥ ९ ॥

आत्मनो गत्यनुपपत्तिं परिहरति 'अविभुत्वेने'ति । विभुत्वे गतिर्नोपपद्येतेति युक्तम् । अणुत्वे तु मनस इव निःस्पर्शस्यापि गतिरात्मन उपपद्यत एव । न च स्पर्शस्य गतौ हेतुत्वं प्रयत्नादृष्टादिप्रेरणमन्तरेति भावः । 'परिमाणे'ति । एतदात्मनो गतिमत्त्वमात्मनः परिमाणनिरूपणप्रकरणेऽपि निरूपितं भविष्यतीति अधुनैतावता गतिमत्त्ववर्णनेनालमित्यर्थः । अलममुनेति पाठान्तरम् ।

अत्र संविदात्मवादी समुत्तिष्ठते 'भवतु तर्हीं'ति । संविदात्मा, अजडत्वादिति प्रयोगः । व्यतिरेकव्याप्तिमाह 'जडत्वे'ति । प्रतिबद्धं—व्याप्यम् । अनात्म्यम्—अनात्मत्वम् । आत्मनो भाव आत्म्यं तस्याऽभाव इति व्युत्पत्तेः । व्यतिरेकोपनयनिगमने आह 'जडत्वं चे'ति । तदपि—अनात्म्यमपि । व्यापकनिवृत्तेर्व्याप्यनिवृत्त्याक्षेपकत्वात् व्यापक-

निवर्तयति । अजडत्वं च संविदः सत्तयैव प्रकाशमानत्वात् । नहि सती संविद्धटादिरिवाप्रकाशमानाऽवतिष्ठते, येन परायत्तसिद्धिराश्रीयेत ।

( इति संविदात्मत्वपक्षोपस्थापनम् )

स्यान्मतम्—जातायामपि संविदि विषयमात्रं प्रथते । न खलु नीलमिदमिति प्रतियन्तः तदैवानीलमनिदंरूपमपि संवेदनं प्रतीमः । अतः स्वरूपसत्यैव संविदा इन्द्रियसन्निकर्षेणेव विषयः प्रकाश्यते । ततश्च तद्गतागन्तुकप्रकाशातिशयदर्शनेन पश्चात् संविदनुमास्यते इति ।

( इति संविदनुमेयत्वपक्षेण तदजडत्वाक्षेपः )

---

जडत्वनिवृत्त्या व्याप्यानात्म्यनिवृत्तिः सिद्ध्यतीति भावः । अजडत्वहेतोरसिद्धिं परिहरति 'अजडत्वं चे'ति । स्वसत्तामात्रतः प्रकाशमानत्वात् परायत्तप्रकाशत्वलक्षणजडत्वाभाव इति भावः । 'नही'ति । परायत्तसिद्धिः—पराधीनप्रकाशा । जडेति यावत् ।

अत्र संविदनुमेयत्ववादिनां भाट्टानां मतमनुवदति 'स्यान्मत'मिति । 'विषयमात्र'मिति । न हि नीलोऽयं घट इति ज्ञाने ज्ञानस्य विषयत्वं संभवति पटादेरिवेति भावः । ननु घटमहं जानामीति ज्ञानप्रकाशस्तर्हि कथम् ? तत्राह 'ततश्चे'ति । ततः पश्चाच्चेत्यन्वयः । चस्त्वर्थे । अयं भावः—ज्ञानाद्विषये ज्ञातता नाम धर्मो जायते । स एव प्रकाश इत्युच्यते । स एव ज्ञानकृतोऽर्थस्यातिशयो नाम । स च प्रत्यक्षो ज्ञातुः । तेन चार्थप्रकाशरूपलिङ्गेनात्मनि तद्धेतुं ज्ञानमनुमिनोति । आनुमानिकज्ञानालम्बनश्च घटमहं जानामीति निरुक्तप्रत्ययः । अनुमानप्रकारश्च इयं घटत्वप्रकारकज्ञातता घटत्वप्रकारकज्ञानजन्या तथा-

तन्न। ज्ञानव्यतिरेकिणोऽर्थधर्मस्य प्रकाशस्य निपुणमपि निरीक्षमाणानां रूपादिवदनुपलब्धेः। उभयाभ्युपेतसंविदैव सकलव्यवहारोपपत्तौ च तत्कल्पनानुपपत्तेः। वित्तिवेदितृप्रतिभासशून्यायां च विषयवित्तावभ्युपगम्यमानायां घटस्तावदयम्, अहं तु जानामि न वेति, न ज्ञायते इति च कदाचित्प्रतिभासः स्यात्।

---

विधज्ञाततात्वादिति। तद्धर्मप्रकारकज्ञानज्ञाततयोः कार्यकारणभावाच्च व्याप्तिसिद्धिः।

एतद्भाट्टमतं प्रतिक्षिपति 'तन्ने'ति। 'ज्ञाने'ति। ज्ञानविषयता हि ज्ञातता। तद्विषयतयाऽर्थसंबद्धज्ञानव्यतिरिक्ततया विषयधर्मस्यातिशयविशेषस्यासिद्धिः। मम घटज्ञानं जातम्, ज्ञातो मया घट इति प्रतीत्योर्धर्मिधर्मभावव्यत्यासमन्तराऽर्थभेदस्यानानुभाविकत्वादिति भावः। प्रत्यक्षासिद्धिमुक्त्वा ज्ञाततारूपातिरिक्तप्रकाशे कल्पनासिद्धिमाह 'उभये'ति। ज्ञानविषयतयैवार्थे ज्ञातव्यवहारोपपत्तेस्तदनुपपत्तिलक्षणं ज्ञाततायामतिरिक्तायां कल्पकमसिद्धमिति भावः। अर्थज्ञानेषु ज्ञानस्य ज्ञातुरहमर्थस्यात्मनश्च नियतं भानमिति प्राभाकरप्रक्रियया समर्थयति 'वित्ती'ति। ज्ञानज्ञात्रनवगाहिन्यां ज्ञेयप्रतीतावुपगतायां जातेऽपि घटज्ञानेऽहं तज्ज्ञानवान् न वेति संशयः, तज्ज्ञानाभाववानहमित्यादिविपरीतनिश्चयश्च कदाचिद्भवेत्, स्वस्य ज्ञानवत्त्वेनाप्रतिभासात्। तत्त्रितयविषयकत्वं ज्ञानस्यैषितव्यमिति भावः। तथाच स्वप्रकाशत्वसिद्धेर्ज्ञानस्य तत एव विषयव्यवहारवत् ज्ञातताव्यवहारोऽपि घटत इति नार्थान्तरज्ञाततकल्पनावसर इति हार्दम्। अथातीतानागतेष्वर्थेषु ज्ञातताया उत्पत्त्यसंभवात्तत्र ज्ञानेनैव ज्ञातताप्रतीतिरुपपाद्या,

नचैवमस्ति । अतीतानागतविषयग्रहणस्मरणेषु व्याहारव्यवहारयोरभावे, भावेऽपि, ततः प्रागेव विदितत्वप्रतीतेः नानुमानिकी तत्र विषय(प्रकाश)सिद्धिः, नतरां तत्पूर्विका तत्र बुद्धिसिद्धिः । तथाहि—केनचित्प्रेरितः प्रणिधाय स्मृत्वाऽनन्तरमेव प्रतिवदति स्मृतमद्य मयेति । न चायमेव व्याहारस्तत्र लिङ्गम्; तत्पूर्वकत्वात्, अन्योन्याश्रयणापत्तेश्च । स्वव्याहारेण स्वज्ञानानुमानं क इव निरपत्रपः प्रतिजानीत ? ।

( इति संविदनुमेयत्वनिरासः )

---

समैव चेयं रीतिः प्रत्यक्षेऽपीत्याशयेनाऽऽह 'अतीते'ति । अत्र ग्रहणमनुमानादिलक्षणम् । व्याहारः—शाब्दो व्यवहारः । व्यवहारः कायिको हानोपादानादिः । उभौ विदितत्वप्रतीतिमूलावत्र ग्राह्यौ । विदितप्रतीतिमूलयोस्तयोः सद्भावेऽसद्भावे वा विदितत्वव्यवहारात्पूर्वमेव विदितत्वप्रतीतेस्तन्मूलभूताया उदय इति न तत्र व्याहारलिङ्गेन विदितत्वमनुमाय ततो वेदनानुमानम् । किन्तु स्वयंप्रकाशवेदनबलादेव विदितत्वप्रतीतिः अथ च तन्मूलव्यवहार इति भावः । 'आनुमानिकी तत्र विषयसिद्धि'रिति क्वचित्पाठेऽयमर्थः—विषयस्य सिद्धिः प्रकाशरूपाऽनुमानप्रमाणप्रतिपन्नेति । 'विषयप्रकाशसिद्धि'रिति पाठे तु अनुमानप्रमाणजनिता विषयप्रकाशानुमितिरित्यर्थः । व्यवहारात्पूर्वमेव ज्ञातत्वप्रतीतिं स्मृतिस्थले उदाहरति 'केनचि'दिति । स्मरणेनैवार्थस्य स्मृतत्वमवबुद्ध्य व्याहरति 'स्मृतमद्य मये'ति । यदि लैङ्गिकी स्मृतत्वप्रतीतिः, तर्ह्यनेनैव व्याहारेण लिङ्गेन स्वस्यार्थे स्मृतत्वप्रतीतिरानुमानिकीति वाच्यम् । तत्र चान्योन्याश्रयणं प्रसज्यते । स्मृतत्वप्रतीत्या तद्व्यवहारः, तेनैव च सा स्वस्येति । तथा च ज्ञानस्वप्रकाशत्वनिबन्धनैव ज्ञातत्वप्रतीतिरेष्टव्येति भावः । 'स्वव्याहारेणैवे'ति । निरपत्रप इव क

अन्यच्च—यत्संबन्धादर्थान्तरे यो व्यवहारः धर्मभेदो वा, स तस्मिन्नुपलभ्यमानस्तत्स्वरूपप्रयुक्तः; न तु तत्संबन्धनिबन्धनः। यथा सत्तासंबन्धात् पृथिव्यादिषु सद्व्यवहारः, रूपसंबन्धाच्च चाक्षुषत्वं सत्तायां रूपे च। एवं संवित्संबन्धात्प्रवर्तमानो घटादिषु प्रकाशत इति व्यवहारः प्रकाशमानत्वं वा धर्मः संविदि तु परि-

---

इत्यन्वयः। निरपत्रपः—निर्लज्जः। स्वव्याहारेण—अहं जानामीति स्वनिष्ठ-ज्ञानव्यवहारेण, स्वज्ञानानुमानम्—स्वनिष्ठज्ञानप्रतीतिं लैङ्गिकीम्। व्यवहारे व्यवहर्तव्यज्ञानस्य हेतुत्वात् स्वकीयज्ञानव्यवहारेणैव स्वस्य स्वकीयज्ञानानुमानमिति प्रतिज्ञाऽनुपपन्नाऽत्यन्तमिति यावत्। परकीयेन परात्मनो ज्ञानव्यवहारेण तदन्यस्य परात्मनिष्ठज्ञानानुमानसंभवात् 'स्वव्याहारेण स्वज्ञानानुमान'मिति निर्दिष्टम्। एवं ज्ञाततताया असिद्धिः; ज्ञात इति प्रतीतिव्यवहारयोः स्वप्रकाशज्ञानत एवोपपत्तेः। ज्ञानस्य स्वप्रकाशत्वं च जाते ज्ञाने स्वात्मनि ज्ञानसंशयज्ञानाभावनिश्चयानुदय-बलात् निश्चेयमिति वर्णितम्।

इदानीमभ्युपगम्यापि विषयनिष्ठं धर्मान्तरं प्रकाशं तदवष्टम्भेनैव ज्ञानस्य स्वयंप्रकाशत्वं समर्थयति प्रकाशानुमेयज्ञानवादनिरासार्थम् 'अन्यच्चे'त्यादिना। अत्र प्रयोगद्वयम्—अनुभूतिरनन्याधीनतद्धर्मा स्वसंबन्धादर्थान्तरे तद्धर्महेतुत्वात् यथा रूपम्, तद्धि स्वसंबन्धाद्घटादौ चाक्षुषत्वे हेतुः स्वस्मिन् रूपान्तरानपेक्षतद्धर्मवत्; अनुभूतिः अनन्याधीनस्वव्यवहारा स्वसंबन्धादर्थान्तरे व्यवहारहेतुत्वात्। यथा सत्ता। सा हि स्वसंबन्धाद्घटादौ सदिति व्यवहारहेतुः स्वीयसद्व्यवहारे सत्तान्तरानपेक्षा इति। आद्यः प्रयोगोऽत्र ज्ञाततारूपं धर्मान्तरमभ्युपेत्य,

दृश्यमानो न संवित्संबन्धापेक्षः, अपि तु तत्स्वरूपप्रयुक्त इति स्वयंप्रकाशत्वात् सैवाऽऽत्मेति । किंच योऽपि संविदोऽन्यं संवेदितारमभ्युपगच्छति, अभ्युपगच्छत्येवासौ संविदम् । नह्यसत्यामेव संविदि संवेत्तीत्युपपद्यते । एवं चेत्, उभयवादिसंप्रतिपन्नतया सैव वरं वेदित्री भवतु; किमन्येन कल्पितेन ? ।

( इति संविदः स्वयम्प्रकाशत्वात्मत्वसाधनम् )

ननु अहं जानामीति ज्ञानातिरिक्तस्तदाश्रयभूतोऽयमात्मा प्रतीयते । सत्यम्; स तु विकल्परूपतया साक्षात्प्रत्यक्ष इति न

---

द्वितीयस्तु तदनुपगमेन । हेतुसाध्यनिष्कर्षः श्रुतप्रकाशिकादितोऽनुसन्धेयः । अनेन ज्ञाननिष्ठप्रकाशस्य ज्ञानान्तरानपेक्षत्वसिद्ध्या ज्ञानस्य स्वयंप्रकाशत्वोपपत्तिः । तथा च तस्यैवात्मत्वमित्याह 'स्वयंप्रकाशत्वा'-दिति । अत्रेदमाकूतम्—आत्मनः स्वयंप्रकाशत्वं तावत् 'अत्रायं पुरुषः स्वयंज्योतिर्भवती'त्यादिश्रुतिसिद्धम् । ज्ञानस्य स्वयंप्रकाशत्वं च निरुक्तानुमानतः । अतस्तस्यैवात्मत्वं न्याय्यमिति । संविद आत्मत्वे लाघवमप्याह 'किं चे'ति । वेदित्री—ज्ञातृरूपा आत्मेति यावत् । भवत्विति लोट् कामचाराभ्यनुज्ञायाम् । इतिपदमनुषञ्जनीयम् । संविद एव प्रकाममात्मत्वमित्यभ्यनुज्ञानं श्रेष्ठमित्यर्थः ।

संविद आत्मत्वे बाधकमाशङ्कते 'नन्वह'मिति । प्राधान्यादहमर्थस्यैवात्मत्वं प्रतीयते, नतु धर्मतया भासमानायाः संविद इति भावः । अर्धाङ्गीकारेण परिहरति 'सत्य'मिति । ज्ञातृत्वप्रतीतावुपगमः । तत्प्रामाण्येऽनुपगमः । तदप्रामाण्ये हेतुमाह 'स तु' इति । ज्ञाता तु भेदरूपतया न साक्षात् प्रत्यक्षप्रमाणसिद्धः, किन्तु भ्रान्तिसिद्धः । स्वलक्षणवस्तुमात्रावगाहि निर्विकल्पकमेव हि प्रमाणम् । धर्मधर्मिभावादि-

शक्यः संश्रयितुम्। भेदज्ञानसिद्धवत्कारेण पृथग्वस्तुतया गृहीताव्यभिचारेण सहोपलम्भनियमेन, अप्रकाशात्मनश्च स्वभावविरोधादेव प्रकाशायोगात्, प्रकाशस्वाभाव्ये च संवेदनत्वमित्यादिना

---

कल्पितभेदावगाहि सविकल्पकं तु भ्रमलक्षणमिति हार्दम्। ज्ञातृभेदप्रतीतेः यौक्तिकबाधमप्याह 'भेदज्ञाने'ति। सिद्धवत्कारेणेत्यस्याग्रेऽपीति योज्यम्। अपृथग्वस्तुतयेति पाठः संभाव्यते। वा अप्रकाशात्मन इति पदच्छेदः। तथा चायमर्थः—भेदज्ञानसिद्धवत्कारेणापि—क्वचिद्भेदज्ञानस्य प्रामाण्योपगमेनापि। संवेदनानां भेदस्य सौगतैः तत्त्वतः इष्यमाणत्वात्। अपृथग्वस्तुतया—अभिन्नवस्तुत्वेन साध्येन, गृहीता—व्यभिचारेण—गृहीतव्याप्तिकेन, सहोपलम्भनियमेन—ज्ञानज्ञात्रोः सहोपलम्भनियमरूपहेतुना, ज्ञातुरप्रकाशस्वभावत्वे प्रकाशायोगः स्वभावविरोधादेव, प्रकाशस्वभावत्वे च संवेदनत्वमेवेत्यादिना वा संविद्भेदसाधकेन संविद्भेदबाधकेन हेतुना अप्रकाशात्मनः संविद्भिन्नस्य ज्ञातुरहमर्थस्यात्मनः तत्त्वं—स्वरूपं दुरुपगमम्—उपगन्तुमशक्यमित्यर्थः। तृतीयान्तद्वयं दुरुपगममित्यनेनान्वितम्। ज्ञाता संविदभिन्नः संविदा सहैवोपलभ्यमानत्वात् प्रकाशस्वभावत्वाद्वा इति प्रयोगोऽत्र बोध्यः। यद्वा पृथग्वस्तुतयेत्येव स्यात्पाठः। अव्यभिचारनिरूपकस्याभेदरूपसाध्यस्योपस्थितिस्त्वर्थात्। प्रकाशात्मन इत्येव चास्तु पदच्छेदः। सहोपलम्भनियमेन, प्रकाशस्वाभाव्ये च संवेदनत्वमित्यादिना वा हेतुना प्रकाशात्मनः संविदभिन्नस्य सिद्ध्यत आत्मनः, भेदज्ञानसिद्धवत्कारेण—भेदज्ञानप्रामाण्यसिद्धवदङ्गीकरणेन, पृथग्वस्तुतया—

वा प्रकाशात्मनोऽहमित्यंशस्य तत्त्वमेव दुरुपगमम् । ग्राह्यविकल्प-प्रत्युद्धारेऽप्येष एव प्रकारः । अतो वासनाभिधानसमनन्तरप्रत्यय-सामर्थ्यादनाद्यविद्यावशाच्च समारोपितावास्तवग्राह्यग्राहकविकल्पो-ल्लेखिनी स्वयंप्रकाशा संविदेव परमार्थसती । सैवाऽऽत्मेति सौगताः प्रकटाः प्रच्छन्नाश्च ।

यथाऽऽहुः प्रकटाः—"अविभागोऽपि बुद्ध्यात्मा विपर्यासित-दर्शनैः । ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ॥" इति ।

---

संविद्भिन्नत्वेन तत्त्वम् अस्तित्वं, दुरुपगममित्यर्थः । निरुक्तप्रकारं ग्राहकभेदनिरासहेतुं ग्राह्यभेदनिरासेऽप्यतिदिशति 'ग्राह्ये'ति । सहोप-लम्भनियमात् प्रकाशस्वाभाव्ये च संवेदनत्वमित्यादितो वा संविद-भिन्नत्वं नीलादेर्विषयस्येति ज्ञानभिन्नत्वेन नीलाद्यर्थभेदस्याप्यसत्त्व-मित्यर्थः । ननु ग्राह्यग्राहकयोः संविदभेदे ज्ञातृज्ञेयभेदानां ज्ञानतो भेदेनावभासः कथमित्यत्राह 'अत' इति । दोषमूलो ग्राह्यग्राहकभेदाव-भासो मिथ्या; संविदाभासमात्रं सत्यमिति भावः । तत्र वासना दोष इति प्रकटानां सौगतानां योगाचाराणां पक्षः । अनाद्यविद्या दोष इति प्रच्छन्नानां मायावादिनाम् । ग्राह्यग्राहकविकल्पः—ज्ञेयज्ञातृभेदः ज्ञान-विषयत्वज्ञानाश्रयत्वलक्षणः ।

उक्तार्थे प्रकटानां सौगतानां संमतिं प्रदर्शयति 'अविभागोऽपी'ति । बुद्धिरेवाऽऽत्मा । सा च निर्भेदापि भ्रान्तिज्ञानैः नीलभेदादिग्राह्यभेद-चैत्रमैत्रादिग्राहकभेदप्रत्यक्षत्वानुमानत्वादिलक्षणज्ञानभेदवतीव प्रतीयत इति कारिकार्थः । मायिनां संमतिमुपदर्शयति 'शुद्ध'मिति । भेद-

यथा वा प्रच्छन्नाः—"शुद्धं तत्त्वं प्रपञ्चस्य न हेतुरनिवृत्तितः। ज्ञातृज्ञेयविभागस्य मायैव जननी ततः ॥" इति ॥

( इति संविदात्मत्वपूर्वपक्षप्रकरणम् )

अत्राऽऽह—क्षणभङ्गिनी प्रतिविषयमन्यान्या च संविच्चकास्ति। सैव चेदात्मा, पूर्वेद्युर्दृष्टमपरेद्युरहमिदमदर्शमिति कथमिव प्रत्यभिजानीयात्?। न च निरालम्बनप्रतिभाभेदमात्रतयेह समाधेयम्। निरालम्बनत्वप्रतिज्ञायाः प्रत्यक्षादिसकलप्रतीतिबाधितविषयत्वात्।

---

प्रपञ्चस्य शुद्धं तत्त्वं नोपादानम्। तथा सति परमार्थत्वापत्त्याऽनिवृत्तिप्रसङ्गात्। ततस्तस्य प्रपञ्चस्य मायैव—विविधविचित्रमिथ्यार्थप्रतिभासहेतुः मिथ्याभूताऽनाद्यविद्यैव जननी उपादानमिति कारिकार्थः। निर्विशेषसन्मात्रं चिद्रूपं परमार्थः। तत्राधिष्ठाने अपरमार्थनानाभेदप्रतिभासो माययेति भावः।

आत्मनः स्वयंप्रकाशत्वं श्रौतम्। संविदस्तथात्वं च युक्तिसिद्धम्। तत्तस्या एवात्मत्वम्। तद्भिन्नस्य तु सर्वस्य दोषमूलत्वादाभासमात्रत्वमिति संविदात्मत्वं पूर्वपक्षितम्। तत्र चास्ति मतद्वयम्। क्षणिकविज्ञानमात्मा, नित्यविज्ञानमात्मेति च। तत्र क्षणिकविज्ञानात्मत्वमतं प्रकटसौगतानां तावन्निरस्यति 'अत्राऽऽहे'त्यादिना। नित्यात्मवादी क्षणिकविज्ञानात्मवादे दूषणमाहेत्यर्थः। 'क्षणभङ्गिनी'ति। क्षणरूपा विनाशस्वभावा विषयभेदेन नाना च संविदुपलभ्यते। तस्याश्चेदात्मत्वं प्रत्यभिज्ञादिकं नोपपद्यते। अनुसन्धातुरात्मनः स्थिरत्व एव तदुपपत्तेरिति भावः। अथ प्रतिभाया इव निर्विषयत्वं प्रत्यभिज्ञायाः शङ्कते 'न च निरालम्बने'ति। प्रत्यभिज्ञा निर्विषया प्रतिभात्वात् मानसकल्पनाविलासवदिति प्रयोगः। अत्र बाधितत्वमाह 'निरालम्बन-

साधनस्य च सालम्बनत्वे तदविशेषादशेषशेमुषीणां तथात्वापत्तेः; निरालम्बनत्वे च साधनाभावादेव साध्यासिद्धेः। प्रपञ्चितश्च पूर्वोत्तरमीमांसाभागयोर्निरालम्बनत्वप्रतिषेधः; यथार्थख्यातिसमर्थनेन च शास्त्र इति न व्यावर्ण्यते ।

अत एव न सन्तानाश्रयणेनापि प्रत्यभिज्ञोपपादनं साधीयः। विज्ञानक्षणव्यतिरिक्तस्य स्थायिनोऽनुसन्धायिनः सन्तानस्याभ्युप-

---

त्वे'ति । ज्ञानसामान्यस्य सविषयकत्वनियमान्निर्विषयकत्वे ज्ञानत्वायोगात् ज्ञानविशेषे निर्विषयकत्वसाधनं बाधितविषयमित्यर्थः । प्रतिभायामपि नात्यन्ताय निर्विषयत्वम् । अन्यत्र सत एवान्यत्र भानात् । क्वचिद्याथार्थ्यस्यापि दृष्टेरिति भावः । ज्ञानसामान्यस्य निर्विषयकत्वमिति पक्षे स्वप्रवृत्तिव्याघातमप्याह 'साधनस्य चे'ति । निर्विषयकत्वसाधकानुमानस्य सविषयकत्वे तदविशेषेणाशेषज्ञानानां सविषयकत्वं स्यात् । तस्य निर्विषयकत्वे च न निर्विषयकत्वरूपसाध्यसिद्धिरिति साधनार्थप्रवृत्तिवैयर्थ्यमिति भावः । 'प्रपञ्चितश्चे'ति । पूर्वमीमांसाप्रथमाध्यायप्रथमपादे उत्तरमीमांसाद्वितीयाध्यायद्वितीयचरणे च ज्ञाननिरालम्बनत्वमतनिराकरणं सूत्रतद्व्याख्याकर्तृभिः कृतम् । शास्त्रे च न्यायतत्त्वाख्ये सर्वविज्ञानयाथार्थ्यसमर्थनेन कृतमित्यर्थः । अत्र पूर्वोत्तरमीमांसाभागयोरित्यनेन मीमांसाया विंशतिलक्षण्या ऐकशास्त्र्यं तत्पूर्वोत्तरभागरूपत्वं च कर्मब्रह्मविचारयोरभिमतम् ।

ननु विज्ञानं द्विविधं प्रवृत्तिविज्ञानमालयविज्ञानं चेति । तत्राऽऽद्यं नीलपीतादिज्ञानम् । अन्त्यं चाहमाकारमात्मरूपम् । क्षणिकत्वेऽप्युभयविधविज्ञानस्याऽऽलयविज्ञानधारानुवृत्त्या प्रत्यभिज्ञोपपद्यत इत्यत्राह—'अत एवे'ति । 'विज्ञानक्षणे'ति । विज्ञानमेव क्षणो विज्ञान-

गमे स्वसिद्धान्तत्यागः, परसिद्धान्ताभ्युपगमश्च । अनभ्युपगमे प्रत्यभिज्ञानुपपत्तिः । न ह्यन्येनानुभूतेऽन्यस्य प्रतिसन्धानसंभवः । नच सुसदृशतया भेदाग्रहणेन प्रदीपादाविव प्रमातरि प्रत्यभिज्ञाभ्रान्तिः । युज्यते हि तत्रैकस्यैव पूर्वापरव्यक्तिदर्शिनः तुल्यसंस्थानतया व्यक्तीनां भेदमविदुषः तथा भ्रमः । इह तु संविद्व्यक्तयः परस्परवार्तानभिज्ञा निरन्वयविनाशिन्यश्च सुगतमत इति न तास्वेकत्वभ्रमस्याऽऽश्रयता विषयता वा संभविनी । नच सुसदृशत्वेऽपि

---

क्षणः । अनुसन्धायिनः—पूर्वानुभूतार्थप्रतिसन्धानकर्तुः क्षणिकविज्ञानव्यतिरिक्तस्य स्थिरस्योपगमे सर्वं क्षणिकमिति सिद्धान्तत्यागः । प्रकारान्तरेण ज्ञानव्यतिरिक्तज्ञात्रभ्युपगमप्रसङ्गश्चेति भावः । 'अनभ्युपगम' इति । क्षणिकक्रमिकविज्ञानसमुदायलक्षणं सन्तानं समुदाय्यनतिरिक्तं चेत्प्रत्यभिज्ञानुपपत्तिरेव, सन्तानान्तर्गतस्य पूर्वस्यानुभवितुर्विनष्टत्वात्, उत्तरस्य चाननुभवितृत्वेन प्रतिसन्धानायोगादिति भावः । अत्रेदमनुसन्धेयम्—क्षणिकानां समुदायभावोऽपि न घटते, स्थिरैकदेशकालाद्युपाधिक्रोडीकारासंभवात् सौगते नये । एकबुद्धिक्रोडीकारस्त्वतिप्रसक्तः । भिन्नसन्तानिविज्ञानानामपि तथात्वेन सन्ताननियमानुपपत्त्यापत्तेः । पूर्वपूर्वविज्ञानोपादानकोत्तरोत्तरविज्ञानपरम्परा सन्तानमिति चेन्न । विनष्टस्य कार्यकालेऽसत उपादानत्वायोगात् । पूर्वत्वमात्रस्यातिप्रसक्तत्वाच्च । तत्सन्ताननियमानुपपत्तिरेवेति । नन्वालयविज्ञानस्य सौसादृश्येन ऐक्यभ्रान्त्या प्रतिसन्धानं भ्रमात्मकं घटत इति शङ्कते 'न चे'ति । भ्रान्तिरूपा च प्रत्यभिज्ञा न घटत इत्यर्थः । घटते इति शेषः । दृष्टान्तवैषम्यमुपपादयति 'युज्यत' इति । दृष्टान्ते भिन्नकालिकदीपकलिकयोः सुसदृशयोः साक्षात्कर्ता स्थिरश्चेतनः

अन्येन कृतमात्मकृततयाऽन्योऽनुसन्धातुमलमित्यागमापायिसंवित्सन्तानाश्रयः प्रत्यभिज्ञानक्षणस्थायी चेतनोऽभ्युपगन्तव्यः ।

(इति क्षणिकविज्ञानात्मवादनिरासप्रकरणम्)

कश्चिदाह—न संविदनित्या, प्रागभावाद्यसिद्धेः । तदसिद्धिश्च तस्याः स्वतःसिद्धत्वात् । नहि स्वतःसिद्धस्य प्रागभावादयः स्वतोऽन्यतो वा सिद्ध्यन्ति । स्वयं हि स्वाभावमवगमयत् सद्वा असद्वा साधयेत् । सत्त्वेऽभाव एव नास्तीति कथं साधयेत् ? । असत्त्वादेव साधकस्य पक्षान्तरे नतरां साधकत्वमिति न स्वतः तावत्तत्सिद्धिः ।

---

प्रसिद्धो भ्रान्तिभाक्त्वयोग्यः । तत्तत्र भ्रान्तिरूपा प्रत्यभिज्ञा घटते । न च तथा प्रकृते संविदां द्रष्टाऽतिरिक्तः स्थिरोऽभ्युपेयते । अतः संविदेवात्माऽन्येनात्मनाऽभेदं स्वात्मनि भावयेदिति वाच्यम् । परस्परवार्तानभिज्ञत्वान्नान्यस्माद्भेदमभेदं वा स्वात्मनि गृहीतुमलम् । निरन्वयविनाशाच्च पूर्वधर्मानुवृत्तिबलादपि पूर्वानुभूतप्रतिसन्धानादि न घटते इति समुदिताशयः । परस्परवार्तानभिज्ञत्वं—ज्ञानान्तरतद्विषयाग्राहित्वम् । निरन्वयविनाशित्वं—समूलविनाशित्वं स्वरूपतो धर्मतश्च । उत्तरोत्तरक्षणेषु पूर्वपूर्वविज्ञानक्षणतो वासनोदयात्प्रतिसन्धानोपपत्तिरित्यपि न । अनन्तवासनोत्पत्तिविनाशादिकल्पनायामतिगौरवादिति दिक् । शिष्टं स्पष्टम् ।

अत्र नित्यात्मवादिना केनचिदुक्तं संविद आगमापायित्वादिकमसृष्यमाणोऽद्वैती प्रत्यवतिष्ठते । तदुच्यते 'कश्चिदाहे'ति । स्वस्यासत्त्वे ग्राहकाभावात् स्वस्य स्वत्त्वे ग्राह्याभावाच्च न स्वतः संविदः प्रागभावग्रहः । संविदो ज्ञानान्तरागोचरत्वेनान्यज्ञानतस्तज्ज्ञानप्रागभावग्रहोऽपि न संभवति । ज्ञानविषयीकारमन्तरा तदुपरक्तप्रागभाव-

नाप्यन्यतः; अनन्यगोचरत्वादनुभूतेः। अनुभाव्यत्वे च घटादिवदननुभूतित्वप्रसङ्गात्। अतः सा न जायते। जन्माभावादेवेतरेऽपि भावविकाराः निराकार्याः, तत्प्रतिबद्धत्वात्तेषाम्। अत एव नानात्वमपि संविदि प्रत्युक्तम्; उत्पत्तिमत्त्वव्यापकनिवृत्त्या तद्व्याप्यभूतनानात्वस्यापि निवृत्तिसिद्धेः। नह्यजं विभाग्यस्ति। चैत्यत्वाच्च भेदेतरेतराभावादयो न तद्धर्माः, रूपादिवत्। अतोऽस्या न मेयः कश्चिदपि धर्मोऽस्ति। अतो निर्धूतनिखिलभेदविकल्पनिर्धर्मप्रकाशमात्रैकरसा कूटस्थनित्या संविदेवाऽऽत्मा परमात्मा च।

---

ग्रहणायोगात्। ज्ञानान्तरगोचरत्वे च घटादिवज्जडत्वप्रसङ्गात्। तत्प्रमाणाभावात्प्रागभावः संविदो नास्तीति भावः। 'अत' इति। प्रागभावाभावाद्उत्पत्तिर्नास्ति संविदः। प्रागभावस्याप्युत्पादकान्तर्गतत्वादित्यर्थः। 'जन्माभावा'दिति। इतरे भावविकाराः—अस्तित्ववृद्धिपरिणामापक्षयविनाशाः। अस्तित्वमत्र स्वोपादानावच्छिन्नस्थितिलक्षणम्। उत्पत्तिप्रतिबद्धत्वात्—उत्पत्तिव्याप्यत्वात्। व्यापकनिवृत्त्या व्याप्यनिवृत्तिरिति भावः। 'अत एवे'ति। उत्पत्त्यभावादेव सजातीयसंविद्भेदलक्षणं नानात्वमपि निरस्तमित्यर्थः। 'उत्पत्तिमत्त्वव्यापके'ति। कर्मधारयोऽयम्। विभागि-नाना, भिन्नम्। अत्र संविन्न नाना, नापि विकारवती, अजत्वाद्यन्नैवं तन्नैवं यथा घट इति व्यतिरेकिप्रयोगः। संविदि भेदादिनिषेधे धर्मपक्षकमन्वयि च प्रदर्शयति 'चैत्यत्वाच्चे'ति। भेदादयो न संविदि अनुभाव्यत्वाद्रूपादिवत्। अत्र भेदपदं विकारात्मकोत्पत्त्याद्यवस्थाभेदपरं प्रकरणात्। इतरेतराभावः—सजातीयभेदः। विजातीयस्वगतभेदावादिपदग्राह्यौ। यद्वा भेदो विजातीयभेदः। इतरेतराभावो यथोक्तरूपः। आदिपदग्राह्याः—उत्पत्त्याद्यवस्थाः स्वग-

यथाऽऽह "याऽनुभूतिरजाऽमेयाऽनन्तात्मा" इति । सैव च वेदान्तवाक्यतात्पर्यभूमिरिति तेषां भाषा । यथाऽऽह तद्वार्तिककारः—"परागर्थप्रमेयेषु या फलत्वेन संमता । संवित् सैवेह मेयोऽर्थो वेदान्तोक्तिप्रमाणतः ॥ अप्रामाण्यप्रसक्तिश्च स्यादितोऽन्यार्थकल्पने । वेदान्तानामतस्तस्मान्नान्यमर्थं प्रकल्पयेत् ॥" इति ।

(इति निर्विशेषनित्यविज्ञानात्मत्वमतोपपादनप्रकरणम्)

---

तभेदाश्च । एतन्मतं क्रोडीकरोति 'अत'इति । निरस्तनिखिलभेदा सत्त्वप्रकाशत्वादिधर्मरहिता प्रकाशैकस्वरूपा संविदेवाविकारनित्या परमात्मा जीवात्मा च । जीवभेदोऽपि कल्पित इति भावः । उक्तार्थे संवादमुदाहरति 'याऽनुभूति'रिति । अजत्वम्—अनुत्पत्तिमत्त्वम् । अमेयत्वं—ज्ञानागोचरत्वम् । अनन्तत्वं—विनाशराहित्यम् । आत्मत्वम्—जीवात्मपरमात्मरूपत्वम् । निरुक्तरूपैका संविदेव सर्वव्यापिका परमात्मरूपोपाधिभेदेन नानाजीवात्मरूपा चेति भावः । 'सैव चे'ति । न वाच्यशक्त्येयं वेदान्तेषु प्रतिपाद्यते । अवाच्यैव सती तात्पर्यवृत्त्या तेषु गम्यत इत्यर्थः । भाषा—परिभाषा, सङ्केत इति यावत् । सङ्केतबलादेव श्रद्धेयत्वमेतन्मतस्येति हार्दम् । वेदान्तानामेवंभूतायां संविद्येव तात्पर्यमद्वैतवार्तिककारवचनेन संवादयति 'परागर्थे'ति । घटपटादिषु परागर्थेषु या प्रमाणजन्या मितिः फलरूपेष्यते तान्त्रिकैः सैव मितिर्वेदान्तेषु प्रमेयभूता । इतोऽन्यस्मिन् परागर्थे तात्पर्यकल्पने च वेदान्तानामप्रामाण्यमेव स्यात् । परागर्थस्यासत्यत्वादिति श्लोकद्वयार्थः । निर्विशेषनित्यचैतन्यमात्रस्यैव तत्तत्प्रमाणाधीनान्तःकरणवृत्तिप्रतिबिम्बिततया तत्तद्वृत्त्यवच्छिन्नतया वा तत्तदर्थप्रकाशकत्वात्प्रमाणफलत्वोपचार इति बोध्यम् ।

तदिदमलौकिकमवैदिकं च दर्शनमित्यात्मविदः। तथाहि—संविदिति स्वाश्रयं प्रति सत्तयैव कस्यचित्प्रकाशनशीलो ज्ञानावगत्यनुभूत्यादिपदपर्यायनामा सकर्मकः संवेदितुरात्मनो धर्मः प्रसिद्धः। तथैव हि सर्वप्राणभृत्प्रत्यात्मसिद्धोऽयमनुभवः 'अहमिदं संवेद्मी'ति। तस्यास्योत्पत्तिस्थितिनिरोधाश्च सुखदुःखादेरिव प्रत्यक्षाः प्रकाशन्ते। स्वापमदमूर्च्छादशासु च योग्यानुपलम्भनिराकृतः तत्सद्भावो नाभ्युपगममर्हति। यदि हि तास्वपि दशासु संवेदनमवर्तिष्यत, ततः प्रबोधसमयेऽनुसमधास्यत। न चाऽनुसन्धीयते। अत एव हि 'इयन्तं कालं न किञ्चिदहमज्ञासिष'मिति

---

प्रक्रान्तं मायावादिमतं तावद्विस्तरेण प्रतिक्षेप्तुमुपक्रमते 'तदिद'मित्यादिना। अलौकिकम्—लौकिकप्रत्यक्षादिप्रमाणविरुद्धम्, अवैदिकं—वेदादिसच्छास्त्रविरुद्धम्, लोकवेदाननुगुणं चेदं मायावादिनां दर्शनमित्यात्मतत्त्वसाक्षात्कर्तारो वदन्तीति भावः। संविदद्वैते पराभिमतेऽध्यक्षविरोधमादौ निरूपयति 'तथाही'त्यादिना। परागर्थप्रमितेर्ह्यात्मत्वमुक्तं वार्तिककृता। तस्याः स्फुटमेवानात्मत्वमित्याह 'संवि'दिति। ज्ञानादिपदं पर्यायनामेकार्थवाचकं यस्यैवंभूतः आत्मधर्मः कश्चिद्विषयप्रकाशकः संविच्छब्दित इत्यर्थः। 'तस्यास्ये'ति। अन्यधर्मत्वेनानित्यत्वेन च प्रत्यक्षसिद्धस्यास्य प्रमाणफलस्य विषयवेदनस्य न नित्यात्मस्वरूपत्वं संभवतीति भावः। प्रमाणफलस्य सकर्मकस्यानुभवस्यानित्यत्वं प्रकारान्तरेण साधयति 'स्वापे'ति। स्वापादौ सत्त्वे योग्यत्वाद्वेदनस्योपलब्धिः स्यात्। अनुपलब्धेश्च न तदा तस्य सत्त्वमिति भावः। सुषुप्तिकालिकं वेदनाभावं सुप्तोत्थितस्य परामर्शेनापि द्रढयति 'अत एव ही'ति। ननु संविदः स्वप्रकाशत्वात्स्वापेऽप्यस्त्येवोपलम्भः।

प्रबुद्धः प्रत्यवमृशति । यावदनुभूतपदार्थस्मरणनियमाभावेऽपि संस्कारविच्छेदनिमित्तप्रायणादिप्रबलहेतुविरहेऽपि नित्यवदस्मरणमनुभवाभावमेव साधयति । न च सत्यपि संवित्प्रकाशे विषयावच्छेदविरहादहङ्कारगोचरापायाद्वा तत्स्मृत्यनुदयः; अर्थान्तराभावस्य तदग्रहणस्य चार्थान्तरप्रकाशप्रयुक्तकार्यप्रतिबन्धकत्वायो-

---

अनुभूतमवश्यं स्मर्तव्यमिति नियमाभावाच्च तदननुसन्धानं घटते प्रबोधे । 'इयन्तं कालं न किञ्चिदहमवेदिष'मिति परामर्शस्तु विषयप्रकाशकत्वविशिष्टज्ञानाभावगोचरः । स्वापे सतोऽपि हि विज्ञानस्य न विषयप्रकाशकत्वमिति चोद्यमनूद्य परिहरति 'याव'दिति । नियमाभावेऽपीत्यन्तेन चोद्यानुवादः । अग्रे परिहारः । प्रायणादेः संस्कारविच्छेदकरत्वं संवित्सिद्धावभिहितं 'प्रायणान्नरकक्लेशात्प्रसूतिव्यसनादपि । चिरातिवृत्ताः प्राग्जन्मभोगा न स्मृतिगोचराः ॥' इति । प्रायणम्—मरणम् । नित्यवत्—सार्वदिकम् । यद्वा नियमवत् । नियतमिति यावत् । निखिलसंस्कारप्रमोषहेतुप्रबलदुःखहेतुविरहेऽपि नियमेनास्मरणं संविदः स्वापेऽप्रकाशमेव साधयेत् । स्वयंप्रकाशस्वभावायाश्च तस्या अप्रकाशस्तदा तदभावपर्यवसन्न इति भावः । सिद्धान्ते तु विषयप्रकाशनवेलायामेव धर्मभूतज्ञानस्य स्वयंप्रकाशत्वोपगमात् स्वापे सतोऽपि तस्याप्रकाशो न क्षतिकर इति बोध्यम् । अत्र शङ्कते 'न च सत्यपी'ति । विषयावच्छेदविरहात्—विषयसंबन्धविरहात् । अहङ्कारगोचराभावात्—अहंबुद्धिबोध्यस्य ज्ञातुरहमर्थस्य विलयात् । अहमर्थोपश्लिष्टाया विषयान्वयवत्या एव संविदः संस्काराधायकत्वम् । स्वापे तदुभयवैधुर्यात्स्वप्रकाशस्यापि चैतन्यमात्रस्य न संस्काराधायकत्वमिति न तस्य प्रबोधेऽनुसन्धानप्रसङ्ग इति भावः । अत्रोत्तरमाह 'अर्थान्त-

गात् । त्रितयावभासेऽपि यथास्वमवभासानां स्वगोचरस्मरणहेतुत्वात् । नच प्रत्यभिज्ञाबललब्धस्थेमाऽहमर्थः स्वापादिदशासु निधनमुपगत इति शक्योऽभिधातुम् । अत एव हि 'इयन्तं काल-

---

रे'ति । तदग्रहणस्य-अर्थान्तराग्रहणस्य । 'त्रितये'ति । ज्ञानज्ञेयज्ञातृत्रितयावभासेऽपि यथायथं तत्तदनुभवस्यैव तत्तत्संस्कारं प्रति हेतुत्वादेकाग्रतया संविदनुभवे सति स्वापे ततः तत्संस्कारोत्पादेऽहमर्थविलयघटपटाद्यर्थान्तराननुभवयोरप्रतिबन्धकत्वात्संविन्मात्रप्रत्यवमर्शप्रसङ्गो दुर्वारो भवन्मते प्रबोधसमय इति भावः । ननु ज्ञातुर्विनष्टत्वात्स्वापे कः स्मरेदित्यत्राह 'न च प्रत्यभिज्ञे'ति । पूर्वदिने कृतस्यापरदिने प्रतिसन्धानात्पूर्वापरदिनस्थायित्वेन सिध्यतो ज्ञातुरहमर्थस्य मध्यकाले स्वापे विलयो न घटत इति भावः । एवं स्वापेऽप्यहमर्थस्य सद्भावमुपपाद्य तदा तद्भानमपि वर्तत इत्युपपादयति 'अत एव ही'ति । स्वापकालिकाहमर्थप्रतिसन्धानमिदं तात्कालिकतत्प्रतिभाससमर्थकम् । न चानुमितस्वापतत्सुखत्वात्मस्वरूपसत्तागोचरमिदमस्तु, तथा चेदं न स्वापेऽहमर्थप्रकाशस्योपपादकमिति वाच्यम् । स्वापांशेऽनुमितिलक्षणत्वेऽपि अहमर्थे प्रतिसन्धानरूपत्वस्य 'प्रातस्तत्राहं (न)आस'मित्यादाविव स्वरससिद्धस्यानपोद्यत्वात् । प्रातःकालानुभूतात्मस्वरूपपरामर्शित्वादस्यात्मस्वरूपे प्रतिसन्धानरूपत्वोपपत्तिर्यथा, एवं स्वापेऽनुभूतात्मस्वरूपपरामर्शित्वादात्मांशे प्रतिसन्धानरूपत्वोपपत्तिरिति भावः । न च नित्यात्मप्रकाशस्य संस्कारजनकत्वे मानाभावात्कथमहमर्थ आत्मनि प्रतिसन्धानरूपत्वमस्येति वाच्यम् । स्वजन्यसंस्कारवत्त्वेनानुभवस्य प्रतिसन्धाने एकहेतुत्वनिर्वाहाय नित्यानुभवस्यापि संस्कारहेतुत्वोपगमात् । स्पष्टं चेदं सिद्धान्तसिद्धाञ्जने । स्वापेऽनुभूतात्मांशप्रकाशनरूपत्वाद्वा प्रतिसन्धानवाचो युक्तिः । अधिकमन्यत्र । ननु

महमस्वाप्स'मिति प्रबोधे परामर्शः । नच निर्विषया निराश्रया वा संविन्नाम काचित् संभवति, अत्यन्तानुपलब्धेः । संवन्धिशब्दाश्च संविदनुभूतिज्ञानप्रकाशादिशब्दा इति शब्दार्थविदः । न ह्यकर्मकस्य जानात्यादेरकर्तृकस्य वा प्रयोगो लोके वेदे वा ।

---

सविषयज्ञानस्य नित्यत्वं मास्तु शुद्धसंविदो नित्यत्वाद्युपपन्नमेवेत्यत्राह 'न च निर्विषये'ति । स्वयंप्रकाशसंविदनुभवो हि विषयाश्रयोपश्लिष्टसंविद्विषय एव लोकविदितः 'इदमहं जानामी'ति । केवलसंविदनुभवस्तु न कस्यापि स्वतोऽन्यतो वा प्रसिद्ध इति भावः । ननु सिद्धान्ते ज्ञानस्वरूपस्यात्मनो निर्विषयत्वं निराश्रयत्वं चाभ्युपगतं कथं सङ्गच्छते ? । उच्यते । संविदादिशब्दानां सविषयकज्ञान एव रूढत्वात्तदर्थस्य निर्विषयत्वादिनिषेधोक्तिरुपपन्नैव । धर्मभूतस्य ज्ञानस्य च विषयप्रकाशकस्य न निराश्रयत्वं नित्यात्मस्वरूपाश्रितत्वात् । आत्मस्वरूपज्ञानस्यापि प्रत्यक्त्वानुकूलत्वैकत्वप्रकारतः स्वरूपप्रकाशकत्वान्न निर्विषयत्वं निर्धर्मकत्वं वा । आत्मन्येकत्वानेकत्वाहंत्वानहंत्वादिसंशयस्य कदाप्यनुदयाच्च प्रत्यक्त्वादिना भानमेष्टव्यम् । निरुपाधिकप्रेमास्पदत्वाच्च सुखत्वेनेति सिद्धान्तेऽभिमतो विशेषः । संविदः सविशेषत्वं संविदादिशब्दानां संवन्धिशब्दत्वप्रसिद्ध्याऽप्युपपादयति 'संवन्धी'ति । नियतसंवन्ध्याकाङ्क्षाशालित्वं संवधिशब्दत्वम् । ज्ञानं, संवेदनमित्युक्ते हि कस्य किंविषयकमिति विषयाश्रयाकाङ्क्षा नियता । एतदेव व्यतिरेकनिषेधेन द्रढयति 'न ही'ति । जानात्यादेः ज्ञाधातुप्रभृतेः । ननु 'ज्ञानस्वरूप'मित्यादिषु केवलस्यैव प्रयोगो दृश्यत इति चेन्न । आशयानभिज्ञो हि भवान् । अत्रत्यस्य धर्मिवाचिनो ज्ञानशब्दस्य स्वयंप्रकाशत्वप्रवृत्तिनिमित्तकस्य संवन्धिशब्दाद्धर्मभूतज्ञानवाचिनः शब्दाच्छब्दा-

यत्तु स्वतःसिद्धस्य सत्त्वे तद्विरोधादेव प्रागभावादेः तदानी-मवस्थानासंभवान्न ततः सिद्धिरिति, तदतिस्थवीयः। नहि संविदा स्वकालवर्तिन एवार्थाः सिद्ध्यन्तीत्यस्ति नियमः। अतीतानागतयोरसंवेद्यत्वप्रसङ्गात्। अथ संवित्प्रागभावादेः सिद्ध्यतः तत्समकालतया भवितव्यमिति; किमेवं क्वचिद्दृष्टम्? हन्तैवं सति

---

न्तरत्वात् चतुष्पाद्वाचिन इव गोशब्दात्किरणादिवाचिनस्तस्य। अस्माकं संबन्धिशब्दत्वप्रसिद्धिः धर्मभूतज्ञानवाचिनि सावकाशा। भवतां तु धर्मिणः स्वरूपज्ञानस्य धर्मभूतस्य च विषयज्ञानस्य भेदाभावात् एकस्यैव चैतन्यस्यात्मरूपस्य निर्विशेषत्वसिद्धान्तात् संबन्धिशब्दत्वप्रथा नोपपन्ना संविदादिशब्दस्येति। निर्विशेषज्ञप्तिमात्रस्य प्रवृत्तिनिमित्तायोगेनैव धर्मिवाचिज्ञानशब्दवाच्यत्वमपि न संभवतीत्यप्यनुसन्धेयम्।

एवं परैरात्मतयाऽभिमतस्य प्रमाणफलस्यागन्तुकत्वादात्मधर्मत्वाच्च नात्मत्वमित्युक्तम्। अथ तस्य प्रागभावासिद्धिं परोक्तामनुवदति 'यत्तु स्वत' इति। अन्यतः सिद्ध्यभावस्फोरकं 'स्वतःसिद्धस्य' इति। अनुभवस्येति विशेष्यपदमध्याहार्यम्। तद्विरोधादेव—प्रतियोगिना यौगपद्यावस्थानासंभवलक्षणाद्विरोधादेव। प्रागभावादेः—संवित्प्रागभावादेः। शिष्टं स्पष्टम्। दूषयति 'त'दित्यादिना। ज्ञानसामान्यस्य स्वसमानकालिकार्थग्राहित्वनियमे दोषमाह 'अतीते'ति। शङ्कानुवादः 'अथे'ति। इतीत्यनन्तरं मतमिति शेषः। संवित्प्रागभावस्य स्वसमानकालिकग्रहग्राह्यत्वमेवेति नियम इति शङ्काग्रन्थार्थः। नियममुपगम्याऽऽह 'किमेव'मिति। तत्सिद्धेः—संवित्प्रागभावग्रहसिद्धेः। न प्रागभावाद्यसिद्धिः—न संवित्प्रागभावाद्यसिद्धिः। अयं च नियमो यद्यपि सिद्धान्ते युक्तः, विद्यमानयत्किञ्चज्ज्ञानप्रागभावस्य विद्यमानेनैव

तत्सिद्धेर्न प्रागभावाद्यसिद्धिः । तत्प्रागभावः तत्समकाल इत्युन्मत्त-वचः । ऐन्द्रियिकप्रत्यक्षस्वभावो ह्ययं स्वसमकालपदार्थप्रकाशकत्वं नाम । न ज्ञानमात्रस्य, प्रमाणमात्रस्य वा । एतेन तदपि परा-कृतम्—"मानं स्वयंप्रकाशत्वात्स्वतःसच्चेत्सदाऽस्त्यतः । तन्मेयं च सदाऽस्त्येव मानं मेययुगेव हि ॥" इति । नहि मानस्य स्वस-

---

ज्ञानान्तरेणानुमानादिना ग्रहणात् । अहमिदानीं चाक्षुषाभाववान् उन्मीलितचक्षुष्कत्वादित्याद्यनुमानसंभवात् । अथापि परमतेऽयं नियमोऽनुपपन्न इत्याह 'तत्प्रागभाव' इति । भवता हि ज्ञानं ज्ञाना-न्तराग्राह्यमिष्यते । एवं सति तज्ज्ञानप्रागभावस्तेनैव समानकालिकेन ग्राह्यः स्याद्भवदुक्तनियमानुसारात् । तच्चानुपपन्नमिति भावः । नन्वत-एवास्माभिः संवित्प्रागभावासिद्धिरुच्यत इति चेत्तत्राह 'ऐन्द्रियिके'ति । लौकिकप्रत्यक्ष एव समानकालिकपदार्थग्राहित्वमिति नियमः । न तु ज्ञानसामान्यस्य, प्रमितिसामान्यस्य वा । तथा च प्राक्कालिकस्य स्वप्राग-भावस्य तेनैव वर्तमानेन ज्ञानेन ग्रहणे नानुपपत्तिरिति हार्दम् । अग्रे चैतद्व्यक्तीभविष्यति । प्रमाणस्य प्रमेयाविनाभूतत्वात्प्रमाणज्ञानस्य स्वयं-प्रकाशत्वेन नित्यत्वात्तत्प्रमेयमपि नित्यमिति मतं निराकरोति 'एतेने'ति । एतेन—प्रमाणज्ञानमात्रस्य समानकालपदार्थग्राहित्वनियमाभावेन । निरसनीयमतानुवादः 'मान'मिति । स्वयंप्रकाशत्वात्, मानं—प्रमितिः, स्वतः सत्—अनन्यापेक्षसत्ताकं सदाऽस्त्येव । एवं चेत्, अतो वक्ष्य-माणाद्धेतोः तन्मेयं च वस्तु सदाऽस्त्येव । हि—यतः, मानं—प्रमाणज्ञानं, मेययुगेव—प्रमेयाऽविनाभाव्येवेत्यर्थः । स्वयंप्रकाशस्यापि प्रमाणज्ञानस्य प्रमाणजन्यत्वादेवानित्यत्वम् । तत्प्रागभावग्रहोऽपि स्वतः परतो वा संभवेदेव । अतो मितिनित्यत्वमुपजीव्य मेयनित्यत्वव्यवस्थापनमयुक्तम् ।

त्ताकालेऽर्थाविनाभावो मेययोगः। किंतु यद्देशकालादिमत्तया मेयमवभासते तादृशतद्रूपमिथ्यात्वविरोधित्वम्। अत एव 'स्मृतिर्न बाह्यविषया, नष्टेऽप्यर्थे स्मृतिदर्शना'दित्यपि प्रलापः।

अथ संवित्प्रागभावादेरवर्तमानतया न प्रत्यक्षत्वम्। लिङ्गाद्यभावाच्च न प्रमाणान्तरतः सिद्धिरिति। यद्येवम्, अकारणं तर्हि स्वतःसिद्धत्वं प्रागभावाद्यसिद्धेः। प्रमाणाभाव एव हीदानीं वाच्यः। न च तदभावः शक्योऽभिधातुमित्युक्तमेव। योग्यानुपलब्ध्यैवाभावस्य समर्थितत्वात्।

---

प्रमाणज्ञानस्य समानकालार्थग्राहकत्वनियमाभावाच्चेति पराकरणप्रकारो बोध्यः। नन्वसदर्थग्राहित्वे मितेः कथं प्रमेयाविनाभावो घटते?। तत्राह 'न ही'ति। यदा प्रमितिस्तदा प्रमेयमिति न प्रमेयाविनाभावः प्रमितेः। किंतु यद्देशकालसंबन्धित्वेन यादृशाकारवत्त्वेन च यद्भासते प्रमितौ, तस्य तत्प्रकाराभावाभावपर्यवसितं प्रमेययोगित्वम्। अतद्रूपानवगाहित्वं मेये, तद्वति तत्प्रकारकत्वमेव च तदिति भावः। स्मृतेरप्रामाण्यमतमपि प्रतिक्षिपति प्रसङ्गतः 'अत एवे'ति। प्रलापः—प्रलापमात्रम्। निरर्थकं वचनमिति यावत्। अतीतमपि बाह्यमर्थं तथात्वेनैवावगाहिन्याः स्मृतेर्न निर्विषयता, मेयव्यभिचारो वा। प्रमेययोगित्वस्य तद्वति तत्प्रकारावगाहित्वरूपत्वादेवेति भावः।

'अथे'त्यादिः शङ्कानुवादः। उच्येतेति वा, मतमिति वा शेषः पूरणीयः। परिहारो 'यद्येव'मित्यादिः। स्वतःसिद्धत्वात् संविदः प्रागभावाद्यसिद्धिरिति वदता प्रमाणाभावस्येदानीं तद्धेतुत्वेनाभिधाने हेत्वन्तरम्। प्रमाणाभावोऽप्यसिद्ध इति भावः। 'समर्थितत्वा'दिति। अभिहितं हि पूर्वमेव "स्वापमदमूर्च्छादशासु च योग्यानुपलम्भनिराकृतः

अपिच प्रत्यक्षसंवित् स्वसत्ताकाले स्वविषयस्य सद्भावं साधयन्ती यत्तस्य न सर्वदा सत्तां साधयति, तदवसीयते अहमिदानीमेवास्मि नान्यदेति कालविशेषावच्छिन्नैव सा चकास्तीति । इतरथा घटादे-

---

तत्सद्भावो नाभ्युपगममर्हती"ति । अत्रेदं बोध्यम्—अप्रकाशेऽपि संविदः स्वापेऽहं न जानामीति तदभावप्रत्यक्षमात्मनि तदा न घटते यद्यपि । स्वापस्य व्याघातात् । सविषयकज्ञानसामान्याभावो हि सः । अथापि स्वयंप्रकाशस्वभावायाः संविदोऽप्रकाशात्स्वापेऽभावः सिद्धः । तत्प्रतीतिस्त्वानुमानिकी प्रबोध एवास्मरणनियमानुमितेन स्वापकालिक-संविदननुभवलिङ्गेन योग्यानुपलब्धिलक्षणेन । इदमेव चानुमानं ज्ञानत्वसामान्येन स्वापे स्वस्याप्यभावं विषयीकरोतीति सिद्धं स्वप्राग-भावग्रहः स्वेनैवेति ।

प्रकारान्तरेणाप्यनित्यत्वं संविदां साधयति 'अपि चे'ति । न साधयति-न प्रकाशयति । तत्—तस्मात् । कालविशेषावच्छिन्नैव—कादाचित्कैव । कादाचित्कतया प्रत्यक्षप्रकाशस्याभिनयः 'अहमिदानीमेवास्मि ना-न्यदा' इति । चेतनसमाध्यारोपेणैवं व्यपदेशः । यद्वा प्रमाणफलस्यैवात्म-त्वस्वप्रकाशत्वयोः परैरुपगमात्तन्मत एवमेव प्रकाशः प्रमितेः स्यादित्या-कूतम् । 'इतरथे'ति । प्रत्यक्षस्य समानकालीनार्थप्रकाशकत्वस्वाभाव्येन तस्य नित्यत्वे तद्विषयस्य घटादेरपि नित्यत्वप्रसङ्ग इति यावत् । याव-त्स्वसत्त्वं घटादिर्नाध्यक्ष्यते, किंतु सन्नपि कदाचिदेव, तथाच घटाद्यध्य-क्षस्य कादाचित्कत्वं न विषयासत्त्वप्रयुक्तम्, किंतु स्वस्य कादाचित्कत्व-प्रयुक्तमेवेति भावः । अत्र प्रयोगः—प्रत्यक्षसंवित् स्वविषयकाला-व्यापिनी, समानकालीनार्थभासकत्वे सति यावदर्थसत्त्वं तदप्रकाशक-

रपि नित्यत्वप्रसङ्गात्। एवमनुमानादिसंविदोऽपि। नच प्रत्यक्षानुमानादिभेदशून्या निर्विषया निराश्रया धीः संभवतीत्युक्तमेव।

न चान्याविषयत्वात् संविदोऽन्यतः तत्प्रागभावाद्यसिद्धिः। अज्ञासिषमिति प्राक्तनसंविदोऽद्यतनधिया विषयीक्रियमाणत्वात्। प्रतिकूलानुकूलविषयनियतहानोपादानादिलिङ्गावगम्यत्वाच्च परसंविदः। तदनभ्युपगमे च शब्दार्थग्रहणासंभवेन वैदिकलौकिक-

---

त्वादिति। प्रत्यक्षवदनुमानादिसंविदामप्यनित्यत्वं साधयति 'एव'मिति। 'कादाचित्कतयैव चकासती'ति शेषः। लिङ्गपरामर्शादिसापेक्षाणां तासां न ह्रि नित्यत्वं संभवति। अन्वमिनवम्, अशाद्बूयमित्यादिप्रतीतयश्च कादाचित्कतां गमयन्ति। समानकालार्थग्राहित्वनियमरहितानामप्येतासां प्रतीतं कादाचित्कत्वं न विषयासत्त्वौपाधिकम्, किंतु स्वरूपप्रयुक्तमेवेति भावः। ननु सविषयकज्ञानानामनित्यत्वेऽपि निर्विषयं ज्ञानमात्रं नित्यमिति चेत्तत्राऽऽह 'नचे'ति। प्रत्यक्षानुमानपदे भावप्रधाने। धीसंविदादिपदानां सविषयकज्ञान एव स्वारसिकः प्रयोगः। तदर्थस्य च साश्रयत्वनियम एव। उपलम्भबलाच्छास्त्रबलाच्च स्वरूपज्ञानस्यापि न निर्विशेषत्वमिति भावः। एतेन चैतन्यमात्रं नित्यनिर्विशेषस्वप्रकाशरूपं सत्। तस्यैवान्तःकरणवृत्त्यवच्छिन्नस्य विषयप्रकाशकत्वम्। वृत्त्यवच्छेदकादाचित्कतया विशिष्टस्य तस्यानित्यत्वप्रतीतिः। अन्तःकरणावच्छिन्नं तदेव ज्ञात्रित्यपि परास्तम्। अन्तःकरणस्य वृत्तिः किं व्यापारलक्षणा उत परिणामलक्षणा। नाद्यः, तावन्मात्रेण ज्ञानव्यापारमन्तरा विषयप्रकाशाभावात्। 'इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते। तदस्य हरति प्रज्ञाम्' 'तेनास्य क्षरति प्रज्ञा' इत्यादिषु मनइन्द्रियद्वारकज्ञानप्रसरणत एवार्थप्रकाशव्यवस्थापनात्। क्वचित्प्रज्ञामनसोरभेदोपदेशस्तु ज्ञानव्यापारानुगुण-

समस्तव्यवहाराभावप्रसङ्गः । गुरूपसर्पणाद्यनुपपत्तिश्च; ज्ञानवत्त्वेन तस्याप्रतीतेः ।

न चान्यविषयत्वेऽननुभूतित्वम् । स्वाश्रयस्य स्वसत्तयैव प्रकाशमानत्वं, स्वविषयसाधनत्वं वा ह्यनुभूतित्वम् । ते च संविदन्तर-

---

व्यापारवत्त्वान्मनसो भाक्तो ज्ञेयः । न द्वितीयः, मनसो विषयाकारपरिमाणे दृढतरप्रमाणाभावात् । चैतन्यस्य निर्विशेषत्वे च न प्रमाणम्; येन तस्यैवौपधिकभेदरूपत्वकल्पनं ज्ञात्रादेः साधीयो भवेत् । निरुपाधिकज्ञातृज्ञेयज्ञानभेदप्रतिपादकाबाधितप्रत्यक्षशास्त्रादिप्रमाणबाधितं चेद मित्यलमधुना ।

एवं स्वेनैव स्वप्रागभावसिद्धिमुक्त्वाऽन्यतोऽपि तामाह 'न चान्ये'ति । अतीतस्य स्वकीयज्ञानस्य स्मृत्यादिग्राह्यत्वमुक्त्वा परकीयज्ञानस्यापि ज्ञानान्तरग्राह्यत्वमाह 'प्रतिकूले'ति । परकीयस्य विषयविशेषेऽनुकूलत्वज्ञानस्य प्रतिकूलत्वज्ञानस्य वा तदीयहानोपादानादिप्रवृत्तिरूपहेतुदर्शनानुमेयत्वादिति यावत् । ज्ञानस्य ज्ञानान्तरग्राह्यत्वानुपगमे बाधकमाह 'तदनुपगमे चे'ति । परज्ञानानुमानानुपगमे व्यवहाराच्छक्तिग्रहस्य परज्ञानानुमानसापेक्षत्वाच्छक्तिग्रहस्यैवासंभवेन तन्मूलस्य व्यवहारस्य विलोपप्रसङ्ग इत्यर्थः । यद्वा शब्दार्थसंबन्धस्य बोध्यबोधकभावस्य बोधघटितस्य ज्ञानस्य ज्ञानान्तरग्राह्यत्वानुपगमे व्याकरणादिना प्रतिपादनासंभवात्समस्तशाब्दव्यवहारविलोपप्रसङ्ग इत्यर्थः । शब्दार्थग्रहणासंभवेन-शब्दार्थसंबन्धग्रहणासंभवेन । परकीयज्ञानानुमानानुपगमे गुरूपसर्पणादेरप्यनुपपत्तिरित्याह 'गुरूपसर्पणे'ति । तस्य—गुरोः ।

अथानुभाव्यत्वस्यानुभूतित्वविरुद्धत्वं प्रतिक्षिपति 'नचान्यविषयत्व' इति । स्वाश्रयस्येत्युभयत्र संबध्यते । स्वाश्रयाय स्वयमेव प्रकाशमानत्वम्,

विषयभावेऽपि स्वानुभवसिद्धे न भ्रश्यत इति कथमननुभूतित्व-प्रसङ्गः ?। घटादेस्तु तथास्वाभाव्याभावादेवाननुभूतित्वं, नानु-भाव्यत्वात्। अपि चाननुभाव्यत्वेऽपि समानः तत्प्रसङ्गः, गगन-कुसुमवत्। न चात्मनोऽनुभूतित्वम्, अनुभवितृत्वात्। नाप्यसाव-ननुभाव्यः, अनुभवस्येव स्वतःसिद्ध्यतोऽप्यस्य स्वपरसंवेद्यत्वाभ्यु-पगमात्। वेद्यत्वेऽनात्मत्वापादनमवेद्यत्वेऽपि समानं पूर्ववत्। यदि तु गगनकुसुमस्यासत्त्वमेवानात्मत्वाननुभूतित्वप्रयोजकमास्थी-येत; आस्थीयतां तर्हि घटादेरपि असंविदाश्रयत्वाज्ञानाविरोधित्व-

---

स्वाश्रयाय स्वविषयप्रकाशकत्वं वा स्वसत्ताकाले संविदो विद्यत एव। उभ-यविधं चेदमनुभूतित्वं स्वसत्ताकाले स्वाश्रयायाऽप्रकाशमानत्वे स्वविष-याप्रकाशकत्वे वा न घटेत। न तदस्ति। अतीतत्वदशायां स्वाश्रयाय वर्तमानदशायां वा पुरुषान्तराय ज्ञानान्तरेण भासमानत्वेऽपि तस्या न निरुक्तानुभूतित्वभङ्गप्रसङ्ग इति भावः। अनुभाव्यत्वस्याननुभूतित्वेऽ-प्रयोजकत्वं चाह 'घटादे'रिति। तथास्वाभाव्याभावादेव—निरुक्तोभय-विधानुभूतित्वविरहादेव। अननुभूतित्वम्—अनुभूतिभिन्नत्वम्, अनुभू-तिपदावाच्यत्वं वा। साहचर्यमात्रेणानुभाव्यत्वस्याननुभूतित्वप्रयोजकत्वे प्रतिबन्द्युपक्षेपः 'अपि चे'ति। तत्प्रसङ्गः—अननुभूतित्वप्रसङ्गः। असतो दृष्टान्ततया निर्देशः परप्रक्रियया। एवं संविदोऽनुभाव्यत्वं समर्थ्याऽऽत्म-नोऽपि तत्, संविद्भिन्नत्वं च समर्थयते 'न चात्मन'इति। अनुभूतित्वं—विषयधीरूपत्वम्। अनुभवितृत्वात्—विषयध्यधिकरणत्वात्। 'नाप्यसा'विति। ज्ञानान्तरनिरपेक्षप्रकाशस्यापि निजात्मस्वरूपस्य श्रवणादिज्ञान-ग्राह्यत्वात्, परात्मनोऽपि तच्छरीरगतचेष्टादिनाऽनुमेयत्वादात्मनोऽननु-भाव्यत्वं श्रुतियुक्तिविरुद्धमनुपपन्नमित्यर्थः। 'आस्थीयता'मिति। घटादेः

योरेव तत्प्रयोजकत्वम् । अथ ते अपि विषयत्वे स्यातामिति चेत्, अविषयत्वेऽपि तथैवेत्यलमप्रतिष्ठितकुतर्कोपहसनेन ।

यदपि जननविरहादनुभूतेर्विकारान्तरनिरसनम्, व्यभिचरति तदपि प्रागभावे । जन्माभावेऽपि तस्य विनाशदर्शनात् । भावविशे-

---

ज्ञानानाश्रयत्वमेवानात्मत्वेऽज्ञानाविरोधित्वमेवाननुभूतित्वे प्रयोजक-मिष्यतां नानुभाव्यत्वमित्यर्थः । शङ्काऽत्र 'अथे'ति । ते—ज्ञानानाश्रयत्वा-ज्ञानाविरोधित्वे । विषयत्वे—अनुभाव्यत्वे । परिहारः 'अविषयत्वेऽपी'ति । तथैव ते स्यातां गगनकुसुमवदिति यावत् । असत्त्वमेव तयोः प्रयोजकं नाननुभाव्यत्वमिति चेत् अननुभाव्यत्वेऽसत्त्वमपि प्राप्तं तद्वदेव । अप्र-योजकत्वमिति चेत्तुल्यमनुभाव्यत्वेऽपीति हार्दम् । 'इत्यल'मिति । व्याप्त्याभासमूलत्वात्कुतर्कत्वम् । अत एवाप्रतिष्ठितत्वं सिषाधयिषितार्थ-सिद्धिपर्यवसानविरह इति बोध्यम् । एव मनुभाव्यत्वसमर्थनेन परतोऽपि संविदः प्रागभावसिद्धिरभिमता । सिद्धान्ते धर्मभूतज्ञानस्य नित्यत्वेऽपि विषयप्रकाशोपयोग्यवस्थाविशेषविशिष्टस्यानित्यत्वादीष्टमेवेति ध्येयम् ।

स्वप्रकाशत्वात्संविदो न प्रागभावसिद्धिः । प्रागभावाभावाच्चानुत्पन्नत्वं, तत एव भावविकाररहितत्वं चोक्तमन्यैः । तत्र संवित्प्रागभावसिद्धिसम-र्थनेनानुत्पन्नत्वहेतोः स्वरूपासिद्धिं सिद्धवत्कृत्य विकारान्तरनिरासकानु-मानेऽनैकान्त्यमाह 'व्यभिचरती'ति । सप्तम्या अवच्छेदकत्वमर्थः । तस्य व्यभिचारपदार्थेऽन्वयः । अनुत्पन्नत्वं प्रागभावावच्छेदेनाऽविनाशित्वरू-पसाध्यव्यभिचारीत्यर्थः । तदधिकरणस्यैव तन्निष्ठधर्मावच्छेदकत्वात्प्राग-भावस्य हेतुनिष्ठव्यभिचारावच्छेदकस्य हेतुमत्त्वं साध्याभाववत्त्वं च सि-ध्यति । 'भावे'ति । भाववृत्तित्वस्यानुत्पन्नत्वहेतुविशेषणत्वेऽपि पराभिम-तायामनादिसान्ताविद्यायां व्यभिचार इत्यर्थः । व्यभिचारेऽवच्छेदकस्या-

पणोपादानेऽपि भवदभिमताविद्ययाऽनैकान्त्यम् । सा ह्यनादिरपि विविधविकारवती विनाशवती च तत्त्वज्ञानोदयात् । अपरमार्थास्तद्विकाराः सन्तीति चेत्, परमार्थाश्च ते किं विकाराः सन्ति ?, जन्मवन्तो वा परमार्थाः; येन पारमार्थ्येन विशेषणं साध्यस्य साधनस्य वाऽर्थवत्तामश्नुवीत । तथाच सति साधु समर्थितं तर्ककुशलेनेत्यलमनेन ।

यदपि नह्यजं विभाग्यस्तीति; तदपि न; अजस्यैवात्मनो देहे-

---

ज्ञानस्य तद्धेतुत्वविवक्षातोऽविद्ययेति तृतीया । अनैकान्त्यं परिहर्तुं शङ्कते 'अपरमार्था'इति । परमार्थविकारराहित्यं साध्यम् । तदभावश्च परमार्थविकारो नाविद्यायामिति न व्यभिचार इति भावः । प्रतिवक्ति 'परमार्थाश्चे'ति । ते-तव । मते इति पूरणीयम् । साध्यस्य-साध्यघटकविकारादेः । साधनस्य वा—साधनघटकोत्पत्तेर्वा । अर्थवत्तामश्नुवीत—अन्वितार्थकं भवेत्; व्यभिचारस्यासिद्धेश्च वारकतया सप्रयोजनं वा । संविदोऽपि कल्पितोत्पत्तिमत्त्वसंभवेन स्वरूपासिद्धिवारणाय साधनस्य वेत्युक्तम् । अयं भावः—परमार्थविकारादेः परमार्थोत्पत्तेर्वाऽनुपगमाद्भवतां साध्यहेत्वोः पारमार्थ्यविशेषणं न घटते । साध्यसाधनव्यतिरेकव्याप्तीनामप्रसिद्धिप्रसङ्गात् । अविशेषणे च व्यभिचारस्य स्वरूपासिद्धेर्वा न परिहारसंभव इति । 'तथा च सती'ति । उपहासगर्भमुपालम्भवचनमिदम् । तथा च सति—विशेषणदाने सति च । व्यभिचारवारकं विशेषणं विवक्षताऽसिद्धौ दृष्टिर्न विधीयत इति भावः ।

अनुत्पन्नत्वान्निर्भेदत्वं संविद इति चानूद्य प्रतिक्षिपति 'यदपी'ति । 'तदपि ने'ति । सजातीयविजातीयस्वगतभेदानामबाधिताध्यक्षादिसिद्धत्वाद्बाधितविषयं तन्निषेधानुमानमिति भावः । विभागि—भेदयोगि । विजातीयभेदनिषेधेऽनुत्पन्नत्वेन सिषाधयिषितेऽनैकान्त्यमाह 'अजस्यैवे'-

न्द्रियादिभ्यो विभागस्य समर्थितत्वात् । अनादित्वेनाभ्युपगतस्याज्ञानस्याऽऽत्मनो व्यतिरिक्ततयावश्याश्रयणीयत्वात् । अपरमार्थः स विभाग इति चेत्, परमार्थभेदः किं जन्मप्रतिवद्धः क्वचिद्दृष्टः ? निर्बाधप्रतीतिसिद्धश्च दृग्दृश्यभेदः परमार्थ एवेत्यनन्तरमेवोपपादयिष्यामः ।

---

ति । पराभिमतेऽज्ञानेऽपि तदाह 'अनादित्वेने'ति । आत्मानात्मभेदस्यापरमार्थत्वात्परमार्थभेदस्य निषेधे नानैकान्त्यमित्यभिमानेन शङ्कते 'अपरमार्थ' इति । अभिमानं निराकरोति 'परमार्थभेद'इति । जन्मप्रतिवद्धः—उत्पत्तिमत्त्वव्याप्यः । यत्परमार्थभेदवत्तदुत्पन्नमिति हि व्यतिरेकव्याप्तिर्वाच्या । सा च न; परमार्थभेदस्यैव भवन्नयेऽप्रसिद्धेः । तथा च विशेषणदानेऽसिद्धिप्रसङ्गः । विशेषणादाने चानैकान्त्यं दुष्परिहरमिति भावः । नच परमार्थत्वरूपव्यधिकरणधर्मावच्छिन्नभेदनिष्ठप्रतियोगिताकाभावः साध्यते, तथा च न दोष इति वाच्यम् । एवमपि भवन्मते हेतुसाध्ययोः साहचर्यग्रहोपयोगिपक्षातिरिक्तस्थलान्तराभावाद्व्याप्यत्वासिद्धिरेव । व्यधिकरणाधर्मावच्छिन्नप्रतियोगिताकाभावस्य केवलान्वयितया व्यतिरेकव्याप्तेरपि दुर्वचत्वात् । नच शास्त्रत एव संविन्मात्रस्य नित्यत्वं निर्भेदत्वं च सिध्यतीति वाच्यम् । शास्त्रस्यापि भवन्मतविप्रतीपत्वात् । नित्यानां चिदचिदीश्वरादीनां परमार्थतो भेदो हि शास्त्रेषु वर्ण्यत इत्यन्यत्र विस्तरः । अग्रे च व्यक्तीभविष्यति । संविदि सजातीयभेदनिषेधे साध्यमाने प्रत्यक्षबाधमाह 'निर्बाधे'ति । दृग्दृश्यभेदः—दृशां, दृश्यानां, दृग्दृश्यानां च मिथो भेदः ।

संविदः स्वगतभेदनिषेधानुमानेऽपि दूषणमाह 'तदपी'ति । संविद्धर्माणां प्रमाणसिद्धत्वकथनेन संविदि धर्मनिषेधसाधनस्य कालात्ययापदिष्टत्वं फलितम् । अत एव संवित्पक्षके व्यतिरेकिणि धर्मपक्षके

यदपि नास्या मेयो धर्मोऽप्यस्ति; चेत्यानां न चिद्धर्मत्वमिति च; तदपि शास्त्रानुमानादिप्रमाणसिद्धैः स्वयंप्रकाशत्वनित्यत्वादिधर्मैः स्वयमभ्युपगतैरनैकान्तिकम् । न च ते चितिमात्रमिति वाच्यम्; तत्सिद्धावपि तेषु विमतिदर्शनात् । अभ्युपगम्यैव हि संविदं तदनुमेयत्वक्षणिकत्वादि प्रतिजानते वादिनः। स्वरूपभेदाच्च। स्वाश्रयं प्रति सत्तयैव कस्यचित् प्रकाशनं हि संवेदनम् । स्वयंप्रकाशता तु सत्तयैवाऽऽत्मने प्रकाशमानता । प्रकाशश्च चिदचिदशेषपदार्थसाधारणो धर्म इति संवित्सिद्धावेव साधितम् ।

---

चान्वयिनि संविद्धर्मनिषेधानुमाने पक्ष एव व्यभिचारोद्भावनं घटते । ननु संविद्धर्माणां संविदभिन्नतया भिन्नधर्मनिषेधानुमाने न क्षतिरित्यत्राह 'तत्सिद्धावपी'ति । विवादविषयाणां धर्माणां संप्रतिपन्नसंवित्स्वरूपता न घटत इति भावः । घटपटयोरिवाकारभेदाच्च संवित्तद्धर्मयोर्नैक्यमित्याह 'स्वरूपभेदाच्चे'ति । स्वरूपभेदमेवोपपादयति 'स्वाश्रय'मित्यादिना । कस्यचित्—किञ्चिदर्थस्य । प्रकाशनं—प्रकाशापादनम् । संवेदनमिति भावप्रधानो निर्देशः । संवेदनत्वमिति यावत् । यद्वा प्रकाशनं—प्रकाशकम् । आत्मने—स्वस्मै, स्वाश्रयाय वा । स्वाश्रयाय स्वविषयप्रकाशकत्वं संवेदनस्य संवेदनत्वम्; स्वयंभासमानत्वं च संवेदनस्य स्वयंप्रकाशत्वमित्येनयोर्धर्मयोः स्वरूपभेदो बोध्यः । संवेदनत्वस्वयंप्रकाशत्वशरीरानुप्रविष्टं प्रकाशपदार्थमाह 'प्रकाशश्चे'ति । प्रकाशोऽयं ज्ञाततापरपर्यायो धर्मविशेषः । अयं च न जडमात्रस्य, किंतु चित्पदार्थस्यापि । तदुच्यते 'चिदचिदशेषपदार्थसाधारण' इति । 'संवित्सिद्धावेवे'ति । संविदः स्वप्रकाशत्वसाधन इत्यर्थः । यद्वा संवित्सिद्धिनामके प्रकरण एवेत्यर्थः । एतेनाऽऽत्मसिद्धेः

तदनभ्युपगमे तु व्यवहारानुगुण्यवचनः प्रकाशशब्दः । नित्यता तु सर्वकालवर्तमानता । एकसङ्ख्यावच्छेद एकत्वमिति । नच जड-

---

पूर्वमेव संवित्सिद्धेः कृतत्वं ज्ञायते । यद्यपि उपलभ्यमाने संवित्सिद्धि-ग्रन्थभागे प्रकाशपदार्थनिरूपणं नोपलभ्यते । अथापि संवित्सिद्धौ भूयांसो भागा आदावन्ते मध्ये च विलुप्ताः । तत्रैतत्संभवतीति ध्येयम् । धर्मान्तरप्रकाशानभ्युपगमेऽप्याह 'तदनभ्युपगम' इति । व्यवहारा-नुगुण्यमेव ज्ञानाधीनं प्रकाशशब्दितम् । अव्यवह्रियमाणस्यापि ज्ञानतो व्यवहारयोग्यताऽक्षुण्णैवेति भावः । एकसङ्ख्यावच्छेदः—एकत्वसङ्ख्या-वत्त्वम् । शङ्कते 'नच जडत्वे'ति । जडत्वाभावः स्वप्रकाशत्वम्, देशकालापरिच्छिन्नत्वे विभुत्वनित्यत्वे । बहुत्वाभाव एकत्वम् । न त्वेतानि भावरूपाणि । अभावस्य चाधिकरणात्मकत्वान्न संविदः सधर्मत्वं प्रस-जतीति भावः । परिहरति 'तथाभूतैरपी'ति । अभावानामतिरिक्तत्व-मधिकरणवृत्तिधर्मान्तररूपत्वं वा । आधाराधेयभावप्रतीतिस्वारस्यादित्य-भावरूपैरपि सधर्मत्वमवर्जनीयमित्यर्थः । यस्मिन् प्रतीते निषेध्यबुद्धि-र्नोदेति तस्यैवाभावरूपत्वम् । प्रतीयमानायामपि संविदि अनित्यत्वा-दिसंशयोदयाच्च न तदभावरूपत्वं तस्याः । किंतु सर्वकालसंबन्धित्वादि-विरोधिधर्मान्तरलक्षणमेव नित्यत्वादीति भावः । 'संविदी'ति । विरोधि-धर्मवत्ताबोधनमन्तरा जडत्वादिनिषेधकत्वानुपपत्तिः प्रतिज्ञायाः; तद्बो-धने च सधर्मत्वसिद्धिरवर्जनीयेति भावः । नच जडत्वादिविरोधिस्व-रूपत्वमेव प्रतिज्ञया बोध्यते संविदो न विरोधिधर्मवत्त्वमिति वाच्यम् । सर्वाध्यासाधिष्ठानभूतायास्तस्याः सर्वविरोधित्वासिद्धेः । नच शुद्धा सा तथेति वाच्यम् । तस्याः सर्वविशेषप्रत्यनीकत्वोपगमे जडत्वादिप्रत्य-नीकतेवाजडत्वादिप्रत्यनीकताऽपीति जडाजडविलक्षणत्वादिप्रसङ्गात् ।

त्वकालदेशनानात्वाद्यवच्छेदशून्यतारूपत्वात्तेषां न यथोक्तदोष इति युक्तम्। तथाभूतैरपि तैः चितिधर्मभूतैरनैकान्त्यस्यापरिहार्यत्वात्। संविदि च निषेध्यत्वाभिमतजडत्वानित्यत्वनानात्वादिविरुद्धविविधधर्माभावे निषेधोक्तिरुक्तिमात्रमेव। चेत्यं चाज्ञानमात्मनि दृष्टमिष्टं च भवताम्। अपि चास्या इति षष्ठ्याऽनुभूतेः संबन्धमभिधाय निर्धर्मत्वं प्रतिज्ञायमानं वन्ध्यात्वमिव जनन्या विरुद्धार्थमापद्येत।

सिद्धिश्चेदभ्युपेयेत संविदः स्यात् सधर्मता।
न चेत्तुच्छत्वमेवोक्तं भवेच्छशविषाणवत् ॥ १० ॥

---

अजडत्वाद्यभावेऽपि अजडादिस्वरूपैव सेति चेद्धर्मत्वाभावेऽपि धर्मस्वरूपैव सा किं न स्यादिति दिक्। भेदादिधर्मपक्षकचित्संबन्धित्वाभावसाधनेऽनैकान्त्यमप्याह 'चेत्य'मिति। चेत्यम्—अनुभाव्यम्। आत्मनि—चिन्मात्र आत्मनि। किञ्च चिद्धर्मत्वाभावसाधनमनुपपन्नम्। प्रतियोग्यप्रसिद्धेः। धर्मो न चित इत्यपि न साधीयः। षष्ठ्यर्थस्य संबन्धस्य चित्पदार्थेनानन्वयाद्भवतामित्याह 'अपि चे'ति। प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेः चितो विभक्त्यर्थसंबन्धित्वं सिद्धमिति तत्र विशेषसामान्यनिषेधप्रतिज्ञा व्याहतार्थेति भावः।

प्रकारान्तरेणापि संविदः सधर्मकत्वं साधयति 'सिद्धिश्चे'दिति। सिद्धिः प्रकाशः। तदुपगमे तेनैव संविदः सधर्मता स्यात्। तदनुपगमे तु शशविषाणादिवदप्रकाशमानाया असिद्ध्यन्त्यास्तस्यास्तुच्छत्वमेव प्रसज्यत इति कारिकार्थः ॥ १० ॥

ननु सिद्धिरेव सा । कस्य भोः ? यदि न कस्यचित्, न तर्हि सिद्धिरेव । सा हि पुत्रत्वमिव कस्यचित् किंचित्प्रति । आत्मन इति चेत्, कः षष्ठ्यर्थः ? तदेवं व्योमारविन्दसदृशवपुषि यथोदितदृशि वेदान्ततात्पर्यवर्णनं वेदान्तायैव स्यात् ।

अपि च नित्यत्वेऽप्यनुभूतेः प्रत्यभिज्ञानुपपत्तिस्तदवस्थैव । सा हि

---

अत्र शङ्कते 'ननु सिद्धिरेवे'ति । न प्रकाशाश्रयः, किन्तु प्रकाशस्वरूपैव संवित् । तन्न तुच्छत्वं सधर्मकत्वं वेति भावः । आक्षिपति 'कस्य भो'रिति । सविशेषत्वप्रसङ्गाद्भीतः पर आह 'न कस्यचि'दिति । प्रतिवक्ति सिद्धान्ती 'न तर्ही'ति । प्रकाशो हि धर्मो विना धर्मिणा न घटत इति भावः । सिद्धेः ससंबन्धिकत्वं व्युत्पादयति 'सा ही'ति । पितुर्हि पुत्रः । पुत्रत्वमिवानुयोगिप्रतियोगिसापेक्षा सिद्धिरिति भावः । अनन्यगतिकतयाऽऽह 'आत्मन'इति । आत्मानुयोगिकात्मप्रतियोगिकैव सिद्धिः संविद इत्यर्थः । आत्मशब्दोऽत्र स्वरूपवाची । एवं चेत् सधर्मत्वमायात्येव संविद इत्याह 'क'इति । पितरं प्रति पुत्रस्य पुत्रत्वमिवात्मप्रतियोगिकः प्रकाशो धर्मः संविदात्मनः सिध्यतीत्यर्थः । एवं कारिकार्थ आक्षेपपरिहारपदकैः कतिभिश्चिद्विवृतः । एवं संविदो निर्विशेषत्वं निरस्य निर्विशेषसंविदि वेदान्ततात्पर्यवर्णनं वेदान्तानामप्रामाण्यपर्यवसायीत्याह 'तदेव'मिति । वेदान्ताय—वेदविनाशाय । वेदप्रामाण्योच्छित्त्यै इति यावत् ।

क्षणिकविज्ञानात्मवादे स्मरणाद्यनुपपत्त्या निरस्ते हि नित्यविज्ञानात्मवादिन उत्थानम् । एतत्पक्षेऽपि तामाह 'अपि चे'ति । ज्ञातुर्नित्यत्व एवाहमिदमन्वभवमित्यादेरुपपत्तिः; नतु ज्ञाननित्यत्वमात्रेणेति भावः ।

अनुभवितारं पूर्वापरकालावस्थायिनमुपस्थापयति अहमिदमन्वभूवमिति। अनुभूतिस्त्वनुभूतिरेव भवताम्, न तां प्रति सा कर्त्री कर्म वा।

( इति मायावाद्यभिमतनित्यविज्ञानात्मत्वनिरासप्रकरणम् )

यद्युच्येत- परमार्थतः तथाभूतापि भ्रान्त्यानुभवितृतया परिस्फुरति रजततयेव शुक्तिः। न हि तथ्यमनवलम्ब्य मिथ्यावभासस्योत्थानमिति; तन्न। तथा सति अनुभवसमानाधिकरणतयाऽनु-

---

एतदेव विवृणोति 'अनुभूति'रिति। एवकारार्थमाह 'न ता'मिति। यद्यपि सिद्धान्तेऽपि नानुभवितृत्वमनुभूतेः। अथाप्यनुभाव्यत्वमिष्यते। ज्ञातुश्चाहमर्थस्यात्मनो नित्यत्वम्। तथाच पूर्वानुभूतानुभूत्यादिप्रतिसन्धानं घटते। परमते त्वननुभाव्यत्वादननुभवितृत्वाच्च संविदात्मनो निरुक्तप्रतिसन्धानानुपपत्तिरेवेति भावः। तदेवं प्रतिसन्धानबलाज्ज्ञातुरेवात्मत्वं न ज्ञानमात्रस्येति स्थितं हृदि। एतदेव समर्थयिष्यत्यग्रिमग्रन्थसन्दर्भेण।

तत्रादौ ज्ञातृत्वप्रतीतेर्भ्रान्तिरूपतां पराभिमतामनुवदति 'यद्युच्येते'ति। संविन्मात्रं परमार्थः। स एवात्मा। अस्मिन्नधिष्ठाने ज्ञातुरहमर्थस्य भ्रान्तिः शुक्ताविव रजतस्य। भ्रमोपपत्त्यर्थमधिष्ठानसंविन्मात्रपारमार्थ्यमभ्युपेयमिति परेषामाशयः। दूषयति 'तन्ने'ति। 'तथा सती'ति। अयमाशयः—धर्मिणि धर्म्यन्तरारोपे आरोप्याधिष्ठानयोः समानाधिकरण्येन ( अभेदेन )भानं भवेदिदं रजतमिति यथा। अन्यत्रान्यधर्मारोपे चारोप्यधर्मवता तथा भानं दृष्टं शङ्खः पीतवान्, मुखं दर्पणस्थं, चन्द्रौ द्वाविति। न चैवमत्रानुभूतिरहमिति वा अहंवतीति वा भानमस्ति। तन्न संविदि अहमर्थारोप इति युक्तमिति। अहमर्थे संविदारोपोपगमस्तु न घटते परेषां सत्यालम्बनत्वनियमादारोपस्य, अहमर्थस्य चासत्यत्वादिति ध्येयम्। 'पृथ'गिति। पृथग-

भविताऽहमर्थः प्रकाशेत अनुभूतिरहमिति, पुरःस्थितभास्वरद्रव्य-शङ्खमुखचन्द्रादेराकारतयेव रजतपीतमुकुरस्थताद्वित्वादि । पृथगवभासमान एव तु अयमनुभवो दण्ड इव देवदत्तमर्थान्तरमहमर्थं विशिंषन् आलक्ष्यते अनुभवाम्यहमिति । तदेवमनुभवविशिष्टमस्मदर्थमवभासयन्नयमहंप्रत्ययः कथमिव विशेषणभूतानुभूतिमात्रावलम्बनः प्रतिज्ञायेत, दण्डमात्र इव दण्डी देवदत्त इति प्रत्ययः ।

कुतश्चैष निश्चयः—अध्यस्तं ज्ञातृत्वमिति ? । स्थूलोऽहमितिवत् देहात्माभिमानवतः प्रतिभासनादिति चेत् ; नन्वात्मतयाऽभिमताऽनुभूतिरपि तद्वत एवावभातीति सापि तथा स्यात् । तत्त्व-

---

वभासमानत्वं प्रकारतया प्रकारिणो विलक्षणत्वेन भासमानत्वम् । अहं दण्डीति प्रतीतितुल्यत्वादहं जानामीति प्रतीतेरहमर्थे ज्ञानधर्मवत्तावगाहित्वमेवेति यावत् । 'तदेव'मिति । दण्डमात्रे इति विषयसप्तमी । दण्डमात्रालम्बन इत्यर्थः । यथा दण्डी पुरुष इत्यत्र दण्डमात्रस्य सत्यत्वं पुरुषस्यारोपितत्वं च न, एवमहं जानामीत्यत्रापि न ज्ञानमात्रस्य सत्यत्वं ज्ञातुर्मिथ्यात्वं च । किंतु ज्ञातुरहमर्थस्य सत्यत्वमेव युक्तमभ्युपगन्तुं बाधकानुपलब्धेरित्याशयः ।

ज्ञातृत्वप्रतीतेर्भ्रान्तित्वेऽनुयुङ्क्ते किं नियामकमिति 'कुत'इति । पूर्वपक्षी तत्प्रतिवक्ति 'स्थूल'इति । भ्रान्तैर्गृह्यमाणत्वाज्ज्ञातृत्वमध्यासलक्षणमिति भावः । नेदमध्यस्तत्वसाधकं बाधितत्वेन सोपाधिकत्वादित्याशयमन्तर्निधाय प्रतिबन्दीमाह 'नन्वात्मतये'ति । देहात्मभ्रमवता गृह्यमाणाया अपि संविदोऽबाध्यत्वान्न मिथ्यात्वमिति समाधिं वाचयति पूर्वपक्षिमुखतः 'तत्त्वज्ञानोदया'दिति । तुल्यमिदं ज्ञातृत्वस्यानध्य-

ज्ञानोदयात् परतोऽपि तदनुवृत्तेर्न तथा सेति चेत्; किं भोः! तत्त्वज्ञानात्परमबोद्धैवायमात्मा? हन्तैवं वरमितोऽतत्त्ववेदित्वम्; भ्रान्त्यापि हि तत्र बहु भद्रं पश्यतीति।

ननु ज्ञातृत्वं ज्ञानक्रियाकर्तृत्वं विक्रियात्मकं जडमहङ्कारग्रन्थिस्थम्। तत्फलभुगकर्ताऽविक्रियः साक्षी प्रकाशमात्र आत्मा। कर्तृत्वादिर्हि दृश्यत्वाद्रूपादिवन्नात्मधर्मः। कर्तृत्वे ह्यात्मनोऽहंप्रत्ययगोचरत्वेऽपि देहस्येवानात्मत्वपरार्थत्वजडत्वादिप्रसङ्गो दुर्निवारः। दृष्टं च लौकिकवैदिककर्मसु कर्तृतया प्रसिद्धाद्देहात्तत्क्रियाफलभुजः प्रमातुः अहंप्रत्ययिनः पृथक्त्वम्। तथेहापि प्रमातु-

---

स्तत्व इत्याह 'किं भो'रिति। तत्त्वज्ञानफले मोक्षेऽपि ज्ञातृत्वमनुवर्तत इत्यबाधितत्वमित्याशयः। मोक्षे ज्ञातृत्वस्य निवृत्तावनर्थं प्रसञ्जयति 'हन्तैव'मिति। दुःखनिवृत्त्या मुक्तेः पुमर्थत्वमिति चेदानन्दानुभवनिवृत्त्याऽनुभवित्रहमर्थनिवृत्त्या चापुमर्थत्वं प्रसज्यते इति भावः।

ज्ञातृत्वादेरनात्मधर्मत्वात्तन्निवृत्तावपि न पुमर्थतोपघातो मुक्तेरिति शङ्कते 'ननु ज्ञातृत्व'मिति। अहङ्कारोऽन्तःकरणम्, तदेव दुर्मोचत्वाद्ग्रन्थिः, तन्निष्ठमेव ज्ञातृत्वं ज्ञानात्मना परिणामलक्षणं विक्रियात्मकं जडपरिणामत्वाज्जडं चेत्यर्थः। आत्मनः स्वरूपमाह 'तत्फले'ति। कर्तृत्वस्य फलभोक्ता, अविक्रियत्वादकर्ता, प्रकाशमात्रस्वरूपतया साक्षी चात्माऽस्तीत्यर्थः। प्रकाशः मात्रा यस्य सः प्रकाशमात्रः। 'कर्तृत्वे'-इति। आत्मा न कर्ता नाप्यहमर्थः, आत्मत्वादनन्यार्थत्वादजडत्वादविक्रियत्वाद्वा तन्नैवं यन्नैवं यथा देह इति प्रयोगा अत्र गर्भिताः। कर्तृभिन्नस्य भोक्तृत्वं कथम्? तत्राह 'दृष्ट'मिति। एतद्दूषयति 'नैव'-मिति। ज्ञातृव्यतिरिक्तस्य प्रकाशमात्रस्यात्मनोऽनुपलम्भबाधमुक्त्वा

रहमर्थाद्विलक्षणः साक्षी प्रत्यगात्मेति युक्तम् । नैवं युक्तम् । अहं जानामीति ज्ञातृतया सिध्यतः प्रत्यगात्मनो व्यतिरेकेण साक्षिणो नाम प्रकाशमात्रस्याऽऽत्मनोऽनुपलब्धेः । देहेन्द्रियमनःप्राणविज्ञानेभ्यो ज्ञानाश्रयतया विविच्यमाने प्रतीपमञ्चतीव निर्भासमा-

---

प्रत्यक्त्वबलादेवाहमर्थत्वमात्मन एषितव्यमित्याह 'देहेन्द्रिये'ति । ज्ञानस्य देहादावसंभवाद्धि तद्वैलक्षण्यमात्मनः साधितम् । तज्ज्ञातृत्वमात्मन एष्टव्यम् । देहादिश्चेदहङ्कारगोचरः । तत्राहङ्कारस्त्वाभिमानिक एव । तदहंभावस्य देहादिगतेदम्भावतः प्रतीपत्वं विरुद्धत्वम् । प्रतीपमञ्चतीति च प्रत्यक् अहङ्कारगोचरः । तत्प्रत्यक्त्वादहंत्वमात्मन आपतति । देहादेर्दृश्यादिदहङ्कारगोचराद्द्रष्टर्यात्मनि प्रतीपं विरुद्धमार्गं गच्छतीवेत्युत्प्रेक्षा । मूले अञ्चतीति सप्तम्यन्तम् । स्थिते आत्मनीति शेषः । 'साक्षित्वमपी'ति । 'साक्षाद्द्रष्टरि संज्ञाया'मित्यनुशासनादिति भावः । सर्वं च ज्ञेयं ज्ञात्रात्मन एव भासते न ज्ञानमात्राय । ततश्च ज्ञातुरेवात्मत्वं न ज्ञानमात्रस्येत्याह 'सर्व'मिति । चकासते इति चतुर्थ्यन्तम् । अतश्च न ज्ञानमात्रस्य साक्षित्वं संभवति, किन्तु ज्ञातुरेवेति तस्यैवात्मत्वं न ज्ञानमात्रस्येति हार्दम् । यत्तु ज्ञातृत्वं विक्रियात्मकमिति; तन्न । न हि कापिलमत इव ज्ञानपरिणामित्वं ज्ञातृत्वमिष्यते श्रुत्यन्तहार्दाभिज्ञैः । किन्तु अर्थप्रकाशनोपयोगिव्यापारवद्धर्मभूतज्ञानाश्रयत्वमेव । सविषयके धात्वर्थे कर्तृताया आश्रयत्वरूपत्वात्, कर्मत्वस्य विषयतारूपत्ववत् । यदपि कर्तुरन्यस्य भोक्तृत्वमिति, तदपि वार्तम् । उपादानादिकायिकक्रियानुगुणज्ञानेच्छापूर्वकान्तरप्रयत्नाश्रयत्वरूपस्य मुख्यकर्तृत्वस्यात्मन्येवोपपत्तेः । 'शास्त्रफलं प्रयोक्तरि' 'कर्ता शास्त्रार्थवत्त्वा'दिति हि वेदवेदान्तहार्दाभिज्ञाः । यदपि कर्तृत्वादिर्दृश्य-

नोऽहंभाव एव हि प्रत्यक्त्वं नाम। साक्षित्वमपि तस्य साक्षाज्ज्ञातृत्वम्। न ह्यजानन् साक्षीत्यपदिश्यते। सर्वं च प्रकाशमानं ज्ञात्रेऽहमिति चकासते प्रकाशत इति प्रत्यात्मसिद्धोऽयमनुभवः—अहं जानामि, मह्यं प्रकाशत इति।

(इति ज्ञातुरहमर्थस्य प्रत्यगात्मत्वनिरूपणम्)

न चाव्याकृतपरिणामभेदस्याहङ्कारनाम्नो बुद्धिनामधेयस्य वा ज्ञातृत्वम्; देहस्येवाचेतनत्वपरिणामित्वजडत्वपरार्थत्वादिहेतुभिस्तदनुपपत्तेः। न च चितिच्छायापत्त्या तयोस्तत्संभवः। अचाक्षुषस्य छायाऽदर्शनात्। न च ज्ञातृत्वं चितावपि ते वास्तवमस्ति, येनाग्निसंपर्कादयःपिण्ड इवौष्ण्यं तत्संपर्कादर्थान्तरे ज्ञातृत्वं जायेत ज्ञायेत वा।

(इत्यहङ्कारस्य ज्ञातृत्वतत्प्रतीत्यनुपपत्तिनिरूपणम्)

---

त्वान्नात्मधर्म इति, तदपि मन्दम्। दृश्यत्वं चेद्बाह्येन्द्रियग्राह्यत्वं तदसिद्धमान्तरप्रयत्नाधारत्वलक्षणे पक्षे। अनुभाव्यत्वं चेत्तत्, तर्ह्यप्रयोजकत्वं हेतोः। यदपि कर्तृत्वादौ अनात्मत्वाद्युपादानम्, तदपि भ्रममूलम्। अमुख्यस्यैव तस्यानात्मत्वादिव्याप्यत्वात् मुख्यकर्तृत्वाहंप्रत्ययास्पद आत्मन्यनात्मत्वाद्यप्रसक्तेरिति सङ्क्षेपः।

एवमात्मन एव ज्ञातृत्वमहंत्वं च मुख्यमित्युक्त्वा प्रकृतिपरिणामविशेषे बुद्ध्याख्ये महत्तत्त्वे तत्कार्येऽहङ्कारे वा ज्ञातृत्वमनुपपन्नमित्याह 'न चाव्याकृते'ति। अचेतनत्वम्—अनात्मत्वम्, न त्वज्ञातृत्वम्। साध्यहेत्वोरैक्यप्रसङ्गात्। महानहङ्कारो वा न ज्ञाता अनात्मत्वात् परिणामित्वाज्जडत्वात्परार्थत्वाद्वा देहवदिति प्रयोगः। ननु ज्ञातृत्वस्यासंभवेऽपि चिच्छायापत्त्या चित्संपर्काद्वा तत्र ज्ञातृत्वप्रतीतिरस्त्वित्यत्राह 'नच चिती'ति। अरूपत्वाच्चितो न प्रतिबिम्बो बुद्ध्यादौ संभवति। येन स्फटिके लोहितप्रतिभासवत्तत्र चैतन्यप्रतिभासो भवेत्। नच

यद्युच्येत—ज्ञप्तिमात्रमेवाऽऽत्मानमभिव्यञ्जन् अचेतनोऽप्यहङ्कारः स्वाश्रयतया तमभिव्यनक्ति । स्वभावो ह्ययं व्यञ्जकानाम्—यदात्मस्थतयाऽभिव्यङ्ग्यमभिव्यञ्जन्ति, दर्पणजलखण्डमुण्डादय इव मुखमिहिरबिम्बगोत्वादीन् । तत्कृतश्चायमहं जानामीति भ्रमः । अत एव खलु अहमुल्लेखविगमे सुषुप्तिमुक्त्योः स्वाभाविकविशदानुभवमात्ररूपेणाऽऽत्मनः प्रकाशः । तत एव चानात्मत्वमहमर्थस्य । तथा च सौरेशं वचः—

"आत्मनश्चेदहं धर्मो यायान्मुक्तिसुषुप्तयोः ।
यतो नान्वेति तेनायमन्यदीयो भवेदहम् ॥" इति ।

( इति अहङ्कारस्य संविदभिव्यञ्जकत्वपूर्वपक्षोपपादनम् )

---

चितौ ज्ञातृत्वमस्ति । येन तत्संपर्कात्तत्र ज्ञातृत्वं तत्प्रतिभानं वा भवेत्त अग्निसङ्गादयसि औष्ण्यभानवदिति भावः । सांसर्गिको गुणो दोषो वा तत्र तत्र जायते ज्ञायते चेति जायेत ज्ञायेत वेत्युक्तिः ।

अथ ज्ञातृत्वप्रतीतेर्निर्वाहाय पराभिमतमहङ्कारस्य संविदभिव्यञ्जकत्वपक्षमनुवदति 'यद्युच्येते'त्यादिना । अभिव्यञ्जयन्—प्रकाशयन् । स्वाश्रयतया—स्वाश्रितया । बहुव्रीहेस्तल् । खण्डमुण्डादयो गोव्यक्तिभेदाः । मिहिरबिम्बं—सूर्यबिम्बम् । शिष्टं स्पष्टम् । 'तत्कृतश्चे'ति । संविदभिव्यञ्जकत्वप्रयुक्तश्चाहङ्कारस्य संविदाश्रयत्वप्रतिभासो मुखाद्यभिव्यञ्जकत्वप्रयुक्त इव दर्पणादेर्मुखवत्त्वादिप्रतिभास इत्यर्थः । अहंभावः प्रकृतिपरिणामविशेषस्यैव, न त्वात्मन इत्याह 'अत एवे'ति । यतो ज्ञातृत्वप्रतीतिर्भ्रान्तिः, अत एव चैतन्यमात्रतयाऽऽत्मनः स्वापे मुक्तौ च भानम् । न तु तदाऽहम्भावभानमिति भावः । 'अत एवे'ति । सौषुप्तिकमौक्तिकात्मानुभवतोऽहम्भावानुल्लेखादेवाहमर्थस्यानात्मत्वमि—

तदिदमसंबद्धम् । यतः—

शान्ताङ्गार इवादित्यमहङ्कारो जडात्मकः ।

स्वयंज्योतिषमात्मानं व्यनक्तीति न युक्तिमत् ॥ ११ ॥

आत्मत्वाभिमताजडानुभवाधीना हि सर्वपदार्थाभिव्यक्तयोऽभिप्रेयन्ते । तादृशमशेषार्थसाधकमुदयास्तमयविपरिवृत्ति-

---

त्यर्थः । अत्र संवादतया सुरेश्वराचार्यवचनमुपादत्ते 'आत्मन' इति अहम्भाव आत्मधर्मश्चेत्सुषुप्तिमुक्त्योर्यायात्—अन्वियात् । यतो नान्वेति ततोऽयमनात्मधर्म एवेत्यर्थः ।

पक्षमेनं प्रतिक्षिपति 'तदिद'मिति । अहङ्कारस्य जडस्य स्वयंप्रकाशचैतन्यप्रकाशकत्वमनन्वितमनुपपन्नत्वादित्याह 'शान्ते'ति । शान्ताङ्गारः—जलनिर्वापिताग्निपिण्डः । अप्रकाशस्वरूपस्य तस्य प्रकाशमयादित्यप्रकाशकत्वमिवाप्रकाशस्वरूपस्य जडस्य प्रकृतिपरिणामविशेषस्य स्वप्रकाशसंविदात्मस्वरूपप्रकाशकत्वमनुपपन्नमित्यर्थः ॥ ११ ॥

इममेवार्थं प्रपञ्चयति 'आत्मत्वे'त्यादिना । सर्वार्थप्रकाशकं कदाचित्प्रकाशतेऽथ न, पुनःकदाचित्प्रकाशते इत्युदयास्तमयपर्यायवृत्तिरहितनित्यप्रकाशस्वरूपमनुभवात्मानं नियमेन तदधीनप्रकाशो जडोऽहङ्कारोऽभिव्यनक्तीति विप्रतीपवचनमिदं समीपस्थानामपि आत्मतत्त्वविदामुपहासास्पदमित्यर्थः । न खलु सर्वं साधयतः स्वतःसिद्धस्य च सदाऽनुभवात्मनः प्रकाशकान्तरापेक्षा । नच जडस्य नियमेन तदाभास्यस्याहङ्कारस्य तत्प्रकाशनसामर्थ्यम् । येनानुभवस्याहङ्काराभिव्यङ्ग्यत्ववचनमुपपन्नं भवेदिति भावः ।

अस्तु वाऽनुभवस्य केनचिद्व्यङ्ग्यत्वम् । अस्तु वाऽहङ्कारस्य किञ्चिदभिव्यञ्जकत्वम् । परं तदभिव्यङ्ग्यैकस्वभावस्याहङ्कारस्य तदभिव्यञ्ज-

शून्यप्रकाशस्वभावं तमनुभवं तदधीनसिद्धिरचिदहङ्कारोऽभिव्यनक्तीत्युपहास्यमिदमात्मविदाम् ।

किञ्च—व्यङ्ग्यव्यञ्जकत्वमन्योन्यं न च स्यात्प्रातिकूल्यतः ।
व्यङ्ग्यत्वेऽननुभूतित्वमात्मनि स्याद्यथा घटे ॥ १२ ॥

दिनकरकरव्यङ्ग्यकरतलं तदभिव्यञ्जकं दृष्टमिति मा वोचः ।

---

कत्वमनुपपन्नमित्याह 'किञ्चे'ति । 'व्यङ्ग्ये'ति । अनुभवात्माहङ्कारयोः परस्परं व्यङ्ग्यव्यञ्जकभावोऽनुपपन्नः । प्रातिकूल्यतः—स्वभावविरोधलक्षणादुक्तात्प्रतिकूलभावत इत्यर्थः । नियमेन तद्व्यङ्ग्यस्वरूपस्य तद्व्यञ्जकत्वं हि विरुद्धमिति प्रोक्तम् । अहङ्कारस्य संविदधीनव्यक्तेरेव तद्व्यञ्जकत्वं स्यात् । मिथ्यापदार्थस्य प्रतिभासाधीनसत्ताकस्य प्रतिभासाभावे सत्ताया एव दुर्लभत्वात् । संविच्च स्वयं भासमानैवाहङ्कारं व्यञ्ज्येत् । अन्यथा जडत्वप्रसङ्गात् । तथाच स्वप्रकाशसंविदधीनप्रकाशाहङ्काराधीनप्रकाशत्वं संविद उक्तं भवेत् । तथा चाऽन्योन्याश्रयः—संवित्प्रकाशाधीनोऽहङ्कारप्रकाशः अहङ्कारप्रकाशाधीनश्च संविदः प्रकाश इति । उक्तलक्षणात्प्रातिकूल्याद्बाधकोपनिपातान्न मिथो व्यङ्ग्यव्यञ्जकत्वं संविदहङ्कारयोः संभवतीति च तात्पर्यान्तरं वर्णितं श्रीमन्निगमान्तगुरुचरणैस्तत्त्वटीकायाम् । परमते संविदोऽहङ्कारव्यङ्ग्यत्वे दूषणान्तरमाह 'व्यङ्ग्यत्वे' इति । अन्याधीनप्रकाशत्वेऽनुभूतेरननुभूतित्वप्रसङ्गो घटादेरिवेत्यर्थः ॥ १२ ॥

तद्व्यङ्ग्यस्यापि तद्व्यञ्जकत्वे न विरोधः, दृष्टत्वादिति शङ्कामपनुदति 'दिनकरे'ति । हस्ततलस्य वातायनविवरप्रविष्टसूर्यकिरणानां गतिप्रतिरोधेन संहतिमात्रहेतुत्वम् । संहतानां च तेषां स्फुटप्रकाशः स्वत

करतलस्य तद्बाहुल्यमात्रहेतुत्वात् । तथाभूताश्च दिनकरमरीचयः स्फुटमुपलभ्यन्त इति न करतलव्यङ्ग्यत्वम् ।

अपि च केयमभिव्यक्तिः ? याऽनुभूतिरूपस्यात्मनोऽहङ्कारेण क्रियत इत्युच्यते । न तावत्तत्सिद्धिः, तस्य स्वतःसिद्धत्वेनानन्याधीनसिद्धित्वाभ्युपगमात् । नापि तद्विषयज्ञानम्, ज्ञानान्तराननुभाव्यत्वात् । अनुभाव्यत्वे हि घटादिवदननुभूतित्वप्रसङ्गः । अत एव न ज्ञानकरणानुग्रहः । स हि वेद्यगतज्ञानोदयप्रतिबन्धकापन-

---

एवेत्याह 'करतलस्ये'ति । गतिप्रतिरोधेनापि संवित्स्फुटप्रकाशहेतुत्वं करतलस्येव दुर्घटमहङ्कारस्यामूर्तस्येति हार्दम् ।

एवमहङ्कारव्यङ्ग्यत्वं संविदात्मनोऽनपेक्षितमनुपपन्नं चेत्युक्तम् । अभिव्यक्तिप्रकाराणां संभावितानां प्रकृतेऽनुपपत्तेरपि नाहङ्कारस्य तदभिव्यञ्जकत्वमित्याह 'अपि चे'त्यादिना । तत्सिद्धिः—संविदात्मप्रकाशः । स्वप्रकाशत्वेनान्यापेक्षप्रकाशत्वाभावोपगमान्न संवित्प्रकाशहेतुत्वमहङ्कारस्य । संविदो ज्ञानान्तरागोचरत्वेन तद्विषयकज्ञानजनकत्वमपि तदभिव्यञ्जकत्वमहङ्कारस्य नेति प्रकाशनप्रकाशकज्ञानजनकत्वरूपाभिव्यञ्जकत्वप्रकारद्वयं दूषितम् । 'अत एवे'ति । अननुभाव्यत्वादेवानुभवस्य तद्विषयकानुभवकरणस्याऽप्रसिद्ध्या तदनुग्रहलक्षणाभिव्यक्तिप्रकारोऽपि न संभवतीत्यर्थः । अस्तु वा तज्ज्ञानकरणं किञ्चित् । तदनुग्रहप्रकाराः प्रकृते न संभवन्तीति वदन् अनुग्रहं विकल्पयति तावत् 'स ही'ति । सः—अनुग्रहः ग्राहकस्य सहकारिसम्पत्त्यापादनलक्षणः । 'वेद्यगते'ति । वेद्यगतज्ञानोत्पत्तिप्रतिबन्धकनिरसनेन तज्ज्ञानकरणानुग्रह आद्यः कल्पः । द्वितीयमाह 'वेद्ये'ति । करणस्य ग्राह्यसन्निकर्षप्रयोजकत्वेनेति यावत् । व्यक्तिर्हि स्वद्वारा चक्षुरादेर्वेद्यजात्यादिसन्निकर्षं संपादयति । दर्पणादिश्च चाक्षुषरश्मिगतिपरावर्तनेन

यनेन वा दीपेनेव सन्तमसनिरसनेन चक्षुषः; वेद्यसन्निकर्षोपाधित्वेन वा व्यक्तिदर्पणादेरिव जातिनिजमुखादिबोधकस्य नयनादेः; वेत्तृगतकलङ्कक्षालनेन वा शमदमादिनेव परावरात्मतत्त्वज्ञानोपायस्याऽऽगमादेः। न तावदनुभवगतमहङ्कारापनेयमस्ति किंचित् ज्ञानोदयपरिपन्थि। अज्ञानं तु ज्ञानसमानाश्रयविषयतया न तदुभयभावविरहिणि भवदभिमतसाक्षिणि निक्षेपमर्हति। न खलु ज्ञानप्रसक्तिशून्यो घटादिरज्ञानीत्युच्यते। तथैव न जातुचित् ज्ञातृत्वं ज्ञानमात्रस्येति न तस्याप्यज्ञानं भवेत्। भवदपि वा तदहङ्कारापनेयं नेष्यते; ज्ञानैकनिवर्त्यत्वादज्ञानस्य, तथाऽभ्युपगमाच्च। ज्ञानं च

---

मुखादिसन्निकर्षं चक्षुषः। तृतीयमाह 'वेत्तृगते'ति। कलङ्कः—ज्ञानोत्पत्तिविरोधी पापादिः। 'नाविरतो दुश्चरिता'दित्यादिना च शमादेस्तत्त्वज्ञानजनकशास्त्रसहकारित्वं ज्ञायते। निष्कामकर्मणा शमादिना चापाकृतपापरागादिदोषस्य शुद्धचित्तस्यैव हि शास्त्रेण तत्त्वज्ञानोत्पत्तिः। प्रकृते प्रथमानुग्रहकल्पस्यानुपपत्तिमाह 'न ताव'दिति। नन्वज्ञानमेव ज्ञानोत्पत्तिविरोधि वेद्येऽनुभवात्मनि वर्तत इति चेत्तत्राह 'अज्ञान'मिति। ज्ञानेन समानावाश्रयविषयौ यस्यैवंभूतमज्ञानम्, ज्ञानसमानाश्रयं ज्ञानसमानविषयं चेति यावत्। तदुभयभावविरहिणि—ज्ञानाश्रयत्वज्ञानविषयत्वरहिते। निक्षेपं—पदन्यासम्, संबन्धमिति यावत्। अज्ञानं हि ज्ञानप्रागभावरूपं तत्समानयोगक्षेमं वान्यत् ज्ञातृत्वप्रसक्तिशून्ये भवदभिमतेऽनुभवात्मनि न घटते घटादाविवेति भावः। 'भवदपी'त्यभ्युपगम्य वादः। आत्माश्रितत्वेऽप्यज्ञानस्याहङ्कारेण निवर्त्यत्वाभावाद्वेद्यदोषापनायकत्वरूपमभिव्यञ्जकत्वं न तस्येति भावः। पराभिमतेऽनुभवात्मनि अज्ञानस्योपगमेऽनिष्टं चाह 'ज्ञानं चे'ति।

स्वविषय एवाज्ञानं निवर्तयति। न च तद्विषयत्वमात्मतयाभिमतस्यानुभवस्येष्यत इति तत्रत्यमज्ञानं न केनचित्कदाचिदुच्छिद्येत। ज्ञानप्रागभावरूपं चाज्ञानं न ज्ञानोत्पत्तिप्रतिबन्धकमिति शक्यं व्यपदेष्टुम् । भावरूपमज्ञानमनिर्वचनीयं जगदुपादानमित्यादि प्रलापमात्रमिति संबन्धनिरूपणे प्रतिपादयिष्यते। अतो न वेद्यदोषापनयनरूपा अहङ्कारेणानुभवाभिव्यक्तिः।

करणानामभूमित्वान्न तत्संबन्धहेतुता।
अहमर्थस्य बोद्धृत्वान्न स तेनैव शोध्यते॥ १३ ॥

---

आत्मनिष्ठमात्मविषयं चाज्ञानमात्मनोऽननुभाव्यत्वाज्ज्ञानानिवर्त्यं नित्यं प्रसज्यते, समानाश्रयविषयत्वेनैव ज्ञानाज्ञानयोर्बाधकबाध्यभावादिति भावः। आत्मविषयकज्ञानोपगमश्चापसिद्धान्तपराहतः। एतेनान्तःकरणवृत्तिव्याप्यत्वमेवेष्यते आत्मनः। नतु तदवच्छिन्नचैतन्यव्याप्यत्वम्। येन जडत्वादि प्रसज्येत। आत्माकारान्तःकरणवृत्त्यैवात्माज्ञाननिवृत्तिरित्यपि निरस्तम्। वृत्तेर्जडभूताया अज्ञाननिवर्तकत्वायोगात्। ज्ञानमेव ह्यज्ञानस्य निवर्तकम्। तदवच्छिन्नचैतन्यनिवर्त्यत्वे तु ज्ञेयत्वाद्यात्मनोऽवर्जनीयमेवेति दिक्। अज्ञानं च किं ज्ञानप्रागभावरूपम्; आहोस्विद्भावरूपमिति विकल्प्य दूषयति 'ज्ञाने'त्यादिवाक्यद्वयेन।

द्वितीयेऽनुग्रहकल्पे दूषणं 'करणाना'मिति। अभूमित्वात्—अविषयत्वात्। इन्द्रियाग्राह्यत्वादात्मनो नात्मेन्द्रियसन्निकर्षोपाधित्वेनाभिव्यञ्जकत्वमहङ्कारस्य संभवतीत्यर्थः। तृतीये दूषणं 'अहमर्थस्ये'ति। स्वगतकल्मषस्य स्वेनैव केवलेन निवर्तनायोगान्न तृतीयोऽपि कल्पः कल्पत इत्यर्थः॥ १३ ॥

न च स्वाश्रयतयाऽभिव्यङ्ग्यप्रकाशनमभिव्यञ्जयितुः स्वभावः; प्रदीपादावदर्शनात् । यथावस्थितवस्तुप्रकाशानुकूलस्वभावत्वाच्च ज्ञानतत्साधनतदनुग्राहकाणाम् । तच्च स्वतःप्रामाण्यन्यायात्; तदनभ्युपगमे च सर्वत्रानाश्वासप्रसङ्गात् । व्यक्तेस्तु जातिराकार एवेति तथा प्रत्यायनम्; न व्यञ्जकत्वप्रयुक्तम्; उक्तादेव व्यभिचारात् । दर्पणादिस्तु नायनमहःप्रतिफलनलक्षणदोषहेतुर्नाभिव्यञ्जको वदनादेः । व्यञ्जकस्त्वालोकादिरेव । व्यञ्जकत्वेऽपि

---

एवं व्यञ्जकत्वं निरस्य पराभिमतं व्यञ्जकस्वभावमपि निरस्यति 'नचे'ति । प्रदीपो हि घटादेः प्रकाशको न स्ववृत्तितया तं प्रकाशयति । न खल्वेवं प्रतीतिः प्रदीपे घट इति, प्रदीपो घटवानिति वा । किन्तु यथावस्थितवेषेणैव भूतले घट इतीति भवदुक्ते नियमेऽनैकान्त्यमिति भावः । ज्ञानादीनां यथावस्थितवस्तुप्रकाशहेतुत्वमेवेत्यत्र युक्तिमाह 'तच्चे'ति । प्रामाण्यस्वतस्त्वात्मकयुक्तेरित्यर्थः । ज्ञानसामग्रीप्रयोज्यत्वं ज्ञानभासकसामग्रीभास्यत्वं च प्रामाण्यस्योत्पत्तौ ज्ञप्तौ च स्वतस्त्वम् । ननु स्वतःप्रामाण्ये क्वचिज्ज्ञाने विपरीताकारावगाहनं कुतः ? ज्ञानसामग्र्यामतिरिक्तदोषसंवलनादेव । स्वतःप्रामाण्यग्रहेऽप्यनभ्यासदशापन्नज्ञाने प्रामाण्यसंशयश्च दोषमूलत्वसंशयादेवेति च बोध्यम् । प्रामाण्यस्य स्वतस्त्वानुपगमे बाधकमाह 'तदनभ्युपगम' इति । सर्वज्ञानेष्वपि अप्रामाण्यशङ्काप्रसक्तेः प्रामाण्यस्य स्वतस्त्वानुपगमे स्वतस्त्वमेष्टव्यम् । अन्यथा तु जातेऽपि प्रामाण्यनिश्चयेऽप्रामाण्यशङ्का निरर्गलप्रसरा भवेदेव । निष्कम्पप्रवृत्तिश्च कुत्रापि न घटेतेति भावः । 'व्यक्ते'रिति । व्यक्तेर्नाभिव्यञ्जकत्वप्रयुक्तं स्वाश्रिततया जातेः प्रकाशनम् । किन्तु व्यक्त्यपृथक्सिद्धप्रकारत्वरूपवस्तुस्वभावादेव । व्यञ्जकस्त्वालोका-

प्रतीपगमनदोषप्रयुक्तस्तत्रान्यथावभासः। न चेह तथाऽहमर्थस्य तादृशदोषापादकत्वं स्वभावः। तथा सति सर्वस्यापि प्रत्यक्षादेर-प्रामाण्यप्रसङ्गान्न किञ्चित्तथ्यं स्यात्। तस्माज्ज्ञातृतया सिद्ध्यन्न-हमर्थ एव प्रत्यगात्मा; न ज्ञप्तिमात्रम्।

(इत्यहङ्कारस्य संविदभिव्यञ्जकत्वनिराकरणप्रकरणम्)

यत्तु सुषुप्तिमुक्त्योर्ज्ञप्तिमात्रतया स्फुरणम्, अहमिति तु न प्रति-भातीति; तत्र सुषुप्तौ तथावस्थितिः पुरस्तादेव निरस्ता। अहमित्येक-

---

दिरेव। व्यक्तेर्व्यञ्जकत्वमपि न संप्रतिपन्नमिति भावः। 'दर्पणादि'-रिति। दर्पणादिप्रतिहतगतेश्चाक्षुषतेजसः प्रतिनिवृत्य मुखाभिमुखतया प्रसरणमेव मुखस्यान्यथाप्रतीतौ दोषरूपं प्रयोजकम्। प्रतिलोमगति-रूपदोषप्रयोजकस्य दर्पणादेर्व्यञ्जकत्वं भवतु, मा वा। न व्यञ्जकत्व-प्रयुक्तमन्यथाभानमिति भावः। 'न चेहे'ति। तादृशदोषापादकत्वम्—ज्ञानकरणानां विपरीतग्रहणोपयोगिव्यापृतिरूपदोषापादकत्वम्। 'तथा सती'ति। प्रमाणाधीनप्रमितावहमर्थस्यापि हेतुत्वात् प्रमाणदोषसंपा-दकत्वे तस्य न किञ्चिदपि यथार्थज्ञानं संभवेत्प्रमाणजन्यमित्यर्थः। 'तस्मा'दिति। ज्ञातृत्वप्रतीतेर्निरुक्तदिशा भ्रान्तित्वायोगाज्ज्ञातृतया सि-द्ध्यन्नहमर्थ एवात्मा। न ज्ञप्तिमात्रमिति भावः। अत्रायं प्रयोगः—ज्ञानं नात्मा धर्मतया प्रमितत्वाद्रूपादिवदिति। एवं ज्ञातुरहमर्थस्यात्मत्वं समर्थितम्।

अथ स्वापे मुक्तौ चाहमर्थस्य भानं नास्ति, तन्नाहमर्थस्यात्मत्वं युक्तमिति परमतमनूद्य निरस्यति 'यत्तु सुषुप्ती'त्यादिना। तत्र-सुषुप्ति-मुक्त्योः। घटकत्वं सप्तम्यर्थः। तस्य सुषुप्तावन्वयः। तथावस्थितिः—अहंभावविगमेन ज्ञप्तिमात्रतयात्मनोऽवस्थितिः, पुरस्तादेव निरस्ता,

रूपेण आप्रबोधात्तत्राप्यात्मनः स्फुरणात् । यदि परं परागर्थान-नुभवात्तमोगुणाभिभवाच्च न विविच्य स्फुटं चकास्ति; भवदभि-मताऽनुभूतिरपि तदानीं तथैव हि प्रथत इति वाच्यम् । नाहमहम्, नाप्यर्थान्तरम्, अपि त्वनुभूतिमात्रमज्ञानसाक्षितयाऽवतिष्ठत इत्येवंविधं स्वापसमयभवमनुभवं नहि सुप्तोत्थितः कश्चित् परामृश-न्नुपलब्धचरः । एतावन्तं कालं न किञ्चिदहमवेदिषमिति परामर्श-नादेव तथात्वं लभ्यत इति चेत्; कथमिव? न किञ्चिदिति निर्दे-शादिति चेत्; नन्वेवमनुभूतिप्रतिभासोऽपि प्रत्याख्यातः स्यात् ।

---

प्रतिसन्धानबलात्स्वापेऽहमर्थसद्भावतत्प्रतीतिसमर्थनबलादिति भावः । 'यदी'ति । उच्येतेति शेषः । तत्तत्परागर्थानुभवितृत्वेन स्फुटं ज्ञान-ज्ञेयतो विविच्याऽऽत्मनो भानं स्वापे नास्तीति परं यद्युच्येतेत्यर्थः । परा-गर्थाननुभवाद्विविच्य भानं न, तमोगुणाभिभवाच्च स्फुटं तन्नेति अनु-सन्धेयम् । परमतेऽपि तत्समानमित्याह 'भवदभिमते'ति । विशद-भानाभावेऽपि सूक्ष्मतयाऽहमर्थस्य भानं पराभिमतसंविद इव स्वापे-ऽस्तीति च हार्दम् । 'नाहमह'मिति । इदानीमहन्त्वेन भासमान आत्मा स्वापे तथा नास्तीत्यर्थः । एकमहमित्यधिकं पतितं वा । एतावन्तमित्या-दिप्रतिसन्धानमज्ञानसाक्षितयाऽहमर्थस्यैव स्वापे सत्त्वेऽनुगुणमिति भावः । शङ्कते 'एतावन्त'मिति । तथात्वम्—संविन्मात्रस्य भासमानत्वम् । प्रत्यवतिष्ठते सिद्धान्ती 'कथ'मिति । प्रतिवक्ति शङ्किता 'न किञ्चि'दिति । आक्षिपत्येनं 'नन्वेव'मिति । किञ्चिदित्यहमर्थस्येवासङ्कोचात्संविदोऽपि क्रोडीकारात् संविन्मात्रस्यापि भानं भवतां तदाऽभिमतं न सिद्ध्येदि-त्यर्थः । ननु किञ्चिदिति जडमात्रस्य परामर्श इति चेत्तर्ह्यहमर्थस्यापि न निषेधः प्रत्यक्त्वेनाजडत्वादिति भावः । यद्वा ज्ञेयमात्रस्य किञ्चिदिति

1393

अपि च सुषुप्तिसमयसिद्धमात्मानमहमिति परामृश्य न किञ्चिद्वेदिषमिति तस्य वेदने प्रतिषिध्यमाने तात्कालिकीं वित्तिसिद्धिमहमर्थस्य चासिद्धिमभिदधानोऽनुभवविरोधमपि न जानाति देवानां प्रियः। निर्विषया निराश्रया च वित्तिर्नास्तीत्युक्तमेव।

ननु मामप्यहं न ज्ञातवान् प्रसुप्त इत्यस्ति हि प्रबोधे प्रत्ययः। सत्यम्; स तु वर्णाश्रमादिविशिष्टतया प्रबोधसमयसंवेद्यमानं देहिनं मामित्यादाय स्वाप्ययावस्थाप्रसिद्धाविशदस्वानुभवैकतानाहमर्थस्य तेन रूपेणाज्ञातत्वं प्रज्ञापयति, न पुनर्ज्ञस्वभावस्याहमर्थ-

---

परामर्शो न ज्ञानस्येति चेत्तुल्यनयेन ज्ञातुरपि न परामर्श इति भावः। परपक्षे प्रतिसन्धानविरोधमाह 'अपि चे'ति। देवानां प्रियः—मूर्खः। तथाहि निपातनम्। अनुभवप्रकारानभिज्ञत्वं च मौर्ख्यम्। न हि भूतले घटो नास्तीत्यस्य घटसद्भावभूतलनिषेधविषयकत्वं कस्यचिन्मतम्। किन्तु घटनिषेधभूतलास्तित्वविषयकत्वमेव। तत्तुल्या चैतावन्तमितिप्रतीतिर्ज्ञाननिषेधज्ञातृसद्भावविषयैवेति भावः। ननु सविषयसंविन्निषेधेऽपि निर्विशेषसंवित्प्रकाशे न विरोध इत्यत्राह 'निर्विषये'ति। निर्विषयमपि साश्रयमेव ज्ञानं मतं स्वापे। तच्च धर्मभूतं नैव तदा प्रकाशत इति तु सिद्धान्तिनः।

स्वापेऽहमर्थाननुभवे प्रतिसन्धानान्तरं प्रमाणत्वेन शङ्कते 'ननु मा'मिति। परिहरति अर्धाङ्गीकारेण 'सत्य'मिति। प्रतीतावभ्युपगमः। स्वापे सर्वथाऽहमर्थाननुभवेऽनभ्युपगमः। 'स्वाप्यये'ति। स्वापकालिकाविशदस्वप्रकाशैकाश्रयस्येत्यर्थः। तेन रूपेण—वर्णाश्रमादिविशिष्टवेषेण। ज्ञस्वभावस्य-ज्ञातृस्वरूपस्य। स्वापे न ज्ञानस्य प्रकाशः, किन्तु ज्ञातृस्व-

स्यापि । एवमिव खल्वयमनुभवः—अत्र सुप्तोऽहमीदृशश्चेत्येवं मामपि न ज्ञातवानहमिति । अपि च, आत्मा सुषुप्तौ अज्ञानसाक्षित्वेनाऽऽस्त इति हि यौष्माकी स्थितिः । साक्षित्वं च साक्षाज्ज्ञातृत्वमित्युक्तम् । स चायं जानामीति प्रतिभासमानोऽस्मदर्थ एवेति कथमिव तदानीमहमर्थो न प्रथेत । स्वस्मै प्रकाशमानोऽहमित्येव हि प्रकाशत इति । तत्सिद्धं स्वापादिदशास्वप्यात्मा प्रकाशमानोऽहमित्येव प्रकाशत इति ।

(इति स्वापेऽहमर्थभानसमर्थनप्रकरणम्)

यत्तु मुक्तावहमर्थो नोपावर्तत इति; तद्वार्तम् । यतस्तथा सति वैनाशिकदर्शन इवात्मनाश एवापवर्गः प्रकारान्तरेण प्रतिज्ञातः स्यात् । नो खलु अहमिति धर्ममात्रम्, येन तदपगमेऽप्यविद्यानिवृ-

---

रूपस्यैवेति द्योतनायेदमुक्तम् । प्रतीतेरर्थमभिलपति 'एवमिवे'ति । इवशब्दोऽवधारणे । अज्ञानसाक्षित्वेनाऽऽत्मा स्वापे प्रकाशत इति परपक्षरीत्यापि तदाऽहमर्थस्य भानमवर्जनीयमित्याह 'अपि चे'ति । 'साक्षाद्द्रष्टरि संज्ञाया'मिति साक्षात्कर्तर्येव हि साक्षिशब्दोऽनुशिष्टः । स च ज्ञातृत्वेन प्रतीतोऽहमर्थ एवेति अहमज्ञ इत्यज्ञानसाक्षितया स्वापेऽहमर्थभानं सेत्स्यत्येवेति भावः । प्रत्यक्त्वस्याहंबुद्धिव्यवस्थाप्यत्वादपि आत्मनोऽहन्त्वमेषितव्यमेवेत्याह 'स्वस्मै' इति । स्वापेऽहमर्थभानसमर्थनमुपसंहरति 'तत्सिद्ध'मिति । स्वापादीत्यादिपदेन मोहाद्यवस्था ग्राह्या ।

अथ मुक्तावहमर्थनिवृत्तिमनूद्य दूषयति 'यत्तु' इति । 'तद्वार्त'मिति । वार्तं—फल्गु । तदिदं मतं क्षुद्रमित्यर्थः । 'यत'इति । वैनाशिकदर्शनं—बौद्धदर्शनम् । प्रकारान्तरेण—अहम्भावानुवृत्तिकथनमुखेन । 'येने'-

न्यामिवात्मनः स्वरूपेणावतिष्ठत इत्युच्यते। अहमित्येव हि तस्य स्वरूपम्। ज्ञानमपि हि तद्धर्मत्वेन तस्यैव प्रकाशते ज्ञानं मे जातमिति। का कथा पुनरर्थान्तरस्याऽऽत्मत्वे ?।

अन्यच्च—यः सांसारिकदुःखैः दुःखित्वेनाऽऽत्मानं तत्त्वतो भ्रान्त्या वा प्रत्येति दुःख्यहमिति, सः सर्वमिदमनिष्टजातं कथमहमपुनरुद्यमपनुद्याव्याकुलः स्वस्थो भूयासमिति सञ्जातमुमुक्षः तत्साधने प्रवर्तते। स यदि साधनानुष्ठानादहमेव न भविष्यामीत्यवगच्छति, अपगच्छेदसौ मोक्षकथाप्रसङ्गादपि। ततश्चासम्भवदधिकारितया सर्व एव वेदान्तविधयः सर्वाणि च मोक्षशास्त्राणि प्रामाण्यादेव प्रच्यवेरन्। अहमुपलक्षितः प्रकाशोऽपवर्गेऽवस्थास्यत

---

ति। आत्मन इत्यस्याग्रे आत्मा इति पूरणीयम्। अहमर्थस्य धर्ममात्रत्वे तन्निवृत्तावपि मुक्तौ आत्मा अनुवर्तते इति भवत्कथनं साधीयो भवेत्। न तु धर्ममात्रं सः। किन्तु स एवात्मेति पिण्डितार्थः। ज्ञानमात्रस्यात्मत्वं प्रतिक्षिपति 'ज्ञानमपी'ति। धर्मतया प्रमीयमाणस्य ज्ञानस्य न स्वतन्त्रात्मत्वं संभवतीति भावः। अन्तरङ्गस्य ज्ञानस्यैवाऽऽत्मत्वासम्भवे वहिरङ्गस्येन्द्रियादेः सुतरां न सम्भावितमात्मत्वमित्याह 'का कथे'ति। ज्ञातृतया प्रमीयमाणादहमर्थादन्यस्य न कस्याप्यात्मत्वं युक्तमिति भावः।

मुक्तावहंभावनिवृत्तौ दूषणान्तरमाह 'अन्यच्चे'ति। सुखदुःखभोक्तृत्वं दुःखत्रयाभिघातात् मुमुक्षुत्वं च ज्ञातुरहमर्थस्यैव, स चेत् स्वस्यैव विनाशं मुक्तौ जानीयात् न तस्यै स्पृहयेत्। तथाच तस्या अपुरुषार्थत्वप्रसक्तिः। नापि मोक्षसाधनज्ञानानुष्ठानयोः प्रवर्तेतैवं जानन्। तथाच ज्ञापकतयाऽनुष्ठापकतया च प्रामाण्यं भजतां मोक्षशास्त्राणां प्रामाण्यं भज्येतेति भावः। 'नही'ति। यथा देहगेहाद्युपलक्षितः पृथिवीभागः

इति चेत्, किमतः ? न हि मयि नष्टेऽपि कोऽपि प्रकाशः स्थास्यतीति कश्चित्प्रेक्षावान् प्रयस्यति ।

एतेन तदपि परास्तम्, अस्मत्प्रत्यये योऽनिदमंशः चिदेकरसः प्रकाशः स आत्मा । तस्मिंस्तद्बलनिर्भासिततया लक्षणतो युष्मदर्थ एवाहं जानामीति सिध्यन्नर्थ इति । प्रत्यक्षविरोधात् । अहं जानामीति सिध्यंश्चेतनो युष्मदर्थ इति माता वन्ध्येतिवद्व्याहतार्थं

स्थास्यतीति स्वदेहगेहनाशे न प्रवर्तेत स्वयमेव कश्चित् प्रेक्षापूर्वकारी, एवमहमर्थोपलक्षितः प्रकाशः स्थास्यतीति बुद्ध्या न स्वनाशाय मोक्षाय ज्ञाताहमर्थः प्रवर्तेतेति भावः ।

चित्त्वात् स्वयंप्रकाशत्वम्, ततः प्रत्यक्त्वं, ततश्चात्मत्वं चितो ज्ञानस्यैव, न तु तद्भिन्नस्याहमर्थस्येति पक्षं प्रतिक्षिपति 'एतेने'ति । अहं जानामीति प्रत्यये चैतन्यैकरूपः पराग्भिन्नः प्रत्यक् यः जानामीति प्रतीयते, सः प्रकाश एवात्मा । तस्मिन्नधिष्ठाने भासमानः तदधीनप्रकाशः अहमर्थो युष्मदर्थलक्षण एव—परागर्थस्वरूप एव, तन्नात्मेत्यर्थः । तस्मिन्नित्यनेन चिद्भिन्नत्वं, तद्बलनिर्भासिततयेति अस्वप्रकाशत्वं, लक्षणतो युष्मदर्थ एवेति पराक्त्वं चाहमर्थस्यानात्मत्वे लिङ्गमुक्तम् लक्षणतः—स्वरूपतः; यद्वा अस्वयंप्रकाशत्वलिङ्गात् । ज्ञानं स्वप्रकाशं ज्ञानत्वात्, ज्ञानं प्रत्यक् स्वयंप्रकाशत्वात्, ज्ञानमात्मा प्रत्यक्त्वादिति प्रयोगत्रयम्, अहमर्थो न स्वयंप्रकाशः चिद्भिन्नत्वात्, अहमर्थः पराक् अन्याधीनप्रकाशत्वात्, अहमर्थो नात्मा पराक्त्वादिति प्रयोगत्रयं चात्र गर्भितम् । अस्य प्रतिक्षेपयुक्तिः 'प्रत्यक्षविरोधा'दिति । चितो ज्ञानस्याऽऽत्मत्वे धर्मिग्राहकमानबाधोऽत्र विवक्षितः । प्रत्यक्षेण तस्य धर्मत्वेनैव प्रमीयमाणत्वात् । अहमर्थो युष्मदर्थ इति प्रतिज्ञावाक्ये विरोधमाह

वचः। न चासौ अन्याधीनावभासः, चैतन्यस्वभावतया स्वयंज्योतिष्ट्वात्। प्रकाशश्च प्रकाशत्वादेव कस्यचिद्भवेद्दीपादिप्रकाशवदिति नात्मा भवितुमर्हति। अतो ज्ञातृतयाऽहमिति सिद्ध्यन्नर्थ एवाऽऽत्मा।

स च मुक्तावप्यात्मनेऽहमित्येव प्रकाशते, स्वस्मै प्रकाशमानत्वात्। यो यः स्वस्मै प्रकाशते स सर्वोऽहमित्येव प्रकाशमानो दृष्टः, यथा तथावभासमानत्वेनोभयवादिसंमतः संसार्यात्मा। यः पुनरहमिति न चकास्ति नासौ स्वस्मै प्रकाशते, यथा घटादिः। स्वस्मै प्रकाशते चायं मुक्तात्मा। तस्मात् सोऽहमित्येव प्रकाशते।

---

'अह'मिति। माता वन्ध्येति प्रतिज्ञातुल्येयमिति यावत्। ननु युष्मदर्थ इति लाक्षणिकं पराक्त्वपरम्। नातो विरोधः। पराक्त्वं चाहमर्थस्य चिदधीनप्रकाशत्वादित्यत्राऽऽह 'न चासा'विति। अत्र प्रयोगः—अहमर्थोऽनन्यापेक्षप्रकाशः चैतन्यधर्मकत्वात्, यन्नैवं तन्नैवं यथा घट इति। प्रात्यक्षिकी धर्मत्वेन प्रमितिश्चैतन्यस्याऽऽत्मत्वे पूर्वं बाधकत्वेनोक्ता। अथाऽऽनुमानिकीं तां तथात्वेनाऽऽह 'प्रकाशश्चे'ति।

मुक्तावहमर्थस्य सद्भावे पूर्वं तर्क उक्तः। अथ तदा मुक्तस्याहन्त्वेन भानेऽनुमानं समग्राङ्गकन्यायमुखेन प्रपञ्चयति 'स चे'ति। 'न चैव'मिति। एवं भासमानत्वे—अहन्त्वेन भासमानत्वे मुक्तस्य संसारिण इवाज्ञत्वादि नापादयितुं शक्यते, मुक्तत्वविरोधात्—शास्त्रसिद्धमुक्तिदशाभाव्यज्ञाननिवृत्त्यादिविरोधादित्यर्थः। मुक्तात्मा अज्ञानवान् संसरणधर्मवान् वा अहन्त्वेन भासमानत्वात् संसार्यात्मवदिति अनुमानं मुक्तविशेषप्रतिपादकशास्त्रबाधितमिति भावः। ननु नास्माभिरज्ञत्वादि मुक्तस्य साध्यते। किन्तु अहन्त्वेन भासेत यदि मुक्तात्मा, तर्ह्यज्ञानादिमान् स्यादिति प्रसञ्जनमेव क्रियत इति चेत्तत्राप्याह

न चैवं प्रकाशमानत्वे मुक्तस्याज्ञानित्वसंसारित्वादिप्रसङ्ग आपादनीयः । मुक्तत्वविरोधात् । अतदुपाधित्वाच्च तत्प्रत्ययस्य । न ह्यज्ञानोपाधिरहंप्रत्ययः । ब्रह्मात्मापरोक्षज्ञानक्षपितनिरवशेषाविद्यानामपि वामदेवादीनाम(मे)तत्प्रत्ययदर्शनात् । श्रूयते हि 'तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च' 'अहमेव च वर्तामि भविष्यामी'त्यादि । तथा कथञ्चिदप्यविद्यादिक्लेशैर्लेशतोऽपि जातुचिदपरामृष्टस्य परमपुरुषस्याप्यहमित्यात्मपरामर्शः प्रज्ञायते 'हन्ताहमिमास्तिस्रो देवताः'

---

'अतदुपाधित्वा'दिति । तत्प्रत्ययस्य—अहमितिप्रत्ययस्य, अतदुपाधित्वाच्च—अज्ञानकारणकत्वाभावाच्चेत्यर्थः । आपाद्यापादकयोर्व्याप्यव्यापकभावे सति ह्यापादनं युज्यते । नात्र सोऽस्ति तन्नियामकहेतुहेतुमद्भावाद्यभावादिति भावः । अज्ञानोपाधिरिति बहुव्रीहिः अज्ञानमुपाधिः प्रयोजकं यस्येति । वामदेवादीनामित्यादिपदेन महादेवादिर्ग्राह्यः । अतत्प्रत्ययेतिप्राचीनमुद्रितपाठस्त्वशुद्धः । एतत्प्रत्ययेति वा, अहंप्रत्ययेति वा पाठः संभाव्यते । 'अहमेव चे'ति रुद्रवाक्यमथर्वशिरसि । निवृत्तसर्वासनाविद्यादोषाणामपि अहंप्रत्ययदर्शनात् नास्याज्ञानोपाधित्वं संभवतीति भावः । 'अहमन्न'मित्यादिमुक्तानुसन्धानवाक्यमप्यत्रानुसन्धेयम् । नन्वेतेषां बाधितानुवृत्तिरूपोऽहंप्रत्यय इत्यत्राप्याह 'तथे'ति । अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः । क्लेशग्रहणं कर्मविपाकाशयानामुपलक्षणम् । 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वर'इति हि योगतन्त्रे प्रसिद्धम् । सर्वदा सर्वथाऽविद्यारहितस्येश्वरस्याहमिति स्वात्मनि प्रत्ययो नाविद्यादिमूलः संभवेदिति हार्दम् । सृष्टिप्राक्कालेऽहङ्काराद्युपाधेरभावात्तदानीन्तनोऽहंप्रत्ययो

'बहु स्यां प्रजायेय' 'स ईक्षत लोकान्नु सृजा इति', तथा--'यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः॥' 'तेषामहं समुद्धर्ता' 'अहं बीजप्रदः पिता' 'वेदाहं समतीतानि' इत्येवमादिभिः।

एवं च साक्षादहमर्थादात्मनो विलक्षणेऽपि देहे येनाऽऽव्यक्तिकपरिणामभेदेनाहमिति भ्रमः, तदभिप्रायोऽहङ्कारस्य क्षेत्रान्तर्भावोपदेशो भगवतः 'महाभूतान्यहङ्कार' इति। बहुमन्त-

---

नेश्वरस्य परोपाधिप्रयुक्तः, किन्तु स्वरूपप्रयुक्त एवेति प्रदर्शनाय सृष्टिसङ्कल्पवाक्योपादानम्। चिदचिदन्तर्यामिस्वरूपपरामर्शी 'हन्ताऽह'-मित्यहंशब्दः। मुक्तप्राप्यपरस्वरूपवाची 'यस्मा'दिति गीतावाक्ये भगवतोऽहंशब्दः। नच सोपाधिरीश्वरोऽन्तर्यामी मुक्तप्राप्यो वा भवतीति भावः। तथा मृत्युसंसारसागरतारकं शुद्धमेव स्वरूपं भगवतोऽहमिति निर्दिष्टं 'तेषामह'मित्यत्र। नहि स्वयं सोपाधिरितरोपाधिमोचनसमर्थ इति भावः। पितृत्वरक्षकत्वाद्यभिप्रायं च 'अहं बीजप्रदः पिते'ति। अहंशब्दितं जगत्कारणस्वरूपं नाज्ञानोपहितं, न वा ज्ञानमात्रम्, किंतु सर्वज्ञमिति ज्ञापनाय चोपात्तं 'वेदाह'मिति वचनम्। न चैषां निष्कृष्टस्वरूपविषयाणामहंशब्दानां बहूनाममुख्यत्वं युक्तम्। किन्तु प्रत्यक्त्वप्रवृत्तिनिमित्तकत्वान्मुख्यत्वमहन्त्वेन स्वरूपभानप्रयुक्तत्वमेव चेति भावः।

नन्वेवमहम्भावस्याऽऽत्मस्वरूपत्वेऽहङ्कारस्य क्षेत्रान्तर्भाववचनं त्याज्यत्वप्रतिपादनं च गीतास्थं कथमित्यत्राऽऽह 'एवं चे'ति। आव्यक्तिकपरिणामभेदेन--प्रधानपरिणाममहत्परिणामेनाहङ्कारेण। अनहमहं क्रियतेऽनेनेत्यहङ्कारः। करणं च मानसम्। तथा चानहमि देहेऽहमभिमानहेतुरनात्मनि आत्मभ्रमहेतुरहङ्कारः क्षेत्रान्तर्गतत्वेनोपदिष्ट इति

व्यजनावधीरणहेतुश्चासौ गर्वापरपर्यायः तत्र तत्र शास्त्रेषु प्रायशो हेयतयोपदिश्यते । तस्मादहमिति मतिर्बाधकापेता साक्षादात्मगोचरैव । अनात्मनि तु शरीरे भवन्ती अविद्येति युक्तम् । उक्तं च 'श्रूयतां चाप्यविद्यायाः स्वरूपं कुलनन्दन । अनात्मन्यात्मबुद्धिर्या' इति महर्षिणा वासिष्ठनन्दनेन । नच ज्ञप्तिमात्र-

---

फलितम् । अथ 'अहङ्कारं बलं दर्प'मिति त्याज्यत्वेनोक्तस्याहङ्कारस्याभिजनादिनिमित्तदुरभिमानमूलगर्वरूपत्वमाह 'बहुमन्तव्ये'ति । अनहमहं क्रियत इति चात्र व्युत्पत्तिः । प्रशस्तकुलीनदेहादावात्माभिमान इत्यर्थः । सचायं पूज्यावमाननहेतुगर्वहेतुत्वाद्गर्व इत्युच्यते इति भावः । च्व्यर्थमन्तर्भाव्योभयत्र व्युत्पत्तिः । च्व्यर्थमनन्तर्भाव्य तु व्युत्पन्नोऽहङ्कार इति आत्मनि अहंबुद्धिवाचीति विवेकः । 'तस्मा'दिति । अबाधिताहंबुद्धिर्मुख्याऽऽत्मगोचरैव । देहादौ तु सा भ्रान्तिलक्षणैवेति भावः । अत्र संवादिपुराणरत्नवचनं 'श्रूयता'मिति । 'आत्मन्येष न दोषाय शब्दोऽहमिति यो द्विज । अनात्मन्यात्मविज्ञानं शब्दो वा भ्रान्तिलक्षणः ॥' इति च तत्रत्यमत्रानुसन्धेयम् । आत्मविज्ञानम्—अहम्बुद्धिः । शब्दोऽहंशब्दः । वासिष्ठनन्दनेन-वसिष्ठपुत्रस्य शक्तेः पुत्रेण भगवता पराशरेण । देहात्मभ्रमाकारपरीक्षातोऽपि स्वीकार्यमहमर्थत्वमात्मन इत्याह 'न च ज्ञप्ती'ति । अनात्मबुद्धिः—अनात्मन्यात्मबुद्धिः । तथैव पाठः स्यादिति संभाव्यते । ज्ञप्तिमात्रस्यात्मत्वे स्थूला संविदित्येव देहात्मभ्रमस्याऽऽकारः स्यात् । नतु स्थूलोऽहमिति । अतोऽप्यात्माऽहमर्थ एव । यस्मिन् सति अहमिति बुद्धिर्देहे उदेति । अपक्रान्ते च न । सोऽयमात्माऽहमर्थ एवेति च युक्तमभ्युपगन्तुमिति भावः ।

प्रतिभासः कस्यचित् शरीरेऽस्ति। येन तन्मात्रात्मत्वादिनोऽप्यनात्म( न्यात्म )बुद्धिरुपपद्येत।

अतः प्रत्यक्षसिद्धत्वादुक्तन्यायागमान्वयात्।
अविद्यायोगतश्चात्मा ज्ञाताऽहमिति भासते ॥ १४ ॥

(इति ज्ञातुरात्मनो मुक्त्यादौ सर्वदाप्यहंभावभानसमर्थनप्रकरणम्)

यदुक्तम्–अजडत्वाद्धित्तिरेवाऽऽत्मेति; तत्रेदं वाच्यं किमिदमजडत्वं नामेति। यद्युच्येत–सदपि यन्न प्रकाशते तज्जडम्, तद्विपरीतमव्यभिचरितप्रकाशसत्ताकमजडमिति; तथा सति सुखा-

---

अहमर्थस्याऽऽत्मत्वं निगमयति 'अत' इति। जानाम्यहमिति ज्ञानधर्मित्वेन प्रत्यक्षसिद्धत्वादहमर्थस्यैवाऽऽत्मत्वम्। अहन्त्वेन तस्य मुक्तावपि भानेऽनुमानमुक्तमागमश्च। प्रत्यक्स्वान्यथानुपपत्तिलक्षणस्तर्कोऽप्युक्त आत्मनोऽहमर्थत्वव्यवस्थापकः। स्थूलोऽहमिति देहात्मभ्रमरूपाविद्यासङ्गतेश्च ज्ञाताऽहमर्थ एवात्मा, स च सर्वदाऽहमिति भासते इति कारिकार्थः। आत्मा ज्ञातैवेत्यत्रापि प्रत्यक्षादिकमस्तीति गर्भितमत्र। प्रत्यक्षं चाहं जानामीत्यादिकं प्रसिद्धमेव। ज्ञानस्य देहादिधर्मत्वनिषेधेन परिशेषानुमानमपि सिद्धम्। शास्त्रवचनानि चाग्रे मूल एव निर्देक्ष्यन्ते। ज्ञानसमानाश्रयत्वादज्ञानस्याज्ञातृत्वे आत्मनोऽविद्यान्वयायोग इति तर्कोऽप्युक्तप्राय इति। एवं ज्ञातुरहमर्थस्यात्मत्वं व्यवास्थापि ॥ १४ ॥

अथ ज्ञानस्याऽऽत्मत्वे साधकत्वेन परैरुपन्यस्तमजडत्वमपि विकल्प्य दूषयति 'यदुक्त'मित्यादिना। तद्विपरीतमित्यस्य विवरण'मव्यभिचरिते'त्यादि। अव्यभिचरितः–नियतः प्रकाशो यस्याः, एवंभूता सत्ता यस्य, तदजडमित्यर्थः। स्वसत्ताव्यापकप्रकाशत्वमजडत्वमिति यावत्। 'तथा सती'ति। अनात्मसु सुखादिष्वपि निरुक्ता-

---

टिप्प०—१ तत्र तत्र सम्भाव्यमानः पाठः ( ) चिह्नान्तः प्रदर्शितः।

दिभिर्व्यभिचारी हेतुः। न खलु सुखदुःखेच्छादयो विद्यमाना अपि कदाचिदनवभासमाना भवन्ति। स्वसत्ताप्रयुक्तप्रकाशत्वमपि दीपादिभिरनैकान्तिकम् । ज्ञानव्यतिरिक्तप्रकाशानङ्गीकाराच्चासिद्धता, विरुद्धता च। यदि मतम्—अव्यभिचरितप्रकाशोऽपि सुखादिरन्यस्मै प्रकाशत इति घट इव जडतां नातिवर्तते, तेनानात्मेति; ज्ञानं वा किं स्वस्मै प्रकाशते ? अन्यस्यैव हि तदपि जानतोऽहमर्थस्य प्रथतेऽहं जानामीति, अहं सुखीतिवत्। तेन स्वस्मै प्रकाशमानत्वमभिप्रेत्य प्रयुज्यमानोऽजडत्वहेतुरसिद्धः संविदि । अतः सत्तयैव स्वमात्मानं प्रति सिध्यन्नजडोऽहमर्थ एवात्मा। तत्संबन्धायत्ता तु ज्ञानस्यापि प्रकाशता। अत एव हि स्वाश्रयचेतनं

---

जडत्वस्य सत्त्वात् व्यभिचार इत्युक्तं भवति । अजडत्वप्रकारान्तरं दूषयति 'स्वसत्ते'ति। यस्य स्वसत्तयैव प्रकाशः, तत्स्वसत्ताप्रयुक्तप्रकाशम्, तत्ता जडत्वमित्यपि प्रदीपादौ व्यभिचारि । दीपस्य प्रकाशे हि न दीपान्तरापेक्षा। ननु चक्षुरादेरपेक्षास्त्येव तत्रेति चेत्; अस्तु नाम; तावता स्वसत्ताप्रयुक्तताया अनपायात्। स्वसत्तामात्रप्रयुक्तत्वविवक्षा तु न संभवति, संविद्यसिद्धेः । विजातीयात्मापेक्षत्वात्तत्प्रकाशस्य। एतच्चानन्तरमेव स्फुटीभविष्यति। दूषणान्तरमप्याह 'ज्ञाने'ति। ज्ञानतो धर्मोऽतिरिक्तः प्रकाशो नाम नाभिमतः। ज्ञानमेव तु प्रकाशरूपम् । तत् स्वसत्ताप्रयुक्तप्रकाशत्वरूपो हेतुरसिद्धः पक्षे ज्ञाने । तत्प्रकाशं नित्यमभ्युपगच्छतः तस्य स्वसत्ताप्रयुक्तत्वकीर्तनं विरुद्धं च। यद्वा प्रकाशवत्त्वस्य संविद्युपगमेऽभिमतनिर्विशेषत्वविरोध इति भावः। स्वस्मै स्वयं भासमानत्वरूपमजडत्वमात्मत्वे साधकं तु स्वरूपासिद्धमित्याह 'यदि मत'मिति । ज्ञानप्रकाशस्य तदाश्रयनिबन्धनत्वमाह

प्रति प्रकटता, इतरं प्रत्यप्रकटता च ज्ञानस्य सुखदुःखादेरिव। नचैवमात्मान्तरसंबन्धमर्थान्तरं वाऽपेक्ष्यायमात्माऽऽत्मने प्रकाशते। एतच्चानन्तरमेवोपपादयिष्यते।

(इति ज्ञानात्मत्वसाधकाजडत्वदूषणम्)

न च ज्ञानेन सहोपलम्भनियमोऽहमर्थस्यार्थान्तरतां वारयति, ज्ञानस्यापि तथात्वप्रसङ्गात्। तदपि हि तेन नियतेन सहोपलम्भमित्यहमर्थादनर्थान्तरं मिथ्यारूपमेवाऽऽपद्येत। असिद्धश्च संविद्धि-

---

'तत्संबन्धे'ति। प्रकाशता—ज्ञानरूपता, प्रकाशमानता वा। स्वाश्रयाय स्वविषयप्रकाशकत्वरूपं ज्ञानत्वं, प्रकाशमानता चात्मधर्मताहेतुके एव। नहि स्वाश्रयादन्यस्मै स्वविषयं प्रकाशयति ज्ञानं, स्वयं वा प्रकाशते इति भावः। 'अत'इति। स्वस्मै स्वयं भासमानत्वमहमर्थस्यैवेति स एवात्मेत्यर्थः। प्रकटता—प्रकाशमानता। आत्मान्तरसंबन्धम्—आश्रयान्तरसंबन्धम्। अर्थान्तरं—ज्ञानादि। 'एतच्चे'ति। 'अनन्यसाधन'इत्येतद्विवरण इति भावः।

संविद आत्मत्वसाधकमजडत्वं प्रदूष्य ज्ञात्रादेः संविदभेदसाधकं प्रकटसौगताभिमतं सहोपलम्भनियमं दूषयति 'नच ज्ञानेने'ति। 'ज्ञानस्यापी'ति। मिथ्याभूतेनाहमर्थेन सहोपलम्भनैयत्यतौल्यात्संविदस्तदभेदात् मिथ्यात्वप्रसक्तिरिति भावः। अभिमतविरुद्धापादकत्वाद्धेतोर्भवदीयस्य विरुद्धत्वमिति हेतुदोष उद्भावितो भवति। अहमर्थेन सहैवोपलम्भं संविद उपपादयति 'तदपी'ति। नियतेन—स्वप्रकाशव्यापकप्रकाशवता। तेन—अहङ्कारेण। सहोपलम्भो यस्य तत् सहोपलम्भम्। किञ्च, तदुपलम्भव्याप्योपलम्भवत्त्वरूपो हि सहोपलम्भनियमः परैः तदभेदसाधको मतः। स चायमहमर्थस्य संविदभेदसाधने पक्षेऽसिद्ध

शेषैः सहोपलम्भनियमः, प्रत्येकं व्यभिचारदर्शनात् । न च विशेषमात्रं निर्धूतनिखिलविषयविशेषोपश्लेषं वा वित्तिमात्रमस्ति, येन सहोपलम्भनियमः संवेदितुरभिधीयेत । सामान्यं तु सदपि सौगतैर्न वस्तुतयाऽऽस्थीयते । समस्तवृत्तिप्रत्यस्तमयेऽपि स्वयंज्योतिरयमात्माऽवतिष्ठत इति च वक्ष्यामः । स्ववाग्विघातश्च—एकं द्वाविति निर्देशात् । द्वयोर्ह्येकक्रियानुप्रवेशे सहशब्दः, शिष्येण सह गच्छत्याचार्य इति यथा । अपि च नीलतद्धियोरिति द्वे उपादाय अभेद

---

इत्याह 'असिद्धश्चे'ति । अत्र विकल्पः—किं ज्ञानविशेषेण तेन तेन सहोपलम्भनियमोऽहमर्थस्य विवक्षितः, उत ज्ञानविशेषमात्रेण, आहोस्वित् ज्ञानमात्रेणेति । तत्राद्येऽसिद्धिः, चाक्षुषादिज्ञानप्रकाशमन्तरापि अहमर्थस्य ज्ञानान्तरप्रकाशे प्रकाशमानत्वादिति' 'प्रत्येकं व्यभिचारदर्शना'दित्युक्तम् । द्वितीयतृतीयकल्पयोर्दोषमाह 'न च विशेषे'ति । 'न निर्विशेषं सामान्य'मिति न्यायाच्चाक्षुषादिव्यतिरिक्तं ज्ञानविशेषमात्रं ज्ञानमात्रं वा नास्ति । तत्तद्विशेषप्रकाशव्यभिचारश्चाहमर्थप्रकाशस्योक्त एव तत्तद्विशेषप्रकाशाभावेऽप्यहमर्थप्रकाशत इति भावः । नन्वेवमपि ज्ञानत्वावच्छिन्नप्रकाशेनाव्यभिचार एव । अहमर्थप्रकाशे ज्ञानत्वावच्छिन्नप्रकाशध्रौव्यादित्यत्राह 'सामान्य'मिति । अनुवृत्तसामान्यानुपगमात्सौगतैरेवं हेतुस्तेषां दुर्वच इति भावः । विनापि ज्ञानप्रकाशेनाहमर्थप्रकाशोऽस्तीत्याह सिद्धान्तरीत्या च 'समस्ते'ति । 'स्ववा'गिति । साहित्यस्य भेदनियतत्वात्सहैवोपलम्भमानत्वहेतुव्यपदेश एव भेदव्यपदेशरूप इति तेन संविदहमर्थयोरैक्यसाधने प्रतिज्ञाहेतुवाक्ययोर्विरोध एकं द्वित्वादितिवदिति भावः । प्रतिज्ञाहेतुघटकपदयोर्विरोधमुक्त्वा प्रतिज्ञाघटकपदयोस्तमाह 'अपि चे'ति । 'सहोपलम्भनि-

इत्येकत्वविधिः सवित्रीवन्ध्यात्वविधिरिव। अनेकान्तश्च संविदि प्रतिषिध्यमानैर्जडत्वादिभिः; सर्वज्ञज्ञानेन सहोपलम्भनियमभागिभिः संसारिज्ञानैश्च। तेषामभेदाभ्युपगमे ज्ञानस्य जडत्वमूर्तत्वादि, बुद्धस्य बद्धत्वमित्यापद्येत। नियमेनैकज्ञानसिद्धत्वमप्युक्तप्रकारेण प्रत्युक्तम्। विपक्षव्यतिरेकश्चासिद्धः। भवतु नियमेनैकज्ञानसिद्धत्वं

---

यमादभेदो नीलतद्धियो'रित्येवं हि तेषां प्रतिज्ञा। द्वित्वविशिष्टेऽत्रैकत्वविधिर्जननीवन्ध्यात्वविधिरिव व्याहत इति यावत्। ज्ञानज्ञात्रोरभेदसाधनदूषणप्रसङ्गेऽस्मिन् ज्ञानज्ञेययोरभेदसाधकप्रयोगदूषणादि साधनदूषणप्रकारसाम्यादिति ध्येयम्। शब्ददोषमुक्त्वाऽर्थदोषमन्यमाह 'अनेकान्तश्चे'ति। संविदः स्वयंप्रकाशत्वाज्जडत्वादिप्रकाशकाले ज्ञानप्रकाशोपि नियतः। तथा च संविदा सहोपलम्भनियमभाजां जडत्वमूर्तत्वादीनां संविदभेदे संविदो जडत्वमूर्तत्वादिप्रसङ्गः। धर्मधर्मिभेदानुपगमात्, अभेदेप्याधाराधेयभावप्रतीत्युपगमाच्च। एवं सर्वज्ञस्य बद्धज्ञानानामुपलम्भे नियमेन बुद्धज्ञानमप्युपलभ्यते, तेषां बुद्धज्ञानसहोपलम्भानां बुद्धज्ञानाभेदे बुद्धस्य बद्धत्वापत्तिः। तत्र तत्राभेदानुपगमे चानैकान्त्यं हेतोरिति भावः। अभेदसाधकं हेत्वन्तरमपि तुल्यरीत्या निरस्यति 'नियमेनैके'ति। एकज्ञानसिद्धत्वम्—एकज्ञाने द्वयोः प्रकाशमानत्वम्। निरासप्रकारश्च—एकज्ञानविषयत्वेनाहमर्थे संविदभेदस्य साधने तुल्यनयेनाहमर्थाभेदोऽपि संविदि प्रसज्येत। चाक्षुषादिज्ञानविशेषेणैव सिद्धत्वं चाहमर्थस्यासिद्धम्। ज्ञानान्तरतोऽपि सिद्धेः, स्वापे स्वतः सिद्धेश्चेति। अप्रयोजकत्वमप्याह 'विपक्षे'ति। विपक्षव्यतिरेकः—विपक्षे बाधः। तदसिद्धिमेवोपपादयति 'भव'त्विति। साध्याभाववति हेतोर्वृत्तावापाद्यमानायां बाधकस्तर्को नास्ति। अतोऽप्रयोजको हेतुरिति भावः।

ज्ञानज्ञेयज्ञातृणाम्, मा च भूदभेदः; को विरोधः ? ।

किमप्रकाशरूपत्वात् प्रकाशमनुरुध्यते ।
व्यवहाराय नीलादिराहोस्वित्तदभेदतः ॥ १५ ॥
इति सन्दिह्यमानत्वान्नाभेदः शक्यनिर्णयः ।
बोध्यस्थश्चैष नियमो न पुनर्बुद्धिबोद्धृगः ॥ १६ ॥

---

अप्रयोजकत्वमेवोपपादयति 'कि'मित्यादिना सार्धश्लोकेन । किं नीलादिर्विषयोऽस्वयंप्रकाशत्वात्स्वव्यवहाराय प्रकाशं—स्वप्रकाशकं ज्ञानमाकाङ्क्षते, उताहो तदभेदतः—संविदभिन्नत्वात् प्रकाशमनुरुध्यते इति संदेहान्नीलतद्धियोरभेदोऽशक्यनिर्णय इत्यर्थः । संविदनुरोधित्वं नीलादेः संविदा सहैवोपलभ्यमानत्वलक्षणम् । इदं च किं संविदभेदप्रयुक्तमुत स्वप्रकाशे नीलादेर्जडस्य स्वप्रकाशसंविदपेक्षाप्रयुक्तमिति विशये यावदभेदप्रयुक्तत्वनिर्णयो न भवति, न तावदस्याभेदसाधकत्वम् । अभेदप्रयुक्तत्वनिर्णायकं च नास्ति । तथा चाप्रयोजकत्वमिति भावः । स्याद्वा सहोपलम्भनियमो बोध्ययोरेवाभेदसाधकः, न तु बुद्धिबोध्ययोर्बुद्धिबोद्ध्रोर्वेत्याह 'बोध्यस्थ' इति ।बुद्धीनां बोद्धॄणां वा सहोपलभ्यमानानां नाभेदः । बुद्धस्य बद्धत्वापातात् । नापि बुद्धिबोध्ययोर्बुद्धिबोद्ध्रोर्वा, बुद्धेर्जडत्वादिप्रसङ्गात् सत्यमिथ्यार्थयोरैक्यप्रसङ्गाच्च । किन्तु बोध्ययोरेव तथाभूतयोरभेद इष्यतां गुणगुणिप्रभृत्योः कथञ्चिदित्यर्थः । 'बुद्धिबोद्धृग' इति तु प्रकृताभिप्रायेण । यद्वा बोध्ययोरेव सहोपलम्भनियमः संभवति । न पुनर्बुद्धिबोद्ध्रोः । बुद्धिमन्तरापि बोद्धुः प्रकाशात् स्वापादावित्यर्थः ॥ १५ ॥ १६ ॥

स्पष्टश्च प्रत्यक्षबाधः, सर्वज्ञानेषु वेद्यादिव वित्तेरपि वेदितुर्भेदस्यापरोक्षत्वात्। नच प्रतियोगिनः प्रत्यक्षत्वं दृश्यत्वं वा भेदस्याऽऽपरोक्ष्ये त्वपेक्षितव्यम्, सिद्धिमात्रेण तदुपपत्तावप्रयोजकत्वेन तद्विशेषस्यानाक्षेपात्। अनवभासमानेऽपि प्रतियोगिनि भावाः स्वरूपत एव विलक्षणाः प्रत्यक्ष्यन्त इति सर्वलोकस्वसाक्षिकमेतत्।

---

ज्ञानज्ञात्रोरभेदसाधने प्रत्यक्षबाधितत्वमप्याह 'स्पष्टश्चे'ति। घटमहं जानामीति हि स्फुटो ज्ञेयज्ञातृज्ञानानां भेदप्रतिभासः। तद्बाध इत्यर्थः। शङ्कते 'न चे'ति। प्रत्यक्षज्ञानविषयत्वं, ज्ञानविषयत्वं वा प्रतियोगिनः तद्भेदप्रत्यक्षे कारणत्वेनाऽपेक्षितम्। प्रकृते संविदो ज्ञानान्तरागोचरत्वेन स्वयंप्रकाशत्वात्तद्भेदप्रत्यक्षं ज्ञातरि न संभवतीति शङ्कितुराशयः। परिहरति 'सिद्धिमात्रेणे'ति। प्रतियोगिनः संविदः सिद्धिमात्रेण—प्रकाशमात्रेण, तदुपपत्तौ—संविद्भेदप्रत्यक्षोपपत्तौ, अप्रयोजकत्वेन—प्रत्यक्षादिज्ञानान्तराधीनतत्प्रकाशस्य भेदप्रत्यक्षेऽहेतुत्वेन, तद्विशेषस्य—प्रकाशविशेषस्य प्रत्यक्षादिज्ञानान्तराधीनस्य अनाक्षेपात्—आक्षेपायोगादित्यर्थः। अयं भावः—अन्योन्याभावप्रत्यक्षेऽधिकरणस्य प्रत्यक्षमेवापेक्षितम्, प्रतियोगिनः प्रकाशमात्रं च। नतु प्रतियोगिनः प्रत्यक्षम्। स्तम्भे पिशाचभेदस्याप्रत्यक्षत्वापत्तेः। प्रतियोगिनः प्रकृते वेदनस्य प्रकाशस्तु स्वत एवास्ति। तत एव वेदितरि तद्भेदप्रत्यक्षे नानुपपत्तिरिति। वस्तुतस्तत्तदसाधारणाकार एव इतरतादात्म्यधीविरोधित्वेन तस्य तस्येतरस्माद्भेदरूपः। स च प्रतियोग्यनवभासेऽपि भासत एवेत्याह 'अनवभासमान' इति। तथा च ज्ञातुरहन्त्वेन भानमेव संविद्भेदग्रहणमिति भावः। तद्भिन्नत्वव्यवहारे पुनः प्रतियोगिपरामर्शसहकृतमसाधारणाकारज्ञानं हेतुरिति बोध्यम्। 'सर्वलोके'ति। एतेन भेदस्य प्रत्यक्षं न संभवति।

ननु जीवतो भेदप्रत्यक्षस्य शिरसि पदनिधानेन सहोपलम्भनियमस्याभेदेन प्रतिबन्धग्रहणमिति कथमिव ततस्तद्बाधसंभवः । तथासति हि ज्वालाभेदानुमानमपि तदेकत्वप्रत्यभिज्ञयाऽपोद्येत । अविशेषज्ञो देवानां प्रियः । तत्र हि क्लृप्तकारणदोषानुवृत्तौ सत्यां

---

क्षणिकस्य प्रत्यक्षस्य प्रतियोगिग्रहणपूर्वकभेदग्रहणपर्यन्तमनवस्थानात् । युगपत्प्रतियोग्यभावाधिकरणग्रहे तु समूहालम्बनवदुपश्लेषविशेषासिद्धिप्रसङ्गात् । अतो भ्रमरूप एव भेदग्रह इत्यपास्तम् । तत्तदसाधारणधर्मस्यैवेतरभेदरूपत्वात्तस्य च धर्मिणि प्रथमक्षण एव गृहीतेः । अत एवापूर्ववस्तुदर्शने विलक्षणोऽयं कश्चन पदार्थ इति भेदप्रतीतिर्लोकसम्मता स्वानुभवसिद्धा च नापह्नवार्हा इति 'सर्वलोकस्वसाक्षिक'मित्युक्तम् ।

शङ्कते 'ननु जीवत' इति । शिरसि पदनिधानेन—तिरस्करणेन । प्रतिबन्धग्रहणं—व्याप्तिग्रहणम् । ततः—भेदप्रत्यक्षतः । तद्बाधसम्भवः—अभेदानुमानबाधसंभवः । तथासति-प्रत्यक्षस्यानुमानबाधकत्वे । अपोद्येत-बाध्येत । 'अयं भावः—भिन्नत्वेन गृह्यमाणयोरेव हि सहोपलम्भनियमोऽभेदव्याप्यत्वेन गृहीतः । तेन चाभेदानुमाने प्रत्यक्षे भेदग्रहणांशो भ्रमलक्षण इति निश्चीयते । न चोपजीव्यविरोधः । प्रत्यक्षसिद्धवस्तुस्वरूपस्य व्याप्तिग्रहोपयोगिनोऽभ्युपगमात् । भेदस्य च व्याप्तिग्रहानुपयुक्तत्वादिति । परिहरति 'अविशेषज्ञ' इति । दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यं न जानासीत्यर्थः । तदेवोपपादयति 'तत्रे'ति । न प्रत्यक्षत्वमनुमानत्वं वा बाध्यत्वे बाधकत्वे वा प्रयोजकम् । किन्तु दोषमूलत्वमदोषमूलत्वं चैव तथा । तथा च यथा ज्वालाभेदानुमानमदोषमूलं बाधकम्, ज्वालैक्यप्रत्यक्षं तु सादृश्यदोषमूलं बाध्यं भवति; नैवं प्रकृते

जायमानोऽपरोक्षावभासो न निरवद्यप्रत्यक्षपूर्वकमनुमानं बाधितुमर्हति। तथाहि—अचिरनिर्वापितारोपितेष्वेकवर्तिभागवर्तिषु बहुषु दीपेषु तद्भेदादर्शिनः सुसदृशतया स एवायमिति स्मृतिरुपजायते इति दृष्टम्। अतोऽन्यत्राप्यप्रतिबन्धपुष्कलकारणक्रमोपनिपातादवयवविश्लेषाच्च सुसदृशनिरन्तरप्रवृत्तप्रदीपप्रवाहालम्बनैव तथा मतिरिति निश्चीयते। तथैकनानात्वप्रत्ययः स्वतःप्राप्तेन्द्रियवृत्तिविपर्ययप्रयुक्तः समसमयोपजायमानानेकानवद्यप्रत्यक्षप्रतिक्षिप्तविषयश्च

---

ज्ञातृज्ञेयज्ञानभेदग्रहस्य दोषमूलत्वमिति समुदिताशयः। ज्वालैक्यप्रत्यक्षे क्लृप्तकारणदोषानुवृत्तिमुपपादयति 'तथाही'त्यादिना। अचिरप्रशमितत्वपुनरुद्दीपितत्वोक्त्या ज्वालयोर्वास्तवभेदो ज्ञाप्यते। तद्दर्शनमेकवर्तिवृत्तित्वज्ञानं चैक्यभ्रमे तयोर्हेतुरित्युक्तं भवति। निर्वापणपुनरुद्दीपनद्रष्टुश्च ज्वालयोर्भेदप्रत्यक्षं वर्तत इति तेन बाधितत्वमपि निर्वापणाद्यद्रष्टृनिष्ठज्यालैक्यप्रत्यक्षे विवक्षितम्। निरुक्तं भ्रमहेतुमनिर्वापितस्थलेप्युपपादयति 'अत' इति। तैलवर्त्यवयवाग्निसंयोगस्य दीपहेतोरन्यान्यतया ज्वालाभेदोऽङ्गीकार्योऽनिर्वापणस्थलेऽपि। कारणधारानुवृत्तिबलाच्च कार्यधारानुवृत्तिः। पूर्वपूर्वज्वालायास्तु कारणनिवृत्त्या निवृत्तिरेव। तद्धेतुर्हि तैलवर्त्यवयवविशेषाग्निसंयोगः। अग्नेराश्रयाशित्वाद्वर्त्यवयवविशेषनाशे तदग्निसंयोगस्य नाशो ह्यावश्यकः। एवं पूर्वोत्तरदीपज्वालयोर्भेदे सिद्धे सजातीयदीपधारायां भेदाग्रहात्सादृश्यरूपदोषदर्शनाच्चैक्यभ्रम इति भावः। नानाभूते ऐक्यभ्रमं प्रत्यक्षरूपमुदाहृत्यैकस्मिन्नानात्वभ्रममपि प्रत्यक्षरूपमुदाहरति 'तथैके'ति। स्वाभाविकचाक्षुषरश्मिप्रसरणस्य विपर्ययो द्वैतीभावोऽङ्गुल्यवष्टम्भादिप्रयुक्तश्चन्द्रद्वित्वभ्रमे दोषः। अस्य च निर्दोषपुरुषीयचन्द्रैक्यप्रत्यक्षबाधितत्वं 'समसमये'त्यादिनोच्यते।

द्विचन्द्रादौ दृष्ट इति नासौ तत्रैकत्वानुमानमभिभवितुं प्रभवति । न चैवमिह ज्ञातृज्ञानज्ञेयविवेकसाक्षात्कारी प्रत्यय इति प्रतिरुणद्धयेवायमिहाभेदानुमानोदयप्रसक्तिम् । न चोपलब्धिसाहित्यनियमादेव तथात्वमत्रानुमेयमिति युक्तम्, विपक्षे बाधकानुपलब्धेः । संविदधीनसिद्धितयाऽपि तथा नियमोपपत्तेः । अनैन्द्रियिकत्वेन च तद्वृत्तिविपर्ययस्याकिञ्चित्करत्वात् । योग्यानुपलम्भपराकृतत्वाच्च बाधकप्रत्ययस्य । अपि च विषयसिद्धिर्हि संवित् । सा च स्वयंप्रकाशेत्यविवादः । तेनावर्जनीयस्तथा नियमः । नच भेदोऽपि

---

दृष्टान्तिताद् दार्ष्टान्तिके वैषम्यमुपपादयति 'न चैव'मिति। ज्ञातृज्ञानज्ञेयभेदनिरूपितलौकिकविषयिताशाली घटमहं जानामीति साक्षात्कारः दोषमूलः, अभेदप्रत्यक्षबाधितो वा नैव दृश्यते। तदभेदानुमानबाधकत्वं सुस्थितमिति भावः। विपरीतं कस्मान्न भवतीत्यत्राह 'न चोपलब्धी'ति। तथात्वं—ज्ञानाभिन्नत्वं ज्ञातृज्ञेययोः। पूर्वोक्तमप्रयोजकत्वं स्मारयति 'विपक्ष' इति। विपक्षे बाधकतर्कविरहाद्व्याप्त्यसिद्ध्याऽसिद्धमभेदानुमानं न ज्ञानज्ञातृज्ञेयभेदप्रत्यक्षे बाधकत्वेन शक्यशङ्कमिति भावः। ज्ञानादिभेदग्रह इन्द्रियवृत्तिप्रसूतिभेदरूपदोषमूलो भवेदित्यत्राह 'अनैन्द्रियिकत्वेने'ति। बाह्येन्द्रियाग्राह्यत्वेन ज्ञानज्ञात्रोस्तद्भेदग्रहस्य नेन्द्रियवृत्तिभेदप्रयुक्तत्वं संभवतीत्यर्थः। अत्र बाधकप्रत्ययोऽपि नास्ति चन्द्रद्वित्वभ्रम इवेत्याह 'योग्यानुपलम्भे'ति। 'न चैवमिहे'ति वाक्याभिप्रेतमनेन वाक्यद्वयेन विवृतम्। 'संविदधीने'तिवाक्योक्तं प्रपञ्चयति 'अपि चे'ति। तथानियमः—संविदा सहोपलम्भनियमः। अवर्जनीयः—अभेदस्याऽनुपगमेऽपि दुर्वारः। ननु संविदमन्तरापि विषयादिः सिध्यत्वित्यत्राह 'न च भेदोऽपी'ति। भेदः—ग्राह्यग्राहकभेदः। सिद्धिः—ज्ञानम्।

सिद्धिमन्तरेण सिध्येदित्यनुन्मत्तेन युक्तमापादयितुमित्यलमनेनानुभवपराहतमतातिव्याकुलीकरणेन।

( इति सौगताभिमतग्राह्यग्राहकविकल्पप्रत्युद्धारनिराकरणम् )

अप्रकाशात्मनश्च नीलादेः प्रकाश इत्यनुभवसिद्धत्वान्न समर्थनान्तरं प्रार्थयते। आत्मा तु प्रकाशस्वभाव एव। न च तावता ज्ञानत्वम्, स्वतन्त्रत्वात्। परतन्त्रमागन्तु यावदर्थेन्द्रियसन्निकर्षादि-

---

अपसिद्धान्तश्चैवं कथन इति भावः। यद्वा सहोपलम्भनियमस्याभेदसाधकत्वे स्वव्याघातमप्याह 'न च भेदोपी'ति। भेदप्रतिभासोऽपि संविदैव वाच्य इति निरुक्तहेतोर्भेदस्यापि संविदभेदे भेदघटितो हेतुरपि न सिध्येदिति यावत्। यद्वा भवदभिमतः संविदां भेदोपि न सिध्येदिति भावः॥

एवं प्रकटसौगताभिमतं संविदभेदसाधकं सहोपलम्भनियमं प्रदूष्य प्रच्छन्नसौगताभिमतं प्रकाशस्वभावत्वमपि दूषयति 'अप्रकाशे'ति। अप्रकाशात्मनः—अप्रकाशस्वभावस्य ज्ञानभिन्नस्य च। अनेन ज्ञेयस्य ज्ञानाभेदानुमाने प्रत्यक्षबाधो, हेतोः पक्षेऽसिद्धिश्च प्रादर्शिषाताम्। यद्यपि जडत्वान्न प्रकाशस्वभावत्वं ज्ञेयस्य, अथाऽपि स्वयंप्रकाशज्ञानसंबन्धात्कादाचित्कप्रकाशो घटते घटादेरिति भावः। ज्ञाता ज्ञानाभिन्नः प्रकाशस्वभावत्वादित्यत्र तु हेतुरुपगम्यते, न साध्यमित्याह 'न च तावते'ति। ज्ञानत्वं—विषयप्रकाशकधीत्वम्। ज्ञाधात्वर्थस्य हि कर्तृधर्मत्वं ज्ञानस्य। आत्मनस्तु धर्मित्वान्न तथात्वमिति भावः। ज्ञानस्वभावं तावदाह 'परतन्त्र'मिति। प्रकाशैकस्वभावत्वं, कादाचित्कत्वं, विषयावगाहित्वं चेति ज्ञानधर्माः। अवतिष्ठमानम्—अनुवर्तमानं धारारूपतया। 'धारावाहिकविज्ञानमेकं ज्ञानं मतं हि नः' इति पक्षे तु

कारणसन्निधानमवतिष्ठमानमर्थावच्छिन्नरूपं ज्ञानमिति प्रागेवावोचाम । आत्मा तु स्वतन्त्रो ज्ञाता अहमिति प्रत्यात्मं प्रथते । यदि पुनरीदृशोऽप्ययमनन्याधीनसिद्धितया ज्ञानमभिलप्यते, अभिलप्यतां कामम् । तथापि ज्ञानवदेवेदं ज्ञानम्, न ज्ञप्तिमात्रतया ।

(इत्यद्वैत्यभिमतग्राह्यग्राहकविकल्पप्रत्युद्धारनिराकरणम्)

अत एव हि च्छन्दोगाः—'अथ यो वेदेदं जिघ्राणीति स आत्मा' इत्याद्यामनन्ति । तथा 'कतम आत्मा' इति प्रश्नपूर्वकमिदमेव लक्षणमामनन्ति वाजसनेयिनः 'योऽयं विज्ञानमयः

---

स्वरूपत एवानुवर्तमानं यावद्विषयान्तरसंचारमिति विवेकः । आत्मस्वभावमाह 'आत्मे'ति । धर्मित्वं ज्ञातृत्वमहन्त्वेन भानं चात्मनो धर्माः । नन्वेवं ज्ञानभिन्नत्वे आत्मनो ज्ञानमिति व्यपदेशः कथं घटत इत्यत्राह 'यदी'ति । अनन्यत्-स्वम् । आत्मनि ज्ञानशब्दो ज्ञानसादृश्यात् । तच्च स्वाधीनप्रकाशत्वरूपं स्वयंप्रकाशत्वं स्वनिरूपितविषयतावत्त्वतादात्म्योभयसंबन्धेन किञ्चिद्विशिष्टत्वलक्षणमिति भावः । 'तथापी'ति । ज्ञानशब्देनाभिलप्यमानमात्मस्वरूपं ज्ञानतुल्यमेव, न तु ज्ञप्तिमात्रतया मुख्यं ज्ञानमित्यर्थः । यद्वा ज्ञानायतनमेव मन्तव्यं नतु ज्ञप्तिमात्रतयेति । मन्तव्यमिति शेषः । ततश्च ज्ञातुरात्मनो ज्ञानाभेदानुमानं पराभिमतं प्रबलप्रत्यक्षबाधितमिति भावः ।

प्रत्यक्षतर्कसिद्धमात्मनो ज्ञातृत्वमागमतोऽपि प्रतिष्ठापयति 'अत एवे'ति । 'अथे'त्यादिवाक्यं ज्ञात्रहमर्थात्मत्वपरम् । 'योऽय'मिति ऐन्द्रियिकज्ञानप्रचुरस्येन्द्रियाधिष्ठातुरात्मनो हृदयान्तःस्थत्वस्वप्रकाशत्वपरम् । इन्द्रियादिप्रवृत्त्यनुगुणसङ्कल्पप्रयत्नवत्त्वरूपाधिष्ठानलभ्यं कर्तृत्वं, ज्ञातृत्वं च स्वयंप्रकाशत्वाज्ज्ञानशब्दितस्यात्मनः प्रतिपादयद्वाक्यम् 'एष ही'त्यादि । मुमुक्षुभिर्ज्ञेयमात्मस्वरूपं ज्ञातृत्वविशिष्टमिति प्रतिपादयद्वाक्यं

प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः' इति । अत्र हि योऽयं सर्वलोकानुभवसिद्धो विविधविषयवेदनप्रचुरः प्राणेषु प्रेरकतया स्थितो हृदयायतने अन्तर्ज्योतिः अहमिति प्रत्यक्त्वेन प्रकाशते, स पुरुष इति यथोदितमेवात्मस्वरूपमुपदिश्यते । 'एष हि द्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः' इत्याथर्वणाः । तथा 'विज्ञातारमरे केन विजानीयादिति' 'न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम्' 'स उत्तमः पुरुषः × × × × नोपजनं स्मरन्निदं शरीरम्' 'एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति' 'तस्माद्वा एतस्मान्मनोमयादन्योऽन्तर आत्मा विज्ञानमयः' इत्याद्याः ।

'सत्यं ज्ञान'मित्यत्रापि ब्रह्मलक्षणनिर्देशे ज्ञानशब्दो न ज्ञान-

---

'विज्ञातार'मिति । विज्ञातृजीवात्मशरीरकं परमात्मानमित्यर्थः । मुक्तौ ज्ञानवत्त्वपरं 'न पश्य' इति । पश्यः—सर्वदर्शी मुक्तात्मा । मुक्तिदशायां ज्ञानाभावश्रुतिर्हेयदर्शनाभावपरेति 'न पश्य' इत्यादि व्यवस्थापयति । दुःखतां—कुत्रापि वस्तुनि प्रतिकूलत्वम् । भगवद्विभूतितया हि सर्वस्य स्वानुकूलत्वेन दर्शनं तदा । 'सर्वं ह पश्यः पश्यति' इत्युत्तरार्धमप्यत्रोदाहार्यम् । एतद्विवरणरूपं 'स उत्तम' इत्यादि । 'स तत्र पर्येती'त्यादि 'नोपजनं स्मरन्' इत्यन्तमत्रोदाहार्यत् । कलाषोडशकस्य निवृत्तावपि मुक्तौ स्वरूपनिरूपकधर्मभूतज्ञानानिवृत्तिपरम् 'एवमेवे'ति । ज्ञानवत्त्वेनात्मनो देहेन्द्रियमनप्राणविज्ञानवैलक्षण्यपरं च 'तस्माद्वे'तीति विवेकः ।

एवं ज्ञातृत्वमात्मनो व्यवस्थाप्य परमात्मनोऽपि तद्व्यवस्थापयति 'सत्य'मिति । तद्वद्वचनः—ज्ञानवद्वाची । तद्वचनत्वे—ज्ञानवाचित्वे ।

मात्रवचनः; अपि तु तद्वद्वचनः । तद्वचनत्वे 'लिति' इति आद्युदात्तत्वप्रसक्तेः । अन्तोदात्तश्चायं ज्ञानशब्दः । मत्वर्थीयाच्प्रत्ययान्तत्वे तथात्वं घटते; नान्यथेत्येतत् परमात्मनिरूपणे अतिनिपुणमुपपादयिष्यामः । ऐतरेयोपनिषदपि 'प्रज्ञानं ब्रह्मे'त्युक्त्वा 'स एतेन प्राज्ञेनात्मना' इति प्रकृष्टज्ञानवन्तमेवेश्वरं दर्शयति । तत् सिद्धं ज्ञातैवाऽयमात्मेति ॥

(इति देहादिविलक्षणप्रत्यगात्मस्वरूपनिरूपणप्रकरणम् )

किं पुनरस्मिन् देहादिव्यतिरेकिणि चेतने प्रत्यगात्मनि प्रमाणम् ?। अनुमानमिति नयविचक्षणोऽक्षपादः । यदाह "इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्ग"मिति ।

---

ज्ञानवाची भावल्युडन्तो ज्ञानशब्दो लित्स्वरेणाद्युदात्तो भवेत् । अयं तु अन्तोदात्तः । तदच्प्रत्ययान्तोऽयं ज्ञातृवाची स्वीकार्य इति भावः । 'ऐतरेये'ति । प्रकरणवलात् प्रज्ञानशब्दः प्रज्ञानवत्पर इति भावः । प्राज्ञेन—प्रज्ञ एव प्राज्ञः । स्वार्थेऽण् । तेन । सर्वज्ञेन परमात्मनेत्यर्थः । 'देहेन्द्रियमनःप्राणधीभ्योऽन्य'इति प्रतिज्ञातात्मस्वरूपनिरूपणमुपसंहरति 'तत्सिद्ध'मिति ॥

अथ 'अनन्यसाधन' इति प्रतिज्ञातं स्वयंप्रकाशत्वमात्मनः समर्थयितुं प्रमाणपरीक्षामुपक्रमते 'किं पुन'रित्यादिना । 'अनुमान'मिति । यद्यप्यहं जानामीति प्रत्यक्षमेव तत्र प्रमाणं सम्भवति। तस्य देहादिविषयत्वायोगात् । अथापि विलक्षणात्मविषयत्वं प्रत्यक्षस्येदं प्रमाणमत्रैवं प्रवर्तितुमर्हतीत्येवं सामग्रीनिरूपणाद्यात्मकेन तर्केणैव व्यवस्थाप्यमित्याशयः । 'यदाहे'ति । इच्छादि विलक्षणात्मनोऽनुमापकं यदाह, अतोऽनुमानमेव प्रमाणं तत्रेत्यक्षपादाशयो विज्ञायत इत्याशयः ।

किममीषामात्मनाऽविनाभावो धूमध्वजविशेषेणेव धूमविशेषस्य दृष्टः? हन्तैवं तत एव तत्प्रमितेः किमनुमानेन? । माभूद्विशेषतोदर्शनम्; सामान्यतस्तु भविष्यति। तथाहि—इच्छादयः कार्यत्वानित्यत्वगुणत्वादिभिः शब्दादय इवाऽऽश्रिततयाऽनुमीयन्ते । यश्चैषामाश्रयः स आत्मा। गुणत्वं च परिशेषात्। न सामान्यविशेषसमवायाभावाः अनित्यत्वात्। न द्रव्यं कर्म वा, व्यापकद्रव्य-

---

चोदयति 'किममीषा'मिति । धूमध्वजः—अग्निः । अयं भावः—व्याप्तिग्रहस्य सहचारदर्शनमूलकत्वेन विलक्षणात्मना सहचारदर्शने इच्छादीनां प्रत्यक्षेणैव तस्य सिद्धेः कृतमनुमानेन । सहचारादर्शने च कथं तेन व्याप्तिर्गृह्येत । अगृहीतव्याप्तिकेन चेच्छादिना कथन्तरां तदनुमानमिति । परिहरति 'माभू'दित्यादिना । सिषाधयिषितसाध्यविशेषेणेच्छादिविशेषस्य सहचारग्रहो मास्तु । आश्रयित्वगुणत्वाभ्यां सहचारदर्शनादेवात्मानुमानं प्रवर्तते । एतच्च सामान्यतो दृष्टमिति भावः । एतदेवोपपादयति 'तथाही'ति । कार्यत्वम्—उत्पत्तिमत्त्वम् । अनित्यत्वं—विनाशित्वम् । गुणत्वं—गुणत्वजातिमत्त्वम्, विशेषणतैकस्वभावत्वं वा । एतानि व्याप्यान्याश्रितत्वस्य । इच्छादय आश्रिता गुणत्वाद्रूपवदित्यनुमानमत्र विवक्षितम् । अत्र हेतुं साधयति 'गुणत्वं चे'ति । पदार्थत्वेन द्रव्याद्यन्यतमत्वे प्राप्ते द्रव्यादिभेदकानुमानतो द्रव्यत्वादिव्युदासे द्रव्यादिभेदविशिष्टं पदार्थत्वमेव परिशिष्यमाणं गुणत्वं व्यवस्थापयतीत्यर्थः । इतरभेदानुमानान्याह 'न सामान्ये'ति । अभावभेदसाधनेऽनित्यत्वमुत्पत्तिविनाशवत्त्वरूपं वाच्यम् । नातः प्रागभावे प्रध्वंसे वा व्यभिचारः । 'व्यापके'ति । विभुसमवेतत्वादित्यर्थः । नैयायिकमतेनायं हेतुः सिद्धः । न कर्म, संयोगविभागयोरन-

समवायादिति। विशेषगुणत्वं चानित्यत्वे सत्यस्मदाद्येकेन्द्रियग्राह्यत्वनियमात् रूपादिवत्। एवमाश्रयमात्रमुपस्थापयन्तोऽन्वयव्यतिरेकिणो हेतवः द्रव्यान्तरगुणत्वं च प्रत्याचक्षाणैः केवलव्यतिरेकिसाधनैरात्मगोचरतया नियम्यन्ते। तथा हि भवति–इच्छादयो न महाभूतगुणाः, स्वात्मन एव प्रत्यक्षत्वात्; अबाह्येन्द्रियग्राह्यत्वाद्वा। ये भूतगुणास्ते स्वात्मपरात्मप्रत्यक्षाः बाह्यकरणप्रत्यक्षाश्च, यथा

---

पेक्षकारणत्वाभावात्, न द्रव्यं असंयोगित्वादिति वा हेतुर्वाच्यः। गुणत्वं प्रसाध्य विशेषगुणत्वं प्रसाधयति 'विशेषे'ति। रूपत्वादौ व्यभिचारस्य वारणायाऽनित्यत्वे सतीति। संयोगादौ तद्वारणाय विशेष्यदलम्। एवमपि प्रभायां व्यभिचारः स्यात्, चक्षुर्मात्रग्राह्यत्वात्तस्याः। अतो गुणत्वे सतीति वाच्यम्। एवमपि प्रभाभित्तिसंयोगे तत्प्रसङ्गः। अत एकेन्द्रियमात्रग्राह्यजातिमत्त्वं विशेष्यं वक्तव्यम्। एवं चाऽनित्यत्वविशेषणस्य वैयर्थ्यम्। गुणत्वदलस्यापि। प्रभात्वजातौ मानाभावात्, तेजस्त्वादेश्च द्वीन्द्रियग्राह्यत्वात्। परंतु प्रभात्वजातेः प्रामाणिकत्वे वायोः स्पार्शनोपगमे वा गुणत्वदलमावश्यकमेवेति बोध्यम्। योगिनां मनसाऽपि रूपादेर्ग्रहादस्मदादीति विशेषणम् अयोग्यभिप्रायम्। सामान्यतोदृष्टानुमानस्याश्रयविशेषपर्यवसानसिद्धये परिशेषानुमानान्याह 'एव'मिति। प्रत्याचक्षाणैः–प्रतिक्षिपद्भिः। सामान्यतोदृष्टमन्वय्यनुमानमेवेतरभेदानुमानसहकृतं विशेषानुमापकमित्येकः पक्षः। सामान्यतोदृष्टेतरभेदानुमानतोऽग्रे प्रसिध्यन् विशिष्टहेतुः केवलव्यतिरेकिरूपस्तथेति चापरः। अनेन च वाक्येनाद्यः पक्षः स्फोर्यते। 'ये भूतगुणा' इति। अत्र योग्या इत्यप्यनुसन्धेयम्। व्यतिरेक्युपनयनिगमने 'न तथे'ति।

रूपादयः। न तथेच्छादय इति न तद्गुणाः। दिक्कालमनांसि पुनः न विशेषगुणवन्ति; नापि तद्गुणानां प्रत्यक्षत्वमिति न तेषामपि गुणाः। अकारणगुणपूर्वत्वात् अयावच्छरीरभावित्वादित्यादयः शरीरविशेषगुणत्वप्रतिषेधहेतवः प्राचीनाश्चात्रानुकृष्टव्याः। तेनेच्छादयो न शरीरगुणाः तद्गुणभावापवादकप्रमाणवत्त्वे सति गुणत्वात्। ये यथोक्तसाध्या न भवन्ति, ते यथोक्तसाधना अपि न भवन्ति; यथा रूपादयः। यथोक्तसाधनाः पुनरिच्छादय इति यथोक्तसाध्या एवेति। विमतिपदास्पदेभ्यः शरीरादिभ्योऽर्थान्तरगुणा इच्छादय इति वा प्रतिज्ञा। यथोक्त एव हेतुः। उदाहरणं च प्रयोक्तव्यम्। सामान्येन वाऽन्वयः प्रदर्शनीयः—यो यद्गुणभावापवादकप्रमाणवत्त्वे

---

'दिक्काले'ति। इच्छादयो न दिक्कालमनोगुणाः, विशेषगुणत्वात्, प्रत्यक्षत्वाद्वा; ये पुनर्दिगादिगुणाः सङ्ख्यादयः, न ते प्रत्यक्षाः, विशेषगुणा वा। 'अकारणे'ति। अनुकृष्टव्याः—अनुकर्षणीयाः। नानानुमानफलितं सामान्यप्रयोगमाह 'तेने'ति। पक्षान्तरमपि प्रतिपादयति 'विमतिपदे'ति। विमतिपदम्—विप्रतिपत्तेः स्थानम्—निमित्तं—नानावादः, तदास्पदेभ्यः—तद्विषयेभ्य इत्यर्थः। अत्रायं प्रयोगः—इच्छादयः तदाश्रयत्वेन विप्रतिपन्नशरीरादिव्यतिरिक्तगुणाः तद्गुणत्वबाधकप्रमाणविषयगुणत्वादिति। 'उदाहरणं चे'ति। व्यतिरेकीत्यादिः। प्रसिद्धद्रव्यभिन्नस्याद्रव्यस्य प्रसिद्धावपि तद्गुणत्वस्याऽप्रसिद्ध्या नान्वय्युदाहरणं सम्भवति। न चैवं साध्यव्यतिरेकस्याप्यनुमानात्पूर्वमप्रसिद्ध्या व्यतिरेक्युदाहरणं वा कथं घटत इति वाच्यम्। प्रसिद्धद्रव्यव्यतिरिक्तसमवेतत्वस्यैव साध्यत्वात् तद्व्यतिरेकस्य रूपादौ प्रसिद्धिसम्भवाच्चेति हृदयम्। अन्वयव्याप्तिर्वा सामान्यमुखी सम्भवतीत्याह 'सामान्यतो वे'ति।

सति गुणः, स ततोऽर्थान्तरस्य गुणः; यथा पृथिव्यादिभ्यः शब्द इति आकाशसिद्धिवदात्मसिद्धिरिति ।

( इति विलक्षणात्मन आनुमानिकत्वपक्षनिरूपणम् )

इदमपि न समीचीनमित्येके । तथाहि—अन्वयव्यतिरेकिहेतुभिर्देहादिसाधारणमाश्रयमात्रमवगमितम् । न च तावताऽऽत्मसिद्धिः । केवलव्यतिरेकी तु साधनदशामेव नासादयति, सपक्षान्वयविरहात्, असाधारणवत् । नचैवं केवलान्वयिनो विपक्षव्यति-

---

विलक्षणशब्दाश्रयसिद्ध्युपजीवनेनेदम् । तदनुमाने च गन्धाद्यन्तर्भावेण व्याप्तिग्रहणमिति भावः । एवं च केवलव्यतिरेक्यनुपगमेऽपि न क्षतिरिति ध्येयम् ।

नैयायिकाभिमतां विलक्षणात्मसिद्धिमानुमानिकीं प्रतिक्षिपन्ति श्रोत्रियाः 'इदमपी'ति । अन्वयिनाऽश्रयमात्रस्य सिद्धावपि केवलव्यतिरेकिणाऽऽश्रयविशेषः सेत्स्यतीत्यत्राह 'केवले'ति । साधनदशाम्—अनुमापकत्वावस्थाम्, नासादयति न प्राप्नोति, सपक्षान्वयविरहात्-साध्येन सहचारदर्शनस्थलसम्बन्धाभावादित्यर्थः । 'असाधारणव'दिति । पक्षमात्रवृत्तिहेतोरसाधारणस्य साध्यसहचारग्रहविरहादगृहीतव्याप्तिकस्य यथा न गमकत्वम्, एवं केवलव्यतिरेकिणोऽपि व्याप्तिग्रहायोगात् न गमकत्वमिति भावः । ननु सति सपक्षे हेतोरवृत्तेरसाधारणस्य सदोषत्वम् । केवलव्यतिरेकिणि तु सपक्षस्यैव विरहान्न दोष इति चेत्; मैवम्; केवलव्यतिरेकिणि साध्यस्य प्रसिद्धिरस्ति न वाऽनुमानात्पूर्वम् । अस्ति चेद्यत्र प्रसिद्धिः तत्र हेतोः सत्त्वेऽन्वयित्वम्, असत्त्वे तु असाधारणत्वमेव । नास्ति चेत् साध्यव्यतिरेकस्याप्यप्रसिद्धेः केवलव्यतिरेकित्वमपि दुर्घटमिति दिक् । विस्तरस्तु न्यायपरि-

रेकदर्शनविकलतया साधारणवदसाधनत्वम् । देशकालादिशङ्कितोपाधिविगमेप्यन्वयदर्शनेन साध्यान्वितस्वभावतया परिनिश्चितत्वात् । नच साधनाभावे साध्याभावदर्शनमात्रेण साध्यान्वितस्वभावत्वं शक्यं निश्चेतुम् । अभावस्याऽनन्तदेशव्यापितयाऽनवयवेन ग्रहणस्यैव दुष्करत्वात्, कलयाप्यन्यत्रवृत्तौ संबन्धे नियमासंभवात् । सन्देहग्रस्तत्वाच्च—किं साधनाभावप्रयुक्तः साध्याभावः,

---

शुद्ध्यादावनुसन्धेयः । शङ्कते 'न चैव'मिति । विपक्षव्यतिरेकः—विपक्षासत्त्वम् । साधारणवत्—पक्षत्रयवृत्तिहेतुवत् । साधारणे यथा विपक्षे सत्त्वाद्धेतोरसाधकत्वम्, केवलान्वयिन्यपि विपक्षस्यैवाप्रसिद्धेः तत्सत्त्वाभावस्याप्यप्रसिद्धेस्तथाऽगमकत्वं स्यादित्यर्थः । अन्वयव्यतिरेकिणि उभयविधसहचारदर्शनाद्व्याप्तिग्रहस्य दृष्टेः साध्यहेत्वोः सहचारादर्शनात्केवलव्यतिरेकिणोऽसाधकत्वं चेदभिमतम्, तर्हि साध्याभावसाधनाभावयोः सहचारादर्शनात्केवलान्वयिनोऽप्यसाधकत्वं स्यादिति चाकूतम् । परिहरति 'देशकालादी'ति । कस्मिंश्चिद्देशे काले वा हेतुः साध्यमन्तरापि प्रयोजकान्तरात् स्यादिति देशकालविशेषान्तर्भावेण शङ्कितोपाधेरनुकूलतर्केण निवर्तने सति साध्यहेत्वोः सहचारदर्शनमात्रतोऽपि अन्वयव्याप्तिर्निश्चीयत इत्यर्थः । अपिर्भिन्नक्रमः । अन्वयदर्शनेनेत्यनन्तरंयोज्यः । साध्यान्वितस्वभावतया—साध्यव्याप्यतया । व्यतिरेकव्याप्तिग्रह एव व्यतिरेकसहचारग्रहस्यापेक्षया केवलान्वयिनि अन्वयव्याप्तिग्रहस्य व्यतिरेकाप्रसिद्धावपि नानुपपत्तिरिति च भावः । विपक्षसत्त्वस्यैवाऽप्रसिद्ध्यैव रूपपञ्चकसम्पत्तिः केवलान्वयिन इति चाशयः सिद्धान्तिनाम् । नन्वेवं साध्यसाधनव्यतिरेकयोः सहचारदर्शनत एव व्यतिरेकव्याप्तिग्रह उपपद्यत इति शङ्कते 'न च साधनाभाव' इति । साध्यान्वित-

किं वा निमित्तान्तरप्रयुक्त इति। पृथिव्यादिभ्योऽर्थान्तरगुणत्वप्रतिज्ञाऽपि द्रव्यान्तराप्रसिद्धेरप्रसिद्धविशेषणा।

( इति नैयायिकाभिमतात्मानुमाननिरासः )

---

स्वभावत्वम्—साधनस्य साध्यनिरूपितव्यतिरेकव्याप्तिमत्त्वं साध्याभावव्यापकाभावप्रतियोगित्वलक्षणम्। व्याप्तिनिश्चयायोगे हेतुमाह 'अभावस्ये'ति। व्यतिरेकिणोः साध्यसाधनयोरधिकरणापेक्षया तदभावाधिकरणानामानन्त्यात् कलयांऽशेन क्वचिदपि साध्याभाववति हेतोर्वृत्तौ व्यतिरेकसाहचर्यनियमलक्षणव्यतिरेकव्याप्तेरसम्भवादित्यर्थः। व्यतिरेकिसाध्यसाधनवतः परिमितत्वेन कचित्कात्स्न्र्येन ग्रहणमपि सम्भवेदिति च हार्दम्। ननु यावत्सु प्रत्यक्षेष्वधिकरणेषु व्यतिरेकयोः सहचारदर्शनत एव व्याप्तिर्निश्चीयेतेत्यत्राह 'सन्देहे'ति। व्यतिरेकव्याप्तिर्हि साध्याभावे हेत्वभावव्याप्तिगर्भिता। साध्याभावोऽस्तु, हेत्वभावो मास्त्विति शङ्कायां च न साधनाभावव्याप्यत्वं साध्याभावे गृह्येतानुकूलतर्कविरहे। साध्यस्य साधननिमित्तत्वसाधननियतस्वभावत्वाद्यन्यथानुपपत्तिलक्षणतर्कबलाच्छङ्कानिवारणं च साध्यसाधनयोः सहचारदर्शनमूलहेतुहेतुमद्भावाद्यवधारणमन्तरा न घटत इति केवलव्यतिरेक्यसिद्धिरिति च हार्दम्। विशिष्टहेतुना पृथिव्यादिव्यतिरिक्तगुणत्वानुमाने च साध्याप्रसिद्धिमाह 'पृथिव्यादिभ्य' इति। अर्थान्तरस्य गुणादेः प्रसिद्धावपि तद्वृत्तिगुणत्वलक्षणं साध्यमप्रसिद्धमेव। न च पृथिव्याद्यर्थान्तरसमवेतत्वमेव साध्यते। तच्च रूपत्वादौ प्रसिद्धमेवेति वाच्यम्। निरुक्तसमवेतत्वस्य गुणक्रियाभिन्न एव प्रसिद्धेर्गुणे ज्ञानादौ तत्साधनायोगः। अर्थान्तरद्रव्यसमवेतत्वं चानुमानात्प्रागप्रसिद्धमेवेति हार्दम्।

एतेन साङ्ख्योदीरितसाधनभेदा अप्यपोदिता वेदितव्याः सङ्घातपरार्थत्वादयः। तथा च तानेव तावदादितो व्याकुर्महे—

"सङ्घातपरार्थत्वात्त्रिगुणादिविपर्ययादधिष्ठानात्।
पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्च ॥"

अयमर्थः–देहेन्द्रियादयः परार्थाः सङ्घातत्वाच्छयनासनशरणादिवत्। प्रत्यक्षं च शरीरस्य सङ्घातत्वं, भूतानां च। अव्यक्तमहदहङ्कारेन्द्रियाणां च सुखदुःखमोहात्मतया तथात्वमनुमेयं तद्वदेव। न चेन्द्रियाणामाहङ्कारिकत्वस्याऽभ्युपेतस्य, साध्यत्वाभिमतपारा-

---

नैयायिकोक्तात्मानुमानदूषणानि साङ्ख्योक्तात्मानुमानेष्वप्यतिदिशति 'एतेने'ति। 'तथा चे'ति। विलक्षणात्मसाधकत्वेन साङ्ख्याभिमतानेव हेतून् प्रथमं विवृणुमहे शिष्यवैशद्याय क्षेपसौकर्याय चेति भावः।

'सङ्घातपरार्थत्वा'दित्यादिः साङ्ख्यकारिका। एनां व्याख्याति 'अयमर्थ' इत्यादिना। शरणं गृहम्। सङ्घातत्वम्–अवयवसमुदायात्मकत्वम्। भूतानां–पञ्चानां महाभूतानाम्। 'अव्यक्ते'ति। सुखदुःखमोहात्मत्वं सुखादिस्वरूपत्वम्, सुखादिजनकत्वरूपं वा। तेन तथात्वं–सत्त्वरजस्तमोरूपगुणत्रयसङ्घातात्मकत्वम् अनुमेयं कार्यरूपेण शरीरादिवदेवेत्यर्थः। सङ्घातत्वहेतोर्विरुद्धत्वं शङ्कते 'न चेन्द्रियाणा'मिति। उभयविशेषविरुद्धत्वम्–पक्षसाध्ययोरभिमतविशेषविरुद्धाकारापादकत्वम्। अनाहङ्कारिकत्वेन सङ्घातत्वस्य भूतभौतिकेषु, संहतपरार्थत्वेन च गेहशय्यादिषु भूयःसहचारदृष्टेर्व्याप्तेर्गृहीततया पक्षान्तर्गतेन्द्रियाणामभिमताहङ्कारिकत्वविरुद्धस्यानाहङ्कारिकत्वस्य, साध्यघटकस्य च परस्याऽभिमतासंहतत्वविरुद्धस्य संहतत्वस्याऽऽपादकत्वाद्विरुद्धत्वं सङ्घातत्वहेतोरिति भावः। हेतोरुभयविशेषविरुद्धत्वं च नेत्य-

र्थ्यधर्मस्य चासंहतपरार्थत्वस्यान्यथात्वापादनादुभयविशेषविरुद्धत्वं हेतोः; अहङ्कारान्वयव्यतिरेकानुविधानेन "देवा वैकारिकाः स्मृताः" इत्याद्यागमबलेन प्रकाशलाघवगुणान्वयेन च वैकारिकाभिधानसात्त्विकाहङ्कारभेदयोनित्वस्येन्द्रियाणां प्रमाणसिद्धस्यापवादानुपपत्तेः । आत्मनस्तु सङ्घातत्वे तस्यापि सङ्घातान्तरार्थतयाऽनवस्थापत्त्या निष्प्रमाणकानेककल्पनाप्रसङ्गात्, अप्रयोजकत्वाच्च सङ्घातत्वस्य शेषित्वे, दृष्टान्तदृष्टाशेषधर्मोपस्थापनेऽनुमानप्रामाण्य-

---

न्वयः । अविरुद्धत्वमुपपादयति 'अहङ्कारे'त्यादिना । अहङ्कारवृत्तौ सत्यामेवेन्द्रियाणां मनःपर्यन्तानां वृत्तेर्दर्शनात्तदभावे च स्वापेऽदर्शनादाहङ्कारिकत्वं तेषामवसीयते । तत्रापि सत्त्वकार्यलाघवप्रकाशयोगात्सात्त्विकाहङ्कारकार्यत्वमिति भावः । आगमश्च "देवा वैकारिका दश, एकादशं मनश्चे"ति स्मृतिरूपः । देवाः—इन्द्रियाणि प्रकाशयोगाद्देवाधिष्ठितत्वाद्वा । वैकारिकस्य सात्त्विकाहङ्कारस्येमे कार्यभूता इति वैकारिकाः । अपवादानुपपत्तेः—बाधनानुपपत्तेः । सङ्घातत्वस्याऽनाहङ्कारिकत्वेन न व्याप्तिः । त्रैगुण्यात्मकस्येन्द्रियजातस्याऽऽहङ्कारिकत्वेन प्रमाणप्रतिपन्नत्वेनानैकान्त्यादिति भावः । पक्षविशेषविरुद्धत्वं परिहृत्य साध्यविशेषविरुद्धत्वं परिहरति 'आत्मनस्त्वि'ति । 'अप्रयोजकत्वाच्चे'ति । असंहतस्याप्यात्मनश्चेतनत्वादेव भोक्तृत्वस्योपपत्तेः भोक्तृत्वलक्षणे परत्वे प्राधान्ये सङ्घातत्वस्याप्रयोजकत्वमिति भावः । यदि सङ्घातत्वस्य परत्वे प्रयोजकत्वं स्यात्तर्हि संहतपरार्थत्वेन व्याप्तिः सम्भवेन्नाम सङ्घातत्वस्य । व्याप्तिबलादनेकसङ्घातकल्पनाऽपि सोढव्या भवेत् । न चैवम् । तथा च संहतपरार्थत्वे सङ्घातत्वस्य व्याप्यत्वासिद्धत्वमिति हार्दम् । सङ्घातपरत्वेनानुमितस्यात्मनः सङ्घातत्वं योग्यानुपलब्धि-

स्यैवासम्भवापत्तेः तदसङ्घातत्वस्य चाऽप्रचाल्यत्वात् । नच प्रमाणान्तरवलेनानाहङ्कारिकत्वसङ्घातान्तरार्थत्वयोर्वाधेऽवाधितेन सङ्घातपरार्थत्वेनापि न भवितव्यम् । एवं च संहतत्वव्यापकावरुद्ध-त्रैगुण्यादिरहितोऽसंहत आत्मा सिद्धः ।

तथा देहादयः सुखदुःखमोहात्मकतया परेणाधिष्ठीयन्ते, यन्त्रादिभिरिव रथादयः । अपि चानुकूलप्रतिकूलवेदनीये सुखदुःखे भृत्यभ्रातृव्यवदनुकूलनीयप्रतिकूलनीयवती । दृश्यत्वाद्देहादयो

---

वाधितश्चेति वोध्यम् । सङ्घातत्वस्य परार्थत्वेन व्याप्तिस्तु प्रमाणान्तरविरोधाभावात्प्रसेत्स्यतीत्याह 'न च प्रमाणान्तरे'ति । सङ्घातपरार्थत्वानुमानेनात्मसिद्धिं निगमयति 'एवं चे'ति । सङ्घातत्वव्यापकपरार्थत्ववत्सत्त्वादिगुणत्रयतत्कार्यरहित इति 'संहतत्वे'त्यादेरर्थः । परस्य संहतत्वेऽनवस्थाप्रसक्तेः त्रैगुण्यविपर्ययः अत्रैगुण्यात्मकत्वरूपो मन्तव्य इत्युक्तम् 'असंहत' इति । त्रिगुणादिविपर्ययादित्यन्तः कारिकांशो विवृतः ।

अथाऽधिष्ठानादित्यंशं विवृणोति 'तथा देहादय'इति । सुखदुःखमोहात्मकतया—सुखाद्यात्मकसत्त्वादिसङ्घातरूपतया । परेण-स्वभिन्नेन चेतनेन । अधिष्ठीयन्ते—कार्यानुगुणतया प्रेर्यन्ते । यन्त्रादिभिः सारथिप्रभृतिभिः । भोक्तृभावादित्येतद्विवृणोति 'अपि चानुकूले'ति । अनुकूलनीयः—अनुकूलवुद्धिभाक् । अनुकूलवेदनीयः—अनुकूलत्वप्रकारकबुद्धिविषयः । एवं प्रतिकूलनीयप्रतिकूलवेदनीयावूह्यौ । भ्रातृव्यः—शत्रुः । भोक्तृभावादित्यस्य द्रष्टृत्वपरतया योजनान्तरं 'दृश्यत्वा'दिति । 'अधिष्ठातु'रित्यादि । सङ्घातप्रवृत्तेरधिष्ठात्रन्तराधीनतयाऽधिष्ठातुः सङ्घातत्वे तत्प्रवृत्तेरप्यधिष्ठात्रन्तराधीनत्वं स्यात्, एवमग्रेऽपीत्यनवस्थाप्रसङ्गादधिष्ठातुरसङ्घातत्वमेष्टव्यम् । एवं सुखेनाऽनुकूलनीयस्य दुःखेन प्रतिकू-

घटादय इव विलक्षणद्रष्टृका इति । अधिष्ठातुरनुकूलप्रतिकूलवेदकस्य द्रष्टुः त्रैगुण्यादिविपर्ययः पूर्ववदेव निर्णेतव्यः । तथा देहादेरव्यक्तान्तस्य कृत्स्नस्य त्रिगुणात्मकतयाऽत्यन्तदुःखोपशमनलक्षणमोक्षदशानुपपत्तेः तदर्थं च शास्त्राणां महाधियां च प्रवृत्तेरस्ति देहादिव्यतिरिक्तोऽसंहतः त्रैगुण्याद्यसंस्पृष्टः पुरुष इति ॥

( इति साङ्ख्याभिमतात्मानुमाननिरूपणम् )

अत्रापि सङ्घातपारार्थ्यादिभिर्यद्यपि परः कोऽप्यधिष्ठाता द्रष्टा सिद्धः, तथापि न तस्यासंहतत्वात्रिगुणत्वादिरभिमतविशेषः शक्यनिश्चयः । तथाहि—सङ्घातस्य सङ्घातान्तरार्थत्वनियमदर्शनबलादापतन्ती परापरा सङ्घातकल्पना न दोषाय, कार्यतयेवानादि-

---

लनीयस्य वा भोक्तुः त्रिगुणत्वे तस्यापि अनुकूलप्रतिकूलवेदनीयत्वस्य प्राप्तेरनुकूलनीयप्रतिकूलनीयान्तरापादकत्वादनवस्थाप्रसङ्ग इत्यत्रिगुणत्वमेष्टव्यम् । देहादिपक्षकविलक्षणद्रष्टृनुमानेन चात्मनो देहादिवैलक्षण्यमपि सिद्धमिति भावः । 'कैवल्यार्थं प्रवृत्तेश्चे'त्यंशं विवृणोति 'तथा देहादे'रिति । अत्रायं प्रयोगः—कैवल्यसाधनप्रवृत्तिः कैवल्यदशाप्राप्तियोग्यात्मतत्त्वज्ञानपूर्विका, कैवल्यसाधनप्रवृत्तित्वात्, या या फलविशेषसाधनप्रेक्षावत्प्रवृत्तिः सा सा तत्तत्फलप्राप्तियोग्यात्मतत्त्वज्ञानपूर्विका, यथा स्वर्गसाधनप्रवृत्तिरिति । देहादेः प्रधानपर्यन्तस्य परिणामस्वभावस्य त्रिगुणस्य कैवल्यानुपपत्तिज्ञानाच्च विलक्षणात्मसिद्धिरिति भावः ॥

विलक्षणात्मसाधकतया साङ्ख्यैरुपक्षिप्तं सङ्घातपरार्थत्वानुमानं तावद्दूषयति 'अत्रापी'त्यादिना । 'परापरे'ति । अन्याऽन्येत्यर्थः । पूर्वापरीभूतेति वा । परापरसङ्घातेति वा समस्तपाठः स्यात् । 'कार्यतयेवे'ति । कार्यात्कारणमनुमेयम् । कारणस्यापि कादाचि-

कारणपरम्परापरिकल्पना। न चाप्रयोजकत्वमपि; असङ्घातस्यासङ्गस्याशेषविक्रियाशून्यस्यानाधेयातिशयकूटस्थचितिमात्रवपुषः पुरुषस्य सङ्घातं प्रति परत्वानुपपत्तेः। तद्धि तस्य शेषि भवति, तच्च तदर्थम्; यद्येनोपक्रियते क्रियते वा, यच्चोपकरोति करोति वा। न च तथा साङ्ख्यपुरुष इति कथं तस्य सङ्घातं प्रति परत्वम्? कथन्तरां च सङ्घातस्य तादर्थ्यम्?। अनुपकार्योऽप्युपकार्यतयाऽऽत्मानं मन्यत इति चेत्; कामं मन्यताम्; किमायातमुपकार्य-

---

त्कत्वेन कार्यत्वात्तत्कारणमप्यन्यत्, एवमुपर्युपरीति कारणपरम्पराकल्पना यथा प्रामाणिकी न दोषाय, एवमविनाभावबलादापतन्ती सङ्घातपरम्पराकल्पनाऽपीति भावः। ननु सङ्घातत्वस्य भोक्तृत्वलक्षणे परत्वेऽहेतुत्वान्न सङ्घातपरार्थत्वेन सङ्घातत्वस्य व्याप्तिग्रह इत्यत्राऽऽह 'न चे'ति। सङ्घातपरत्वं तदधीनातिशयभाजि सम्भवेत्। तदधीनातिशयश्चासंहते निर्लेपे निर्विकारेऽत एवातिशयाधानानर्हे साङ्ख्याभिमते पुरुषे न सम्भवतीति संहतस्यैव कस्यचित्सङ्घातशेषिणोऽनुमानेन सिद्धिर्नासंहतस्य साङ्ख्यमतपुरुषस्येति भावः। भोगरूपोऽप्यतिशयो न साङ्ख्यपुरुषस्य सम्भवेदिति हार्दम्। एतेन 'पुरुषोऽस्ति भोक्तृभावा'दित्यपि परास्तम्। दृश्यते च खट्वादेः शरीरार्थत्वम्, शरीरस्य च शरीरान्तरार्थत्वम्। अतस्तदधीनातिशयभाक्त्वरूपे तत्परत्वे सङ्घातत्वस्य प्रयोजकत्वेन तदवच्छिन्नपरार्थत्वेन व्याप्तिग्रहः सम्भवत्येवेति चाभिमतम्। 'तद्धी'ति। यद्येनोपक्रियते क्रियते वा तत्तस्य शेषि प्रधानमङ्गि भवति, यत्तूपकरोति करोति वा तत्तदर्थं तच्छेषः तदङ्गमित्यन्वयार्थः। उपक्रियते—अतिशयवान् क्रियते, स्रक्चन्दनादिनेव देहादिः, प्रयाजादिनेव च यागादिः। क्रियते—निष्पाद्यते, दण्डादिनेव घटादिः;

त्वस्य ?। न खलु बालास्तलमलिनतादिमत्तया गगनमभिमन्यन्त इति तस्य तथात्वं भवति।

अपि च तथाविधभ्रमोऽपि कस्य कथमुदयत इति विवेचनीयम्। न तावच्चितिशक्तेः; सर्वविक्रियाशून्यतयाऽतिविशुद्धायामशुभशत–निदानभूतभ्रमपरिणामासम्भवात्। अन्तःकरणं तु बुद्ध्यपरपरिभाषाभिधानमचेतनतया तनुरिव न भ्राम्यति। अचिदपि स्वच्छतया चितिच्छायापन्नं चेतनायत इति चेत्; न; नीरूपायाः चितेर्बुद्धेश्च छायातद्ग्रहणानुपपत्तेः। छायेव छायेति चेत्; कः खलु

---

पुरोडाशादिनेव च यागादिः। तत्र उपक्रियमाणं क्रियमाणं वा अङ्गि, उपकारकं कारकं वा अङ्गमिति विवेकः। 'न च तथे'ति। तथा–अतिशयाधानार्हः। साङ्ख्यपुरुषः–कापिलाभिमत आत्मा।

नन्वनुपकार्यत्वेऽप्यात्मन एतैरुपकृतोऽहमित्युपकृतत्वभ्रमलक्षण एवोपकारो देहादिभिः साध्य इति तत्परत्वमुपपद्यत इति चेत्तत्राह 'अपि चे'ति। चितिशक्तेः–चैतन्यस्वरूपस्य पुरुषस्य। शक्तिशक्तिमतोरभेदाभिप्रायेणैवमुक्तिः। बुद्ध्यपरपरिभाषाभिधानम्–बुद्धिरित्यपरं स्वीयतन्त्रसङ्केतितं यस्य नाम तदित्यर्थः। 'न भ्राम्यती'ति। अन्तःकरणं न भ्रमाश्रयोऽचेतनत्वाद्घटादिवदिति यावत्। 'अचिदपी'ति। अचेतनमपि चैतन्यप्रतिबिम्बाश्रयतया चेतनवद्भातीत्यर्थः। चिच्चेतनशब्दौ स्वयम्प्रकाशाभिप्रायावत्र। 'नीरूपाया' इति। छायायाः कान्तिलक्षणाया उज्ज्वलरूपवद्धर्मभूताया नीरूपे चैतन्येऽसम्भवान्नीरूपे चान्तःकरणे तत्प्रतिफलनलक्षणसङ्क्रान्तेरयोगादित्यर्थः। रूपवत्येव हि स्फटिकादौ जपाकुसुमलोहितादिप्रतिफलनं दृष्टमिति भावः। शङ्कते 'छायेवे'ति। न छायाशब्देन मुख्या कान्तिर्विवक्षिता। अपि तु सादृश्यम्। चित्सादृश्या-

इवार्थः ? चितिसरूपत्वमिति चेत्; हन्तैवमशेषविकाररहितचिति-सरूपतापत्तावन्तःकरणमपि प्रत्यस्तमितसमस्तवृत्तिकमापद्यत इति दुरुपपादतरोऽयं भ्रमसुखदुःखादिविकारयोगः प्रत्यात्मसिद्धः। चेतनत्वेन सरूपत्वमिति चेत्; न; चितिरेव हि ते पुरुषः, न चेतयिता। यथाऽऽह तत्रभवान् पतञ्जलिः "यदा चितिरेव पुरुषः किमत्र केन व्यपदिश्यत" इति। अजडायमानत्व-मिवार्थ इति चेत्; अजडत्वमपि न ज्ञातृत्वातिरिक्त किञ्चिदित्युक्त-

---

पत्तिश्चेतनायमानत्वमिति चेदित्यर्थः। प्रतिवक्ति 'कः खे'ल्विति। सादृश्यं केनाकारेणेत्यर्थः। अत्राऽऽह 'चितिसरूपत्व'मिति। वृत्ति-परिणामसामान्याभाववत्त्वेन सादृश्यमित्यर्थः। दूषयति 'हन्तैव'मिति। भ्रमादयो हि वृत्तयोऽन्तःकरणस्य निर्वृत्तिकत्वे नोपपद्यन्त इत्यर्थः। भ्रमोपपादनार्थं हि परिष्क्रियते चेतनायमानत्वम्, तच्चेन्निर्वृत्तिकत्व-रूपम्, नैव प्रसङ्गो भ्रमाद्युदयस्य, तथा च यदर्थमयमारम्भः तत्कार्य-मवसादितमिति भावः। प्रकारान्तरं शङ्कते 'चेतनत्वेने'ति। ज्ञातृत्वेने-त्यर्थः। प्रकारान्तरम् 'अजडायमानत्व'मिति। परिहरति 'अजडत्व'-मिति। ज्ञातुरहमर्थस्यात्मन एवेतरानपेक्षप्रकाशत्वलक्षणमजडत्वं सम्भ-वतीति ज्ञात्रात्मसमर्थनावसरे प्रोक्तम्। तथा चैवंविधाजडत्वस्य ज्ञातृ-त्वसमानाश्रयत्वाज्ज्ञातृत्वेनैव ज्ञातृत्वसमर्थनं कृतं भवेदिति भावः। 'तेनैवे'ति। ज्ञातृत्वैकाश्रयेणाऽजडत्वेनैवेत्यर्थः। एतत्–अजडाय-मानत्वम्, न किञ्चित्–नार्थसाधकम्, विवक्षितभ्रमवत्तोपपादकं न भवति। असिद्धमसिद्धेन साध्यत इति यावत्। यद्वा न किञ्चि-देतत्–अनतिप्रसक्तं प्रकृतार्थोपपादकं दुर्निरूपमिति भावः। अन्तः-

मेव। तेनैव तद्विवरणमिति च न किञ्चिदेतत्। अपि च चितिसन्निधानाधीनां बुद्धिसिद्धिमभिदधानः कथमिव तदजडिमानं प्रतिजानीयात्? नच चितिस्वान्तयोर्बिम्बप्रतिबिम्बाधाराभिमतयोरन्यतरस्मिन्नप्यविद्यमानस्य विषयविशेषोपरक्तज्ञातृत्वलक्षणधर्मभेदस्य प्रतिबिम्बे सम्भवः। प्रत्युक्तश्चायं प्रतिबिम्बवादः प्रच्छन्नबाह्यमतप्रत्यादेशे।

यदुच्यते—निर्विकारायापि पुंसे तत्सन्निधिमहिमसमुत्थापितप्रमाणविपर्ययादिविचित्रवृत्तिभेदं स्वान्तमेव स्ववृत्तिं विषयविशेषांश्चोपदर्शयति, सामन्तचक्रमिव पराक्रमीयः प्रतिबलविलोलनादि-

---

करणस्याजडत्वोपगमे साङ्ख्यस्यापसिद्धान्तं चाह 'अपि चे'ति। नन्वन्तःकरणस्य चितिसारूप्यासम्भवेऽपि तस्मिन् चितिप्रतिबिम्ब एव ज्ञातृत्वादिमानस्तु इत्यत्राह 'न च चिती'ति। बिम्बत्वेनाऽभिमता चित्, प्रतिबिम्बाधारत्वेनाभिमतमन्तःकरणम्। द्वन्द्वस्याऽभिमतशब्देन कर्मधारयः। बिम्बगतस्य वक्रतादेः प्रतिबिम्बाधारगतस्य वा मालिन्यादेः प्रतिबिम्बे आरोपसम्भवः। न च ज्ञातृत्वं भ्रमो वा प्रकृतेऽन्यतरस्मिन्नप्यस्ति, यस्य चित्प्रतिबिम्बे आरोपः स्यादिति भावः। 'प्रत्युक्तश्चे'ति। न्यायतत्त्वशास्त्रादाविति शेषः।

नन्वन्तःकरण एव विषयाकारपरिणामलक्षणज्ञानवृत्तेरुपगमादन्यतरस्मिन्नप्यवृत्तित्वमसिद्धम्। ततश्च चितिबुद्ध्योर्विवेकाग्रहाच्चिति ज्ञातृत्वप्रतिभासो युज्यत एवेति शङ्कते 'यदुच्यत' इत्यादिना। निर्विकाराया अपि चितिशक्तेः सन्निधानबलादेवान्तःकरणस्य प्रत्यक्षादिप्रमाणज्ञानभ्रान्त्यादिलक्षणा वृत्तिभेदाः समुदयन्ते। प्राधान्यात् चितेः तासां साक्षित्वं भोक्तृत्वं च, यथा निश्चेष्टस्यापि सार्वभौमस्य प्राधा-

वृत्तीः स्वामिने, ततः साक्षी भोक्ता चापदिश्यते, राजेति विक्रमी विजयी चेतिः; तदनुपपन्नम्। द्रष्टृे हि दर्शनीयं दृश्यते। नच दृशिमात्रात्मवादिनां सांख्यानां तदुपजीविनां च प्रच्छन्नानां द्रष्टृत्वं वास्तवमस्ति। नच काल्पनिकेन शेषित्वसम्भवः। कल्पनाऽपि न सम्भवतीत्युक्तमेव। राजा तु सामान्यतो विशेषतो वा तेषु कर्मस्वमात्यान् नियुञ्जानः तत्फलमैश्वर्यादि चाश्नुवानः स्वस्वामिभावहेतुक्रयप्रतिग्रहजननादिव्यापारयोगी न निष्क्रियस्यानाधेयातिशयस्य पुंसो निदर्शनमिति यत्किञ्चिदेतत्।

( इति कापिलाभिमतात्मानुमाननिरसनम् )

---

न्यात् प्रबलसामन्तचक्रकर्तृकयुद्धपराक्रमविजयभाक्त्वं तद्वदिति शङ्कितुराशयः। पराक्रमीयः—अतिशयेन पराक्रमवत्। परिहरति 'तदनुपपन्न'-मिति। साक्षित्वं हि न चैतन्यमात्रत्वम्, किन्तु साक्षाद्द्रष्टृत्वम्। न तच्चितेः, द्रष्टृत्वं कल्पितमिति चेत् निर्विकारे निर्धर्मके कूटस्थे चैतन्ये द्रष्टृत्वभ्रमोऽपि न सम्भवतीत्युक्तमेव। दृष्टान्ते तु न निर्व्यापारत्वं सार्वभौमस्य निर्धर्मकत्वं वा। स्वस्वामिभावे हेतवश्च क्रयप्रतिग्रहोत्पादनभरणादयः प्रसिद्धाः। राज्ञश्च भरणादिहेतुकं स्वामित्वमुपपन्नम्। न तु साङ्ख्याभिमतस्य पुरुषस्येति समुदिताशयः। ननु साङ्ख्याभिमतस्यात्मनोऽनुमानासम्भवेऽपि नैयायिकादिभिराधेयातिशयत्वेन भोक्तृत्वेन चाभिमतस्यात्मनः सङ्घातपरार्थत्वानुमानेन साधनं स्यादिति चेत्, न। सङ्घातस्य संहतपरार्थत्वेन व्याप्तेरसंहतस्य परस्य सिद्धेरयोगात्। नच भोक्त्रर्थत्वेनैव सङ्घातत्वस्य व्याप्तिरस्तु। तथा चासंहतात्मसिद्धिरप्रत्यूहेति वाच्यम्। शरीरस्यापि शरीरान्तररूपभोक्त्रर्थत्वसाधनपर्यवसानाद्विवक्षितासिद्धेः। शरीरादिव्यतिरिक्तस्य भोक्तुरनुमानात्पूर्वमसिद्ध्या च विलक्षणभोक्त्रर्थत्वेन व्याप्तेरग्रहाद्विलक्षणात्मसाधनायोग इति दिक्।

स्थूलोऽहं, गच्छाम्यहमित्यादिप्रत्यक्षमृदितविषयतया प्रसिद्धेवातीतकालता व्यतिरेकानुमानभेदानामित्यानुमानिकीमप्यात्मसिद्धिमश्रद्दधानाः श्रौतीमेव तां श्रोत्रियाः सङ्गिरन्ते ।

श्रुतयो हि साक्षादेवात्मनः शरीरादिव्यतिरेकमादर्शयन्ति—

'स एष नेति नेति' 'अकायमव्रणमस्नाविरं शुद्धमपापविद्धम्' 'योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः । स्थाणुमन्ये' 'न जायते म्रियते वा कदाचित्' 'जीवापेतं वाव किलेदं म्रियते' 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति । अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इत्याद्याः । कालान्तरभाविस्वर्गादिसाधनविधयश्चाऽऽक्षिपन्ति देहा-

---

आत्मनि देहादिभेदसाधकानुमानानां प्रत्यक्षबाधमप्याह 'स्थूलोऽह'मिति । प्रत्यक्षमृदितविषयतया-प्रत्यक्षबाधितसाध्यकतया । अतीतकालताबाधितहेत्वाभासता । व्यतिरेकानुमानभेदानां—विलक्षणात्मानुमानानां कापिलनैयायिकाभिमतानाम् ।

देहादिभेदे आत्मनः श्रुतिमेव प्रमाणतयोपन्यस्यन्ति श्रोत्रियाः 'स एष' इति । 'नेतिनेती'त्यात्मनः शरीरादिगतप्रकारनिषेधः । शरीरभिन्नं शरीरधर्मव्रणादिरहितं चात्मस्वरूपमित्यकायमित्यादेरर्थः । 'योनि'मिति । अत्र शरीरप्रापकयोनिसम्बन्धप्रतिपादनेनात्मनः शरीरभिन्नत्वं सिध्यति । शरीरत्वाय—शीर्यमाणत्वाय । इदं च न स्वरूपेण, किन्तु शरीरविशिष्टवेषेण । तथाच देहादेरेवोत्पत्त्यादि नात्मन इत्यत्र श्रुतिर्न जायत इति । शरीरभिन्नत्वमुक्तमात्मनः । शरीरसंसृष्टत्वमप्यौपाधिकमेव, मुक्तौ त्वशरीरत्वमेवेत्यत्र श्रुतिमुपादत्ते 'न ह वै' इति । श्रुतिं प्रमाणमुक्त्वा विलक्षणात्मनि श्रुत्यर्थापत्तिमपि प्रमाणमाह 'कालान्तरे'ति । 'तदनु-

दिव्यतिरिक्तं नित्यं चेतनमिति श्रुतितदनुपपत्तिप्रमाणकोऽयं प्रत्यगात्मेति।

(इति विलक्षणात्मनः शास्त्रैकप्रमाणकत्वपक्षनिरूपणम्)

ननु हिताहितप्राप्तिपरिहारमात्रपरस्याऽऽम्नायस्य शिरसि किमिति महानयं भारः प्रक्षिप्यते? अनुमानागमाद्यशेषप्रमाणमूलभूतेन प्रत्यक्षेणैव ह्येनं प्रतिपद्यामहे। ममेदं शरीरम्, इदमहं जानामीति घटादिदृश्येभ्य इवायं द्रष्टा देहादपि पृथग्भूतः प्रत्यक्षं परिस्फुरति।

(इत्यात्मनः प्रत्यक्षत्वपक्षोपक्षेपः)

---

पपत्ती'ति। श्रुत्यर्थान्यथानुपपत्तीत्यर्थः। विध्यन्यथानुपपत्तीति वा। देहविनाशोर्ध्वभाविस्वर्गादिसाधनकर्मानुष्ठानं तद्विधानं वा भोक्तुरात्मनो देहातिरेकं नित्यत्वं च विना हि न घटते। नन्वेवं देहव्यतिरेके सिद्धेऽपीन्द्रियादिभेदो न सिध्यतीतिचेत्; अत्रोच्यते—गोलकातिरिक्तेन्द्रियस्यापि न शास्त्रमन्तरा सिद्धिः। शास्त्रतस्तु विलक्षणात्मन उपकरणत्वेनैव तत्सिद्धिरिति विलक्षणात्मसिद्धिः शास्त्रतो निष्प्रत्यूहेति।

विलक्षणात्मनि अनुमानैकप्रमाणकत्वमागमैकप्रमाणकत्वं च मतभेदेनोपपाद्य प्रत्यक्षत्वं मीमांसकमतेन निरूपयितुमुपक्रमते 'ननु हिताहिते'ति। हितं बलवदनिष्टाननुबन्धीष्टसाधनं शास्त्रैकसमधिगम्यम्। अहितं-बलवदनिष्टानुबन्धि। हिताहितप्रवर्तननिवर्तनैकपरस्य शास्त्रस्योपरि तत्त्वपरत्वस्यापि परिकल्पनं महाभारनिक्षेपलक्षणमेव। सह्येत वाऽनन्यलभ्ये तत्त्वांशेऽपि कार्योपयोगिनि शास्त्रस्य तात्पर्यकल्पनम्। न त्वन्यलभ्ये। देहादिविलक्षणश्चात्मा प्रत्यक्षेणैव स्फुटमधिगम्यत इति नात्र पुरोवादितालक्षणं प्रामाण्यं शास्त्रस्य सम्भवतीति श्रोत्रियोपरि प्रत्यवस्थानं मीमांसकस्य।

मैवं वोचः । इन्द्रियार्थसन्निकर्षजं हि विज्ञानं प्रत्यक्षम् । न चेन्द्रियाणि रूपादिव्यतिरेकिणि निरतिशयसूक्ष्मे प्रतीचि परागर्थ इव सन्निकर्षेण ज्ञानं जनयितुमर्हन्ति । यथा आम्नायते 'पराञ्चि खानि व्यतृणत् स्वयंभूः' इति ।

अचित्त्वप्रतिबद्धश्च सर्वोऽपीन्द्रियगोचरः ।
तेन नैन्द्रियिकं ज्ञानमात्मानं स्प्रष्टुमर्हति ॥ १७ ॥

स्यान्मतम्—भौतिकत्वाद्बहिरिन्द्रियाणि मा नामात्मनि प्रवर्तिषत । मनस्तु प्रवर्तिष्यते अभौतिकत्वादिति; तन्न; तस्यापीन्द्रि-

---

आत्मन इन्द्रियाग्राह्यत्वं शङ्कतेऽत्र श्रोत्रियः 'मैवं वोच'इत्यादिना । रूपादिव्यतिरेकिणि—रूपस्पर्शरहिते । द्रव्यप्रत्यक्षे हि उद्भूतरूपस्पर्शान्यतरस्य कारणत्वम् । तदभावान्नात्मनः प्रत्यक्षत्वं सम्भवति । निरतिशयसूक्ष्म इत्यनेन इन्द्रियग्रहणायोग्यत्वं विवक्षितम् । योग्य एव हि प्रत्यक्षं प्रभवति नायोग्य इति भावः । इन्द्रियाग्राह्यत्वे आत्मनः श्रुतिमुदाहरति 'पराञ्ची'ति । परागर्थमात्रग्रहणसमर्थानीन्द्रियाणीत्यर्थः ।

युक्तिमप्युपन्यस्यति 'अचित्त्वे'ति । अचित्त्वप्रतिबद्धः—अचित्त्वव्याप्यः । आत्मा नेन्द्रियग्राह्यश्चेतनत्वात्, यन्नैवं तन्नैवं यथा घटादीति चात्र प्रयोगः ॥ १७ ॥

अत्र भाट्टमतमुपक्षिपति 'स्यान्मत'मिति । श्रोत्रियो दूषयति 'तन्ने'ति । गन्धादिमत्त्वादेव हि घ्राणादेर्गन्धादिग्राहकता व्यवस्थिता । तथा च भौतिकत्वं घ्राणादेः स्थितम् । तन्निदर्शनेन च मनसोऽपि भौतिकत्वं सेत्स्यति । तथा चाभौतिकऽत्माग्राहकत्वं घ्राणादेरिव मनसो-

यत्वे भौतिकत्वस्यापरिहार्यत्वात् । यथाऽऽम्नायते 'अन्नमयं हि सोम्य मनः' इति । प्रपञ्चितं चैतन्निरूपणे ।

( इत्यात्मनोऽप्रत्यक्षत्वशङ्का )

अथोच्येत–अस्ति तावदहमित्यपरोक्षावभासः प्रत्ययः । न चैन्द्रियिकत्वमन्तरेणासौ सम्भवति । क्लृप्तं च बहिरिन्द्रियागोचरेऽपि सुखादौ स्वान्तस्वातन्त्र्यमिति तन्निमित्त एवायमहंप्रत्ययो युक्तः । प्रयोगश्च भवति–आत्मा मानसप्रत्यक्षग्राह्यः बहिरिन्द्रियायोग्यत्वे सति प्रत्यक्षत्वात्सुखादिवत् इति ।

( इति भाट्टमुखेनात्मनो मानसप्रत्यक्षत्वानुमानोपक्षेपः )

तन्न; संवेदनेन व्यभिचारात् । न च तदप्रत्यक्षम् । जानामीत्यनन्योपाधिकतया प्रतिभानात् । अप्रत्यक्षत्वे च संवेदनस्यासिद्धिरेव

---

ऽपि स्यादिति भावः । भौतिकत्वे मनसः श्रुतिमप्याह 'अन्नमय'मिति ।

भाट्टः प्रतिवक्ति 'अथोच्येते'त्यादिना । अपरोक्षावभासः–परोक्षप्रतीतिभिन्नः, लौकिकविषयितावानिति यावत् । सुखादौ मनसः स्वातन्त्र्यं च बहिरिन्द्रियानपेक्षप्रत्यक्षजनकत्वम् । मानसप्रत्यक्षग्राह्यः–मानसप्रत्यक्षनिरूपितलौकिकविषयतावान् । शिष्टं स्पष्टम् ।

प्रकृतमनुमानं दूषयति गुरुमुखेन 'तन्ने'त्यादिना । साध्याभाववति हेतो सत्त्वं हि व्यभिचारः । तत्र संविदि हेतौ विशेषणांशस्य सिद्धत्वाद्विशेष्यांशं तावत्साधयति 'न च तदि'ति । अनन्योपाधिकतया–लिङ्गपदज्ञानादिकारणानपेक्षतया । प्रतिभानात्–प्रकाशात् । ननु ज्ञाततयैव ज्ञानानुमानमित्यनन्योपाधिकत्वं ज्ञानप्रतिभासस्यासिद्धमित्यत्राह 'अप्रत्यक्षत्वे चे'ति । ज्ञानातिरिक्तायां ज्ञाततायां ज्ञानलिङ्गत्वेनाभिमतायां प्रमाणाभावात्, सत्या अपि तस्या अतीन्द्रियत्वेन ज्ञानस्य तेना-

स्यादित्युक्तमेव । नच तदपि मानसप्रत्यक्षतया सपक्षे निक्षेपमर्हति; विमर्दासहत्वात् । यदा खलु कुतश्चिदात्ममनःसंयोगाद्विषयसंवित् उदयमासादयति, तदैव किं तत एव तद्गोचरमपि वेदनं जन्यते, उतान्यदाऽन्येनेति वाच्यम् । नच युगपदुभयजननं सम्भाव्यते । तथा हि सति परापरतत्तद्गोचरनिरवधिकधीनिकुरुम्बजन्म तत्काल-मेवापद्येत । नच तदस्ति । युगपदुत्पत्तौ विषयविषयित्वनियमश्च निर्निबन्धनः । असमसमयजन्मना ज्ञानेन वेद्यत्वे न प्रत्यक्षत्वं; क्षणिकत्वेनाग्रिमज्ञानस्य आग्राहकज्ञानोदयमवस्थानाभावात् । भावे

---

विनाभावग्रहायोगात्, ज्ञानजनकसामग्र्या ज्ञाततताया एव साक्षाज्जनन-सम्भवादन्तरा ज्ञानकल्पनाया अपार्थत्वाच्चासिद्धिरेव स्याज्ज्ञानस्या-प्रत्यक्षत्व इति भावः । संवेदने साध्यस्यापि सत्त्वमाशङ्कते 'न च 'तदपी'ति । विकल्पासहत्वान्मानसप्रत्यक्षत्वं संविदो निरस्यति 'विम-र्दे'ति । विकल्पयति 'यदा' इति । 'तथासती'ति । विषयज्ञानस्यो-दयकाल एव तद्गोचरज्ञानस्यापि आत्ममनःसंयोगरूपकारणबलादुत्पत्ति-स्वीकारे पूर्वोत्तरीभूतविषयज्ञानज्ञानज्ञानज्ञानज्ञानज्ञानादीनां समुदा-यस्य यौगपद्यप्रसङ्ग इत्यर्थः । निकुरुम्बम्—समुदायः । विषयज्ञान-ज्ञानज्ञानयोर्यौगपद्ये दूषणान्तरमाह 'युगप'दिति । प्रत्यक्षे विषयस्य हेतुत्वात्पूर्वज्ञानजनितस्योत्तरज्ञानस्यानुव्यवसायरूपस्य पूर्वज्ञानविषय-कत्वमुपपद्येत क्रमभावित्वे न तु यौगपद्य इत्यर्थः । अस्तु तर्हि क्रमिकत्वं विषयज्ञानतदनुव्यवसाययोरित्यत्राह 'असमे'ति । ज्ञानस्य क्षणिकत्वा-दुत्तरज्ञानोत्पादकाले पूर्वज्ञानस्यासत्त्वान्न प्रत्यक्षत्वं सम्भवेत्पूर्वज्ञाने ज्ञानान्तरवेद्यत्वोपगमेऽपीत्यर्थः । ज्ञानस्य क्षणिकत्वानुपगमे दोषमाह 'भावे चे'ति । ननु न क्षणिकत्वम्, नापि स्थिरत्वम् । किन्तु स्वकार्येणैव

च सर्वज्ञानानां सर्वदाऽनवस्थानप्रसङ्गात् । कार्यविरोधित्वे चानन्तरमेव संस्कारोदयान्न कालान्तरे स्थितिरिति संविदो न मानसप्रत्यक्षवेद्यत्वम् । न चाप्रत्यक्षा संविदिति स्फुटो व्यभिचारः । ऐन्द्रियिकत्वस्यानात्मत्वप्रतिबद्धत्वाद्विरुद्धता च । साध्यविकलश्च दृष्टान्तः, सुखदुःखयोः प्रत्यक्षत्वानभ्युपगमात् । अनभ्युपगमश्चेन्द्रियपौष्क-

---

निवृत्तिरिष्यते ज्ञानस्येति चेत्तत्राऽऽह 'कार्ये'ति । कार्यस्य विरोधित्वं नाशकत्वलक्षणं चेद्द्विक्षणावस्थायित्वं स्याज्ज्ञानस्य । सहानवस्थानलक्षणं चेदेकक्षणमात्रवृत्तित्वम् । अत्र तु सहानवस्थानलक्षण एव विरोधो विवक्षितः । द्विक्षणावस्थायित्वे तु नैयायिकप्रक्रियया मानसप्रत्यक्षोपपत्तेस्तन्निषेधानुपपत्तेरिति बोध्यम् । नैयायिकमतेऽपि द्वितीयतृतीयादिज्ञानविषयकज्ञानाधारानुवृत्तिप्रसङ्गो बोध्यः । आत्मनो मानसप्रत्यक्षत्वानुमाने विरोधमप्याह 'ऐन्द्रियिकत्वस्ये'ति । अनात्मत्वव्याप्यत्वादैन्द्रियिकत्वस्य व्यापकनिवृत्त्याऽऽत्मनि निवृत्तिरवर्जनीया । तथा च पक्षतावच्छेदकात्मत्वविरुद्धं साध्यमिति भावः । बाह्येन्द्रियग्राह्यत्वस्यैवानात्मत्वव्याप्यतेत्याग्रहेऽपि दूषणान्तरमाह 'साध्यविकलश्चे'ति । साध्यशून्योऽन्वयदृष्टान्त इत्यर्थः । साधनविकलत्वमपि यद्यपि फलति उपपादनप्रकारेण; अथापि सिद्धान्तप्रक्रियया ज्ञानावस्थारूपत्वात्सुखादेः ज्ञानस्य च स्वयंप्रकाशत्वात्स्वयंप्रकाशत्वं सुखादेर्हृदि निधाय साध्यविकलत्वमेव कीर्तितम् । अन्वयदृष्टान्ते साध्यस्य साधनस्य वा विरहे न तदवच्छेदेन साध्यव्याप्तिग्रहो हेतौ सम्भवतीति व्याप्यत्वासिद्धिर्विवक्षिता । ननु सुखदुःखयोरप्रत्यक्षत्वे प्रत्यक्षवदवभासस्तयोः कथम्? तत्राह 'इन्द्रिये'ति । यथाऽतीन्द्रियत्वेऽपीन्द्रियाणां ममेदं चक्षुः, अहं चक्षुष्मान् पश्यामीति प्रत्यक्षवदवभासश्चक्षुरादेः कदाचिच्चाक्षुषादिवृत्ति-

ल्यनाशयोरेव सुखदुःखत्वात् । न हि तस्मिन्नप्रत्यक्षे तत्पौष्कल्यं वैकल्यं वा प्रत्यक्षं भवति । इन्द्रियस्वरूप इवाभ्यासपाटवात्तयोरपरोक्षत्वाभिमानः, मनोऽवस्थाभेदेष्विव चाऽनुमेयमनोवादिनाम् ।

यस्तु सुगतमतावलम्बी विज्ञानाभिन्नहेतुजतया तयोरपि तदन्तर्भावमभिमन्यते; कणभक्षपक्षाश्रयणेन वा तयोरात्मविशेषगुणत्वम्; ताभ्यां सुखदुःखाधिकरणं व्याचक्षीत; स्वतःसुखीत्येतद्विमर्शं वाऽन्यत्यम् । रागद्वेषादयस्तु चैतन्यस्यैवावस्थाविशेषास्तद्वदेव प्रत्यक्षीभ-

---

काले नानाचक्षुरादिवृत्तिप्रतिसन्धानवतश्चेतनस्येन्द्रियविषयसंस्कारप्राचुर्यप्रयुक्तः, तद्वदिन्द्रियावस्थारूपसुखदुःखपरामर्शोऽपि प्रत्यक्षसमानाकारस्तदभ्यासबाहुल्यादित्यर्थः । अत्र निदर्शनं 'मनोवस्थे'ति । अनुमेयमनोवादिनः बुद्धिव्यतिरिक्तं मनोऽनुमानेन साधयन्तः । कामसङ्कल्पादीनां मनोवृत्तिरूपत्वं 'कामः सङ्कल्पः—सर्वं मन एवे'ति श्रुत्या प्रतीयते । तेषां च प्रत्यक्षत्वावभासः तद्विषयानुभावाभ्यासप्राचुर्यादेवेति वक्तव्यं यथा अनुमेयमनोवादिभिः, तथेति भावः ।

सुखदुःखयोरात्माभिन्नत्वम्, आत्मन आगन्तुकधर्मरूपत्वं च मतभेदेन प्रसिद्धमनुवदति 'यस्तु सुगते'ति । अत्राऽऽह 'ताभ्या'मिति । चतुर्थीद्विवचनम् । बौद्धप्रक्रियया काणादप्रक्रियया वा क्षणिकात्मानन्यत्वं, नित्यस्यात्मन आगन्तुकधर्मरूपत्वं वा मन्यमानाभ्यां न्यायतत्त्वशास्त्रस्थं सुखदुःखाधिकरणम्, एतत्प्रकरणस्थं स्वतः सुखित्वविचारं वा प्रकीर्तयेदित्यर्थः । ननु सुखदुःखयोः मानसप्रत्यक्षत्वे विवादेऽपि रागद्वेषावेव निदर्शने भविष्यत इत्यत्राह 'सुखे'ति । सुखत्वप्रयुक्तं विषयीकरणमुपादेयताप्रकाशनं यतः तज्ज्ञानमेव रागः सुखगोचरोपादेयताबुद्धिलक्षण इति यावत् । तस्य सुखस्य विरोध उपघातो येन

वन्तीति न तन्निदर्शनेनानुमानोदयः। सुखप्रयुक्तविषयीकारचैतन्यं रागः, तद्विरोधप्रयुक्तविषयीकारं तदेव द्वेषः, भूतदुःखज्ञानेन चेतश्चलनं शोकः, आगामितज्ज्ञानेन चेतश्चलनं भयमित्यादि लक्षणग्रन्थादेवावगन्तव्यमित्यलं प्रविस्तरेण।

( इति गुरुमुखेनात्मनो मानसप्रत्यक्षत्वानुमानदूषणम् )

एकस्य चात्मनो निरंशस्य न स्वापेक्षया ग्राह्यग्राहकभावः, विरोधादित्यप्युक्तमेव। अंशभेदाश्रयणे तत्सिद्धये चांशान्तरमाश्रयितव्यम्, तथा तत्र तत्रेत्यनवस्था; सङ्घातत्वं चात्मनः।

( इति चात्मनो ग्राह्यग्राहकभावे विरोधोद्भावनम् )

---

तद्गोचरत्वाज्यताप्रकाशकज्ञानमेव च द्वेषः। तयोश्च ज्ञानवदेव प्रकाश इति न साध्यान्वय इति भावः। शोकभययोरपि न निदर्शनत्वं सम्भवतीत्याह 'भूते'ति। तच्चलनमिति मुद्रितपाठस्तु न साधुः। अतीतदुःखानुसन्धानप्रयुक्तश्चित्तविक्षोभः शोकः। आगामिदुःखहेतुपरामर्शाधीनश्चित्तसङ्क्षोभश्च भयम्। तयोश्चान्तःकरणधर्मत्वादेव न प्रत्यक्षत्वमिति दृष्टान्तत्वायोग इति भावः।

आत्मनो मानसप्रत्यक्षत्वे साधकस्यासम्भवमुक्त्वा बाधकमप्याह 'एकस्ये'ति। एकस्यैकदैवैकक्रियायां कर्तृकर्मभावासम्भवलक्षणो विरोधोऽत्र विवक्षितः। उक्तविरोधपरिहारायात्मनि अंशभेदाश्रयणे दोषमाह 'अंशभेदे'ति। ग्राहकात्मांशान्तरस्यापि प्रमाणसिद्धत्वावश्यम्भावेन तद्ग्राहकांशान्तरमेष्टव्यम्, एवमुपर्युपरीत्यनवस्थेत्यर्थः। कदाचिदेकांशेनान्यांशग्रहणम्, अन्यदा चांशान्तरेणैतदंशग्रहणमिति कालभेदेनोपपत्तेर्नानवस्थेति चेत्तत्राप्याह 'सङ्घातत्वं चे'ति। आत्मनो निरंशत्वविरुद्धं च सांशत्वमेवं सति प्रसज्यत इत्यर्थः। सांशत्वे चानित्य-

ननु च ग्राहकावभासः श्रुत्या, स्वसिद्धान्तश्रद्धाविप्रलब्धबुद्धिभिरभिहितः; इन्द्रियादिप्रत्यासन्नतत्तत्पदार्थमात्रस्फुरणात् । तादृशोऽपि क्वचिदस्तु नाम प्रत्ययः । स त्वागन्तुकात्मप्रतियोगिकप्राकट्यप्रकाशादिपदाभिधेयार्थधर्मानुमितज्ञानविशिष्टमानसप्रत्यक्षसिद्धात्मनिबन्धनः ।

( इति प्राभाकरमते भाट्टस्यापि प्रत्यवस्थानम् )

---

त्वादि आपादनीयम् । अत्रेदं बोध्यम्—गुरुर्ज्ञातुरात्मनो ज्ञानविषयत्वं नानुमन्यते । किन्तु विषयज्ञानकालेषु ज्ञातृत्वबलात्प्रकाशमात्रं मनुते । ज्ञानस्यापि तथैवेति ।

एवं प्राभाकरेण दूषिते स्वपक्षे भाट्टस्तन्मतमपि दूषयति 'ननु चे'ति । श्रुत्येत्यनन्तरं 'तन्न, सतु' इति पूरणीयम् । अत्र 'न च ग्राहकाभास' इति पाठः सम्भाव्यते । श्रुत्येत्यनन्तरं 'सिद्ध्यती'ति शेषः । स्वसिद्धान्तेत्यतः पूर्वं 'स तु' इति योज्यम् । स्वसिद्धान्ताभिनिवेशवशीकृतचेतसामभिमानमूलको ग्राहकावभासवादो न श्रुतिप्रमाणेन सिध्यतीति भावः । ग्राहकावभासो नाम सर्वज्ञानेष्वाश्रयतयाऽऽत्मनः स्फुरणम् । श्रुत्याऽस्याऽसिद्धौ हेतुमनुभवविरोधमभिप्रेत्याऽनुभवप्रकारमाह 'इन्द्रियादी'ति । अनुभवविरुद्धं हि न श्रुतिः प्रतिपादयेदिति हार्दम् । श्रुत्येत्यत्रान्यथा पाठः स्याद्वा । स्वसिद्धान्ताभिमानिभिः प्राभाकैरभिहितो ग्राहकावभासो न मन्तव्यः प्रतीतिविरोधात् । प्रतीतिर्हि तत्तत्पदार्थमात्रं प्रकाशयतीति समुदिताशयः । ननु घटादिप्रत्यक्षे ग्राहकाभासाभावे घटमहं पश्यामीत्याद्यनुभवः कथम्? तत्राऽऽह 'तादृशोऽपी'त्यादिवाक्यद्वयेन । यस्य यद्विषये ज्ञानं जातं तस्यैव सोऽर्थः प्रकाशत इति प्राकट्यस्याऽऽत्मप्रतियोगिकत्वमर्थधर्मस्य । तल्लिङ्गकं ज्ञानानुमानमेव च कादाचित्कम् । ततश्चानुमितज्ञानोपर-

उच्यते । अहो खलु स्वानुभव एव विभ्रमः परीक्षकाणाम्, यत् विषयानुभवसमये पूर्वावस्थातो न कंचिद्विशेषमयमात्मनोऽव- बुध्यत इति । उक्तं ह्येतत्—ईदृश एवायमर्थः, ज्ञायते न वेति न विद्मः,मम वा प्रतिभासते परस्य वेत्यपि न विद्म इति न जातुचि- देवं प्रतीतिरस्ति, ज्ञानज्ञात्रोरनवभासे तादृश्यपि प्रतीतिरापद्येत; इति। सोऽयं परसंचेतितात् स्वसंचेतितस्यातिशयः सर्वत्र परिस्फुरन्न- सति ग्राहकावभासे नोपपद्येत । अनुमितज्ञानालम्बनत्वे चाज्ञासिष-

---

क्तात्ममानसरूपो निरुक्तानुभवश्च कादाचित्क एव, नायं घटचाक्षुष- रूपः । येन विषयवित्तिषु प्रकाशेताऽऽत्मेति भावः । अत्र च मानस- प्रत्यक्षे ज्ञानवत्त्वेन विषयत्वं देहादिमत्तया चाश्रयत्वमिति कर्मकर्तृ- विरोधपरिहारोऽभिमतो भाट्टानाम् ।

अत्र प्राभाकरस्य प्रत्यवस्थानम् 'उच्यत' इत्यादिना । 'स्वानुभव- एवे'ति । ज्ञाने जाते तद्वत्त्वेनात्मोपलम्भोऽप्यनुभवसिद्धः । तत्रैव विभ्रमो नास्तिताभ्रम इत्यर्थः । स्वानुभवमप्यजानतः परीक्षकत्वं शोभनमित्यु- पालम्भः । विषयवेदनकाले ज्ञानस्य ज्ञातुश्चावभासाभावे दोषं पूर्वोक्तं स्मारयति 'उक्त'मित्यादिना । ज्ञानस्य प्रकाशाभावे ज्ञायते न वेति संशयादिप्रसङ्गः । ज्ञातुः प्रकाशाभावे मम ज्ञायतेऽन्यस्य वेति संशयादि- प्रसङ्ग इति भावः । 'सोऽय'मिति । संचेतितम्—ज्ञातम् । अतिशयः— स्वात्मने प्रकाशमानत्वलक्षणोऽनुभूयमानः । 'अनुमिते'ति । जाना- मीत्यादिप्रतीतेर्ज्ञाततालिङ्गानुमितज्ञानोपनीतभानात्मकात्ममानसप्रत्यक्ष- रूपत्वेऽतीतज्ञानालम्बनत्वादज्ञासिषमित्येवाभिलापः स्यात्, न तु जानामीति ज्ञाने वर्तमानत्वोल्लेख इत्यर्थः । नन्वतिशैघ्र्यात् क्षणभेदाग्रह- निबन्धनो वर्तमानत्वांशे भ्रमलक्षणो जानामीति प्रत्यय इति शङ्कायां

मित्येव प्रतिभासः स्यात्, न जानामीति; ज्ञानजन्यार्थातिशयदर्शन-तद्व्याप्त्यनुसन्धानानुमानोदयसमयेऽनुमित्सितज्ञानस्यातिवृत्तत्वात्। ज्ञानानुमानासम्भवः पूर्वमेवोक्तः । मानसप्रत्यक्षत्वं चात्मग्राह्यधी-निरस्तम्। तथासति हि स्वपरवेद्ययोरनतिशयः स्यात्।

(इति प्राभाकरीयं स्वपक्षसाधनम्)

ननु कथमिव ग्राहकानवभासे स्वपरवेद्ययोरनतिशयप्रसङ्गः?

---

तन्मते दूषणान्तरमपि संस्फोरयति 'ज्ञाने'ति। स्वज्ञानव्यवहारहेतुकमेव स्वज्ञानानुमानमिति न सम्भवतीत्युक्तमेव प्राक्। ज्ञाततालिङ्गकमपि ज्ञानानुमानं ज्ञानेन ज्ञाततायाः अविनाभावग्रहासम्भवाज्ज्ञानसामग्र्यै-वान्यथासिद्धत्वाच्च ज्ञाततायाः दुःस्थमेवेति हार्दम्। विषयज्ञान एव ज्ञातुः प्रकाशं साधयितुं तस्य मानसप्रत्यक्षं च निरस्यति 'मानसे'ति। आत्मन इत्यादिः। मानसप्रत्यक्षत्वमित्यत्र बहुव्रीहेः त्वप्रत्ययः। आत्म-ग्राह्यत्वं धियः स्वयंप्रकाशत्वम्। तच्च ज्ञानस्य मानसप्रत्यक्षानुमाना-योगप्रतिपादनात् सिद्धम्। आत्मनो मानसप्रत्यक्षत्वं च व्यभिचारा-त्साधकत्वाभिमतस्य निरस्तं साधकाभावादित्यर्थः। धीनिरस्तम्—व्यभि-चारनिरूपिकया धिया निरस्तम्। व्यभिचारनिरूपकत्वोपपादकमात्म-ग्राह्येति धीविशेषणम्। अत्राऽऽत्मग्राह्यधीव्यभिचारनिरस्तमिति वा अन्यथा वा मूलपाठः सम्भाव्यते। एवं ग्रहग्राहकयोः प्रकारान्तरेण भानासम्भवमुपपाद्य तदनवभासे विषयवित्तौ पूर्वोक्तातिशयासम्भवं निगमयति 'तथासती'ति। अनतिशयः—अविशेषः। स्वस्मै ज्ञायमानत्वेन भानमभानं चार्थस्येति वैलक्षण्यस्य विरहः स्वपरवेद्ययोः प्रसज्यते विषयवित्तौ ज्ञानज्ञात्रोरभाने हीत्यर्थः।

भाट्टः प्रतिक्षिपति 'ननु कथ'मिति। स्वस्मै भासमानत्वरूपो विशेषोऽर्थस्य तज्ज्ञानस्य स्वनिष्ठत्वादेव घटते तज्ज्ञाने स्वस्याऽभानेऽपि।

नहि ग्राहकसिद्धिनिबन्धनः स्वपरवेद्यविशेषः; स्वसमवेतविषयबोधजन्मना परसमवेतबोधजन्मना च तद्विशेषोपपत्तेः। स्वपरसम्बन्धिबोधविशेषोदयव्यवस्थाऽपि स्वीयपरकीयेन्द्रियार्थसन्निकर्षादिज्ञानहेतुसामग्रीभेदनिबन्धना। न चात्मसिद्धिरपि तत्सामग्र्यनुप्रवेशमर्हति; इन्द्रियादेरिवानवभासमानस्यैव हेतुत्वसम्भवात्। नच विषयबोध एवात्मबोध इति साम्प्रतम्। न ह्यर्थान्तरसिद्धिरर्थान्तरस्य सिद्धिर्भवति, अतिप्रसङ्गात्। अपि च यदधीना भावानां रूपभेदव्यवस्था, तदपि हि संवेदनं तदानीं निलीनरूपमेवेन्द्रिया-

---

विषयबोधाश्रयत्वमेव स्वस्यातिशयोऽपूर्वो विषयवित्तिकाल इति च भावः। नच वित्तिवेदित्रोरग्रहे पूर्वोक्तः संशयस्तदवस्थ इति वाच्यम्। स्वज्ञानजार्थधर्मप्रकाशस्य स्वं प्रति प्रत्यक्षत्वादेव मम प्रकाशते न वेति संशयस्यानवकाशात्। ज्ञानफलप्रकाशेन झटित्येव ज्ञानस्यानुमानाच्च मम ज्ञानं जातमन्यस्य वेत्यादेरप्यप्रसक्तेः। नैयायिकप्रक्रियया तु कार्यनाश्यत्वाज्ज्ञानस्य द्विक्षणावस्थायित्वादनुव्यवसायबलादेव न निरुक्तसंशयादिप्रसङ्गो ज्ञानज्ञात्रोरनवभासेऽपि विषयवित्ताविति च बोध्यम्। आत्मनि बोधोदये आत्मप्रकाशस्य हेतुत्वं निरस्यति प्रसङ्गतः 'न चात्मे'ति। ननु आत्मसिद्ध्यघटिताऽपि विषयबोधसामग्र्येवात्मप्रकाशेऽपि हेतुरस्त्वित्यत्राह 'न च विषये'ति। इन्द्रियार्थसन्निकर्षार्थयोग्यतादिघटिता विषयबोधसामग्री नायोग्यात्मबोधेऽपि समर्थेत्यर्थः। अतिप्रसङ्गात्—पटबोधसामग्र्या घटादिबोधप्रसङ्गात्। विषयबोधे बोधस्याप्यप्रकाश इत्याह 'अपि चे'ति। मानाधीना हि मेयसिद्धिः। तत् पदार्थानां जातिगुणादिविशेषव्यवस्था यदधीना तदपि संवेदनं विषयप्रकाशकालेऽप्रकाशमानस्वरूपं स्वरूपसदेव चक्षुरादिवदित्यर्थः। स्वरूपसज्ज्ञानेनैव विषयविशेष-

दिवत् । कुतस्तु पुनः तदाश्रयस्यात्मनः प्रतिभासप्रसक्तिः ? यदाहुः— इदमहं जानामीति त्रितयावभासः सार्वत्रिकः, इति, तदप्यनुभवानारूढमेवानन्तरमेव प्रतिक्षिप्तमिति ।

( इति भाट्टेन प्राभाकरमतदूषणम् )

अस्तु तर्हि ग्राहकतयैव सर्वार्थग्रहणसमयेष्वात्मसिद्धिः । अभ्युपगन्तव्या हि संविदः स्वतःसिद्धिः, सर्वप्रकारसाधनान्तरनिराकरणात्, सत्याश्च तस्याः कदाचिदनवभासादर्शनाच्च । यथा च संविदः प्रकाशाव्यभिचारः, तथा प्रपञ्चितं प्रथमाधिकरण इति नात्रोपक्षिप्य प्रतिक्षेप्तव्यम् । सतोऽपि प्रमेयजातस्य स्वापादिसमयेऽनुप-

---

सिद्धिवत् स्वरूपसञ्ज्ञात्रैव स्ववेद्यविषयातिशयसिद्धिरिति भावः । प्राभाकराणां मतमनुवदति 'यदाहु'रित्यादिना । सार्वत्रिकः—प्रत्यक्षानुमानादिसर्वविषयंज्ञानव्यापी । तत्प्रतिक्षिपति 'तदपी'ति । अनुभवानारूढमिति साधकाभाव उक्तः, अनन्तरमेव प्रतिक्षिप्तमिति च बाधकम् ।

ज्ञानस्यैवायं स्वभावः—यत् स्वविषयस्येव स्वस्वाश्रयप्रकाशहेतुत्वमपीति पुनः प्राभाकरः शङ्कते 'अस्तु तर्ही'ति । ग्राहकतयैव—ज्ञानाश्रयतयैव । विषयबोधसामग्र्या विषयज्ञानमेव जातम् । तच्च ज्ञानं स्वसामर्थ्यादेव अविषयमपि स्वं स्वाश्रयं च प्रकाशयतीति भावः । ज्ञानस्य स्वयंप्रकाशत्वं तावत्साधयति 'अभ्युपगन्तव्ये'ति । 'सर्वप्रकारे'ति । मानसप्रत्यक्षस्य ज्ञाततादिलिङ्गकानुमानस्य च निराकरणादित्यर्थः । 'कदाचि'दिति । विद्यमानत्वे प्रकाशमानत्वनियमाच्चेत्यर्थः । 'प्रपञ्चित'मिति । न्यायतत्त्वशास्त्रे इति शेषः । 'नात्रे'त्यादि । प्रकाशव्यभिचारित्वमतमुपक्षिप्य ज्ञानस्य तत् नात्र निराकरणीयमित्यर्थः । एवं स्वप्रकाशत्वमुक्त्वा ज्ञानस्य विषयप्रकाशहेतुत्वं च साधयति 'सतो-

लब्धेरभ्युपगतं तावत् संविदः तत्साधकत्वम् । अतः क्लृप्तार्थान्तरसाधनभावया तयैवाऽऽत्मनोऽपि सिद्धिरभ्युपगन्तुं न्याय्या ।

( इति पुनः प्राभाकरेण स्वमतस्थापनम् )

यत्तु विषयवित्त्युपरमेऽपि स्वापसमयेऽयमात्मा प्रकाशत इति, तत् उपपत्तिभिरुपपद्यमानमपि यथाप्रतीति व्यवहरतां न चित्तमनुरञ्जयति ।

अपवृक्तस्य तु ज्ञानं हेत्वभावान्न संभवि ।
नित्यत्वे नित्यमुक्तिः स्यादर्थवादास्तथोक्तयः ॥ १८ ॥

---

ऽपी'ति । सतोऽपि विषयस्य स्वापेऽप्रकाशो ज्ञाननिवृत्त्येति ज्ञानस्य विषयप्रकाशकत्वसिद्धिरिति भावः । 'अत' इति । परप्रकाशकत्वेनैष्टव्यायाः संविद एव प्रमात्रवभासकत्वमपि युक्तमिति नात्मनः स्वयंप्रकाशत्वमपि कल्पनीयमिति भावः ।

स्वापेऽप्यात्मनो ज्ञानमस्तीति मतमनूद्य खण्डयति 'यत्तु' इति । 'त'दिति । सुखमहमस्वाप्समित्यादिप्रतिसन्धानस्य स्वापे आत्मप्रकाशमन्तराऽनुपपद्यमानत्वलक्षणयुक्तियुक्तमपि स्वापे आत्मनः प्रकाशमानत्वं नानुभवमात्रशरणानां हृद्यं भवतीत्यर्थः । उपपद्यमानमपीत्यपिनोपपत्तिरपि नैव । प्रतिसन्धानस्याऽन्यथैवोपपत्तेरिति स्फोर्यते । अन्यथासिद्धिरग्रे प्रपञ्चयिष्यते मूल एव ।

स्वाप आत्मनः प्रकाशं निषिध्य मुक्तावपि तं निषेधति 'अपवृक्तस्ये'ति । अपवृक्तस्य—मुक्तस्य । मुक्तज्ञानस्य नित्यत्वमस्त्विति चेत्तत्राह 'नित्यत्वे' इति । संसरणाभावप्रसङ्गः फलितोऽत्र । ननु तर्हि मुक्तौ सार्वज्ञ्यपरश्रुतीनां का गतिः ? तत्राह 'अर्थवादा' इति । अज्ञानकार्याभावनिमित्तका मोक्षसाधनप्रशंसापराः सार्वज्ञ्यादिश्रुतय इत्यर्थः ॥ १८ ॥

निर्धूतनिखिलकरणकलेवरज्ञानकर्मवासनानुबन्धस्यापवृक्तस्य न खलु स्वपरसंवेदनोदयनिबन्धनं किञ्चित् सम्भाव्यते। नच मनसो नित्येन्द्रियत्वेन तत्संयोगादेव तदा ज्ञानं जन्यत इति युक्तम्; स्वरूपतो गगनवत् नित्यस्यापि सतस्तस्येन्द्रियभावेन ज्ञानोत्पादकत्वस्य धर्माधर्मावरोधनिबन्धनत्वात् ।

धर्माधर्मावरुद्धं सन्मनो ज्ञानस्य साधनम् ।
सति नित्येन्द्रियत्वेऽपि श्रोत्रवत् करणत्वतः ॥ १९ ॥

नच योगजधर्मानुगृहीततत्संयोगस्य साधनत्वम्; 'क्षीयन्ते चास्य कर्माणि' 'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः'

---

श्लोकार्थमेव प्रपञ्चयति 'निर्धूते'त्यादिना । ज्ञानवासना, कर्मवासना चाऽनुबन्धः । निरस्तसमस्तदेहेन्द्रियवासनानुबन्धस्येत्यर्थः । 'स्वपरे'ति । स्वस्वरूपविषयकस्याऽर्थान्तरविषयकस्य वा ज्ञानस्योत्पादकमित्यर्थः । 'धर्माधर्मे'ति । अदृष्टसहकाराधीनत्वादित्यर्थः ।

एतदेवोपपादयति 'धर्माधर्मे'तिकारिकया । धर्माधर्मावरुद्धम्— पुण्यपापलक्षणादृष्टनिबन्धनोपकरणत्वावस्थाविशिष्टम्। 'श्रोत्रव'दिति । कर्णशष्कुल्यवच्छिन्नाकाशस्यैव श्रोत्रत्वम्। तस्य चादृष्टसहकारे सत्येव शब्दग्रहकरणत्वम्, न तद्विरहे इति यथाऽदृष्टनिबन्धनः श्रोत्रस्येन्द्रियभावः तथेति यावत्। तथा चादृष्टविरहान्मुक्तौ मनसो नेन्द्रियत्वमिति भावः ॥ १९ ॥

शङ्कते 'न च योगजे'ति। मनस्संयोगस्य योगजधर्मानुगृहीतत्वम्— योगजधर्मसहकृतत्वम् । योगजधर्मप्रभावान्मुक्तावपि मनस इन्द्रियभावोऽनुवर्तत इति मानसमात्मज्ञानं तदा सम्भवतीति भावः। मुक्तौ

इत्यादिशुक्लेतरसकलकर्मप्रक्षयश्रुतिविरोधात्। धर्मफलत्वे चापवर्गस्य पुनरावृत्तिप्रसङ्गः। 'नास्त्यकृतः कृतेन' 'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इत्यादिश्रवणाच्च। न चात्मसत्तयैव तदानीं तज्ज्ञाननिमित्तमिति वाच्यम्। क्लृप्तत्यागाक्लृप्तकल्पनप्रसक्तेः। तन्मात्रनिमित्तत्वे च सर्वदा आत्मस्वरूपवत्तदपि विद्यत इति संसारानवतारप्रसङ्गात्, बन्धमोक्षावस्थयोरविशेषापत्तेश्च। न च देहेन्द्रियादिप्रतिबद्धतया

---

योगजधर्मानुवृत्तौ श्रुतिविरोधमाह 'क्षीयन्ते' इति। शुक्लेतरेति। पुण्यपापरूपेत्यर्थः। ननु श्रुतेर्योगजधर्मव्यतिरिक्तसकलकर्मनिवृत्त्यभिप्रायकत्वमिति चेत्तत्राह 'धर्मफलत्वे चे'ति। मोक्षकाले ज्ञानस्यात्मविषयकस्य सर्वविषयकस्य वा धर्मजन्यत्वे जन्यभावस्य विनाशित्वनियमात्पुनरज्ञानादिप्रसङ्ग इत्यर्थः। कर्मफलस्यानित्यत्वे श्रुतिमुदाहरति 'नास्त्यकृत'इति। ननु मोक्ष आत्मैव ज्ञानहेतुरस्तु। तत्राह 'न चात्मे'ति। आत्मा सत्तयैव मूलपाठः स्याद्वा। 'क्लृप्ते'ति। ज्ञानकारणतयाऽभिमतस्येन्द्रियादेः त्यागः, अक्लृप्तस्यैव केवलस्यात्मनः ज्ञानकारणत्वेन कल्पनं च प्रसज्यत इत्यर्थः। दोषान्तरमप्याह 'तन्मात्रे'ति। आत्मस्वरूपमात्रनिमित्तत्वे मुक्तिकालीनस्य ज्ञानस्य सर्वदैव तत् भवेदिति संसारानवतारप्रसङ्गः, ज्ञानस्याज्ञानतन्मूलसंसरणप्रतिबन्धकत्वादिति भावः। विशदतत्त्वसाक्षात्काररूपज्ञानभावेऽपि संसारोपगमे च दोषमाह 'बन्धे'ति। मुक्तिकालज्ञानस्य संसारकालेऽपि सत्त्वे संसारापेक्षया मोक्षे वैलक्षण्यं न स्यादित्यर्थः। ननु दुःखध्वंसादिरेव मोक्षे विशेष इति चेत्, तर्हि तावन्मात्रमेव भवेन्मोक्ष इति कृतं ज्ञानादिना-

इदानीं तदभाव इति वाच्यम् । तत् खलु प्रतिबन्धकम्, यत् सति पुष्कलकारणे कार्योदयं निरुणद्धि । न चाद्याप्यात्मनः तत्पुष्कलकारणत्वं सिद्धम्; शरीरेन्द्रियवतामेव ज्ञानदर्शनात् । क्लृप्तज्ञानकारणभावस्य तस्यैव तद्बन्धकत्ववचनमुन्मत्तवचः । अतो नास्त्यपवर्गदशायां ज्ञानम् । तात्कालिकज्ञानसुखादिवादास्त्वात्मज्ञानविधिशेषतया गुणवादेन नेतव्याः । अतो विषयवित्तिसमय एवात्मसिद्धिनियमाद्यथोक्तनीत्या अर्थवित्तिषु वेदितृतयैवात्मसिद्धिरिति ।

( इति विषयवित्तिकालेष्वेवात्मनो भानमिति गुरुमतोपपादनम् )

इदमप्यात्मतत्त्वापरिज्ञानोल्लसितपरिमितमतिविकल्पजल्पितमिति न रोचयन्ते त्र्य्यन्तविदः । विषयवित्तिर्हि विषयवित्तिरेव । न हि तया आत्मवित्तिः स्वरूपं वा सेद्धुमर्हति, अतद्विषयत्वात् ।

---

ऽपार्थेनेति भावः । आत्मनो मुक्तिकालीनज्ञाने हेतुभूतस्य नित्यत्वेऽपि न संसारे तत्प्रसङ्गः । देहादेः प्रतिवन्धकत्वादिति शङ्कते 'न चे'ति । परिहरति 'तत् खलु'इति । प्रतिवन्धकत्वस्यासम्भवमुपपाद्य तत्र विरोधमप्याह 'क्लृप्तज्ञाने'ति । तस्यैव-देहेन्द्रियादेरेव । 'अर्थवादास्तथोक्तय' इत्युक्तं विवृणोति 'तात्कालिके'ति । दुःखनिवृत्तिपरा मुक्तौ सुखवादाः, ज्ञानप्रागभावनास्तिताऽभिप्रायकाश्च ज्ञानवादाः । ते चात्मज्ञानप्रशंसामात्रपरास्तद्विधिशेषभूता एवेत्यर्थः । प्राभाकरमतोपसंहारः 'अत'इति । यथोक्तनीत्या-विषयप्रकाशकस्य ज्ञानस्यैव स्वस्वाश्रयप्रकाशकत्वं न्याय्यमित्युक्तनीत्या ।

प्राभाकरमतं प्रतिक्षिपति सिद्धान्ती 'इदमप्यात्मे'त्यादिना । आत्मतत्त्वाज्ञानकार्या आत्मप्रकारेष्वयथाप्रतिपत्तिभेदा येषां, तेषामिदं निरर्थकं वचनमित्यर्थः । कथं निरर्थकत्वं गुरूक्तेः ? तत्राह 'विषये'ति । 'न ही'ति । आत्मवित्तिः-आत्मधर्मभूतं ज्ञानम् । स्वरूपम्—

यो हि यत्संविद्विषयो न भवति, नासौ तया सिध्यति रूपसंविदेव रसः। अविषयौ च विषयवित्तेर्बुद्धिबोद्धाराविति तावपि न तया सिध्यतः।

ननु वेद्यस्वभावोऽयम्, यत्स्वविषयसंविदा सिध्यतीति। वित्तिस्तु वित्तिरेव, वेदिता च वेदितैवेति कुतस्तयोर्वेद्यस्वभावानुप्रवेशः। उक्तं हि तयोर्मानसप्रत्यक्षागोचरत्वम्, अनुमेयत्वासम्भवश्च। कुतस्तर्हि वित्तिसिद्धिः? स्वत एव। स्वयंप्रकाशा हि संवित्।

मैवम्। साऽपि हि विषयवदेवान्यस्यैव प्रकाशमानतया न स्वतःसिध्यति। स्वतःसिध्यन्ती च सा किमिति कश्चिदेव प्रति

---

आत्मस्वरूपम्। अत्र 'आत्मा वित्तिस्वरूपं वा' इति पाठः स्याद्वा। सेद्धुम्–प्रकाशितुम्। अतद्विषयत्वात्-विषयवित्तिविषयत्वाभावात्तयोः।

अविषययोरपि ज्ञानज्ञात्रोर्ज्ञानबलत एव सिद्धिरिति शङ्कते गुरुः 'ननु वेद्ये'ति। वित्तिरेव, न तु वित्तिविषयः, विषयवज्जडा वा। वेदितैव, न तु वेद्यः, वेद्यवदज्ञाता वा। तथा च विलक्षणस्वभावत्वाद्भावानामविषययोरपि तयोः सिद्धिर्ज्ञानबलतः सेत्स्यतीत्यविषयत्वेनासिद्धिर्विषयवत्तयोर्दुर्भणमिति भावः। ननु ज्ञानान्तरविषयत्वेनैव तयोः प्रकाशोऽस्त्वित्यत्राह 'उक्तं ही'ति। स्वबलत एव वित्तेः सिद्धिं शङ्कासमाधानमुखेनाह 'कुत' इति। 'स्वत एवे'ति। विषयज्ञानकालेऽविषयस्यापि तस्य ज्ञानस्य प्रकाशो भवतीत्यनायत्या स्वीकरणीयम्, तदाश्रयत्वेनात्मनश्चेति हार्दम्।

तत्र स्वप्रकाशत्वमाक्षिपति गुरूक्तं संविदः सिद्धान्ती 'मैव'मित्यादिना। स्वाश्रयात्माधीनप्रकाशत्वादेव तस्मा एव प्रकाशमानत्वं संविदो घटत इति स्वतःसिद्धत्वासिद्धिरिति भावः। अत्र परः परिहारं शङ्कते

चकास्ति, न सर्वान् प्रति । तत्समवायादिति चेत्—यत्समवायिनी हि या संवित् तस्यैव सा चकास्ति, नेतरस्य, तदसमवायादिति; यद्येवम्, आश्रितस्तर्हि आत्मसंबन्धनिबन्धन एव संविदः प्रकाशः, तद्भावाभावानुविधानात् । यद्युच्येत—प्रकाशस्वभावाया एव सत्याः प्रतियोगिविशेषावच्छेदायैव तदपेक्षा, न स्वरूपसिद्धय इति; कुतः खल्वयं निश्चयः ? यदि हि प्रतियोगिनिरपेक्षैव कदाचिदात्मस्वरूपमिव संवित् प्रकाशेत, तत एवमध्यवस्येमापि । न च तथास्ति ।

---

'तत्समवायादिति चे'दिति । स्वयमेव स्वोक्तिं विवृणोति 'यत्समवायिनी'ति । स्वयंप्रकाशाऽपि संविदात्मापृथक्सिद्धत्वादात्मन एव प्रकाशत इति भावः । प्रतिक्षिपत्याक्षेप्ता 'यद्येव'मिति । 'तद्भावे'ति । आत्मसंबन्धान्वयव्यतिरेकानुविधाय्यन्वयव्यतिरेकत्वात्संवित्प्रकाशस्याऽऽत्मसंबन्धहेतुकत्वं सिध्यतीत्यर्थः । पुनः परः शङ्कते 'यद्युच्येते'ति । प्रतियोगी—विषयः, स एव विशेषः-विशेषणम्, तदवच्छेदायैव—तत्संबन्धायैव, विषयप्रकाशकत्वायैवेति यावत् । तदपेक्षा-आत्मसंबन्धापेक्षा । न तु स्वप्रकाशायेत्यर्थः । परिहरति 'कुतः' । एवं निश्चयो न संभवतीति यावत् । निश्चयासंभवमेवोपपादयति 'यदि ही'ति । प्रतियोगिनिरपेक्षैव विषयनिरपेक्षैव । एवम्—विषयप्रकाशनायैवात्मसंबन्धापेक्षा संविदो न स्वप्रकाशं प्रतीत्येवम् । 'न च तथे'ति । विषयप्रकाशकाल एव स्वाश्रयायैव प्रकाशमानायाः संविदः स्वप्रकाशे विषयात्मसंबन्धसापेक्षत्वमेषितव्यमिति भावः । अतीतादिविषयज्ञानेऽपि विषयेण संबन्धो ज्ञानस्य विषयविषयिभावलक्षणो विलक्षणः स्वरूपसंबन्धविशेषोऽस्त्येवेति हार्दम् । ननु निर्विषया निराश्रया च संवित् । अन्तःकरणतद्वृत्त्युप-

आश्रयप्रतियोगिसापेक्षैव संयोगपुत्रत्वादेरिव तस्याः स्वरूपसत्तेति न पृथक्सिद्ध्युत्प्रेक्षावकाशः । सत्याः संविदः प्रकाशव्यभिचारा-भावात् स्वरूपप्रयुक्तः प्रकाश इति चेत्, सत्याः किं तस्या आत्म-संबन्धव्यभिचारोऽस्ति ? । अपि चैवं सुखदुःखादयोऽपि त्वन्मते स्वतःसिद्धाः स्युः । न हि तेऽपि सन्तो न प्रकाशन्ते ।

अथार्थान्तरसाधकतया सर्ववादिसंमतायाः संविद एव परं स्वयं-प्रकाशत्वमाश्रितम् । तयैव तथाभूतया तदितरवाह्याभ्यन्तरसकल-पदार्थसिद्ध्युपपत्तेः किमनेकस्वयंप्रकाशभावाभ्युपगमेनेति भावः ?

---

धानौपाधिकं केवलं तस्याः साश्रयत्वादिप्रतीतिमात्रमित्यत्राह 'आश्रये'-ति । भूतले घटसंयोगस्याश्रयो भूतलम्, प्रतियोगी घटः । पुत्रत्वस्या-ऽऽश्रयः पुत्रः, प्रतियोगी पिता । ज्ञानस्य प्रतियोगी विषयः, आत्मा-ऽऽश्रयः । सिद्धिः–स्थितिः प्रकाशश्च । निर्विषयत्वेन निराश्रयत्वेन च स्थितिः प्रकाशो वा संविदो नास्त्येव । संविन्मात्रानुभवश्चानुपलम्भ-वाधितः । तथा च संवित्प्रकाशे आत्मसंवन्धापेक्षाऽपि दुर्वारैवेति भावः । स्वसत्ताव्यापकप्रकाशत्वेन स्वप्रकाशत्वं स्यात्संविद इति पुनः शङ्कते 'सत्या' इति । परिहरति 'सत्या' इति । तदा चात्मसम्वन्धस्य नियतपूर्वभावित्वादपेक्षितत्वाच्च संवित्प्रकाशे हेतुत्वमेष्टव्यमेवेति भावः। निरुक्तहेतुना स्वयंप्रकाशत्वसाधने दोषं चाह 'अपि चैव'मिति। सुखादिष्वनैकान्त्यं हेतोरिति भावः ।

ननु विषयसंवन्धस्येवात्मसंवन्धस्यापि संवित्प्रकाशेऽस्तु हेतुत्वम्। तावता न स्वयंप्रकाशत्वस्य हानिः । स्वसजातीयज्ञानान्तरानपेक्षप्रकाश-त्वात्तत्सिद्धेः । आत्मनस्तु न स्वयंप्रकाशत्वमेष्टव्यं विषयस्येव । किन्तु वाह्यार्थप्रकाशकत्वेनेष्टस्य ज्ञानस्यैवाऽऽत्मप्रकाशकत्वमपि कल्पनीयं

तथा सति—

सर्वस्यार्थस्य तद्वित्तेः साक्षी सर्वत्र संमतः ।
आत्मैवास्तु स्वतःसिद्धः किमनेकैस्तथाविधैः ॥ २० ॥

किंच—यो यस्य साक्षी तेनैव तस्य सिद्धिर्न लौकिकी ।
अर्थस्येवार्थवित्तेरप्यात्मा साक्षी हि लक्ष्यते ॥ २१ ॥

सन्तु नामार्थवित्तयः स्वतःसिद्धाः, तथापि न ताभिरयमात्मा प्रत्यक्षीभवति, तत्साक्षित्वात् । यत्साक्षी खल्वयं पुरुषः, न तेनासौ प्रत्यक्षः, घटसाक्षात्कारीव घटेन । अर्थसंविदां च साक्षात्कारी चेतन इति सोऽपि न ताभिरपरोक्षीभवति ।

( इति सिद्धान्तिना गुरुमतखण्डनम् )

---

लाघवादिति पुनः शङ्कते गुरुः 'अथार्थान्तरे'ति । परिहरति 'तथासती'ति ।

'सर्वस्ये'ति । नानास्वयंप्रकाशकल्पनायां गौरवे सति सर्वार्थानां सर्वज्ञानानां च साक्षात्कर्तुरात्मन एव स्वप्रकाशत्वं कल्पनीयम् । नतु ज्ञानानामित्यर्थः । विषयाणामिव ज्ञानानामप्यात्मने प्रकाशमानत्वादात्मैकः स्वप्रकाशो भवतु । अन्ये सर्वे भवन्तु तदधीनप्रकाशा एवेति भावः ॥ २० ॥

एवं संविदोप्यात्मायत्तप्रकाशत्वान्न मुख्यं स्वप्रकाशत्वमित्युक्तम् । ज्ञानान्तरानपेक्षप्रकाशत्वेन भवतु नाम ज्ञानस्य तत्कथञ्चित् । अथापि न ज्ञानाधीनप्रकाश आत्मेत्याह—'किञ्चे'ति । यो 'यस्ये'ति । साक्षी द्रष्टा, प्रकाशकः । सिद्धिः प्रकाशः । न लौकिकी—नानुभवसिद्धा । लक्ष्यते—दृश्यते ॥ २१ ॥

श्लोकं व्याख्याति स्वयमेव 'सन्तु नामे'ति । उक्तनीत्या संवित्त आत्मप्रकाशानुपपत्तेस्स्वयंप्रकाशत्वमात्मन एष्टव्यमेवेति भावः ।

सजातीयस्वसाध्यार्थनिरपेक्षात्मसिद्धयः ।
सर्वे पदार्थास्तेनात्मा निरपेक्षस्वसिद्धिकः ॥ २२ ॥

न हि कश्चित्पदार्थः स्वप्रकाशायासाधारणसजातीयार्थान्तरापेक्षो दृष्टः। न खलु घटः स्वसिद्धये घटान्तरमपेक्षते; अपेक्षते तु विजातीयमालोकादि । एवमालोकोऽपि प्रकाशमानो नालोकान्तरमपेक्षते; नापि स्वापेक्षप्रकाशं घटादिकमपेक्षते; अपेक्षते तु विजातीयमिन्द्रियम् । एवमिन्द्रियमपि नेन्द्रियान्तरं स्वापेक्षप्रकाशमालोकादि घटं वाऽपेक्षते; अपेक्षते तु विजातीयं संवेदनम् । एवं संवेदनमपि संविदन्तरं स्वाधीनसिद्धिकमिन्द्रियादिकं वा नापेक्षते स्वसिद्धौ; अपेक्षते तु विजातीयं स्वाश्रयभूतं स्वतन्त्रमात्मानम् । एवमात्माऽप्यात्मान्तरं स्वाधीनसिद्धि संविदिन्द्रियादिकमपि स्वापरोक्षे नापेक्षत इत्यनन्यापेक्षा ह्यात्मस्वरूपसिद्धिः ।

( इति सिद्धान्तिनाऽऽत्मनः स्वप्रकाशत्वसमर्थनम् )

---

संविदधीनप्रकाशत्वे बाधकमुक्त्वाऽऽत्मनः स्वप्रकाशत्वे साधकमप्याह 'सजातीये'ति । सर्वे हि प्रकाशमानाः पदार्थाः सजातीयं—स्वात्यन्तसजातीयम् , स्वसाध्यं—स्वाधीनप्रकाशं चार्थमनपेक्ष्यैव प्रकाशमाना इति आत्माऽपि प्रकाशमान आत्मान्तरं स्वापेक्षप्रकाशं ज्ञानादि चानपेक्ष्यैव प्रकाशत इत्यनुमन्तव्यम् । तथाच स्वयंप्रकाशत्वं तस्य फलतीति भावः ॥ २२ ॥

श्लोकार्थस्य प्रपञ्चनं 'नहि कश्चि'दित्यादि । अत्रायं निष्कर्षः—स्वविषयकज्ञानान्तरानपेक्षप्रकाशत्वलक्षणं स्वयंप्रकाशत्वं ज्ञानात्मनोः समानम् । स्वेतरसकलनिरपेक्षप्रकाशत्वलक्षणं तु तदात्मस्वरूपस्यैवेति ।

एवं वित्तिवेद्यत्वं निरस्यात्मनः स्वयंप्रकाशत्वं समार्थितम् । अथैवंभूतस्यात्मन एव न साक्षाद्विषयप्रकाशकत्वम् । किन्तु स्वधर्मभूतज्ञान-

तदेवं चित्स्वभावस्य पुंसः स्वाभाविकी चितिः ।
नानापदार्थसंसर्गात्तत्तद्वित्तित्वमश्नुते ॥ २३ ॥

यथैव खलु सूर्यालोकस्तेन तेनार्थभेदेन संसर्गात्तत्तत्प्रकाशो भवति घटप्रकाशः पटप्रकाश इति, एवमात्मनः प्रकारभूतं चैतन्यमर्थविशेषसंसर्गाद्घटसंवित्पटसंविदित्यादिप्रख्योपाख्ये प्रतिपद्यते । ते च चैतन्यस्य दशाविशेषाश्चेतयितुरात्मनो धर्मविशेषत्वादेव तस्यापरोक्षा भवन्ति कादाचित्कबोधवादिनामिव बोधस्य विषयभेदावच्छेदादयः ।

( इत्यात्मधर्मभूतज्ञानस्य नित्यत्वोपक्षेपः )

---

द्वारैव । तच्चात्मनः स्वाभाविकमेव, नत्वागन्तुकमिति समर्थयितुमुपक्रमते 'तदेव'मिति । चित्स्वभावस्य—स्वयंप्रकाशस्वरूपस्य । चितिः—धर्मभूतं ज्ञानम् । ननु आत्मभावानुवन्धित्वेन यावदात्मभावित्वे ज्ञानस्य घटज्ञानं मे जातं, पटज्ञानं विनष्टमित्यादिप्रतीतिव्यवहारौ कथं घटेयातामित्यत्राह 'नाने'ति । इन्द्रियद्वारा तत्तदर्थसंसृष्टं ज्ञानमेव तत्तज्ज्ञानत्वेनोच्यते । तत्तदर्थसंसर्गस्याऽऽगन्तुकत्वादेव तद्विशिष्टस्योत्पत्त्यादिप्रतीतिव्यवहारोपपत्तिरिति भावः ॥ २३ ॥

उत्तरार्धं विवृणोति 'यथैवे'त्यादिना । अर्थभेदेन-अर्थविशेषेण । प्रख्योपाख्ये—प्रतीतिव्यवहारौ । 'ते चे'ति । विषयप्रकाशोपयुक्ता दशाविशेषा ज्ञानस्य विकासलक्षणाः धर्मविशेषत्वात्—स्वधर्मनिष्ठाकारत्वादात्मनोऽपरोक्षा एवेत्यर्थः । अत्र निदर्शनं 'कादाचित्के'ति । यथा तार्किकाणां ज्ञाननिष्ठघटादिविषयकत्वाकारा अनुव्यवसायग्राह्या अभिमताः, तथा विषयसंसर्गावस्थाभेदा ज्ञानस्य प्रत्यक्षा एव सिद्धान्तिनामिति भावः ।

ननु आत्मनश्चैतन्यमागन्तुकमिति न्यायवैशेषिकविदः, तन्मतोपजीविनश्चाभिनवमीमांसकाः; अर्थेन्द्रियसन्निकर्षाद्यन्वयव्यतिरेकानुविधानात्, गच्छाम्यागच्छामीत्यादिवत् जानाम्यज्ञासिषमित्यादिकालावच्छेदप्रतीतेः; स्वापतुरीयादिदशासु च बोधाधारत्वे सुप्तप्रबुद्धबद्धमुक्तादिव्यवस्थाभावप्रसङ्गाच्च । नित्यस्य च ज्ञानस्यात्मसमवायिनः प्रतिकर्मव्यवस्थाऽपि दुरुपपादैव । तदा हि प्रकाशनशीलतया तस्याः, एकस्यां संविदि सर्वमेव प्रकाशेत, न वा किञ्चित्, अविशेषात । अन्यदा तु यदर्थसन्निकर्षजुषेन्द्रियलिङ्गादिना या धीर्जन्यते तदीयैव सेति व्यवस्था युक्तिमती ।

( इति धर्मभूतज्ञानस्याऽनित्यत्वसतोपस्थापनम् )

---

स्थूणानिखननन्यायेन ज्ञाननित्यत्वमाक्षिप्य प्रतिष्ठापयितुमादौ पूर्वपक्षमाह 'नन्वात्मन' इत्यादिना । अभिनवमीमांसकाः—भट्टानुयायिनो मिश्रप्रभृतयः । 'अर्थेन्द्रिये'ति । अन्वयव्यतिरेकाभ्यामिन्द्रियार्थसन्निकर्षलिङ्गज्ञानादेः तत्र तत्र ज्ञाने हेतुत्वप्रतीतेः कालपरिच्छिन्नत्वप्रतीतेश्च ज्ञानस्यानित्यत्वमेव मन्तव्यमित्यर्थः । अनित्यत्वे ज्ञानस्य युक्तिरुक्ता । नित्यत्वे बाधकं चाह 'स्वापे'ति । तुरीयदशा-मोक्षः । मूर्च्छाऽऽदिपदग्राह्या । जागरणसुषुप्त्योर्भेदो ज्ञानभावाभावाभ्यामेव संभवति । नित्यत्वे ज्ञानस्य स्वापादावपि सत्त्वप्रसङ्गात्सुप्तप्रबुद्धव्यवस्था न घटत इति भावः । नित्यत्वे ज्ञानस्य सदा सर्वार्थभानप्रसङ्गमप्याह 'नित्यस्य चे'ति । आत्मसमवायिनः आत्मसमवेतस्य । प्रतिकर्मव्यवस्था—विषयभेदनियमः इदं ज्ञानं घटविषयकं न पटादिविषयकमित्येवंरूपः । प्रतिकर्मव्यवस्थाया अनुपपत्तिमेवोपपादयति 'तदा ही'ति । नित्यत्वे ज्ञानस्य विषयप्रकाशनस्वाभाव्यादपेक्षणीयान्तराभावाच्च युगपदेव सर्वानप्यर्थान् प्रकाशयेत् । न प्रकाशयति चेत्कमपि न प्रकाशयेत् । तथाच

स्यान्मतम्—इन्द्रियादिप्रणाडिकया चैतन्यमेव तेन तेनार्थेनानुरज्यमानं तत्प्रकाशतया तदीयत्वेन व्यवतिष्ठते । अनुरागस्य चागन्तुकतया इन्द्रियाद्यनुविधानं कालावच्छेदः स्वापादिव्यवस्था चोपपद्यत इति; तदसत्; अर्थान्तरसन्निकर्षेऽर्थान्तरस्यानुरागासंभवात् । चैतन्यमपि तथा निष्क्रम्य सन्निकृष्यत इति चेन्न, अमू-

---

कदाचित् कञ्चित्प्रकाशयति कञ्चिन्नेति व्यवस्था दुर्घटेति भावः । 'अन्यदा' त्विति । अन्यदा—अनित्यत्वे ज्ञानस्येष्यमाणे तु तदर्थसन्निकृष्टेन्द्रियादिजनितं ज्ञानं तदर्थविषयकमिति व्यवस्था घटत इत्यर्थः । अर्थसन्निकर्ष इन्द्रियस्य संयोगादिलक्षणः, लिङ्गस्याविनाभावः, पदस्य च शक्त्यादिः ।

अत्र नित्यत्वेऽपि ज्ञानस्येन्द्रियादेर्ज्ञानप्रसरणोपयोगित्वं कालावच्छेदप्रतीतेः तत्प्रसरणकादाचित्कत्वनिबन्धनत्वं च सिद्धान्त्यभिमतं दूषयितुमनुवदति पूर्वपक्षी 'स्यान्मत'मिति । चैतन्यम्—ज्ञानम् । अनुरज्यमानं-संवध्यमानम् । तत्प्रकाशतया—तत्प्रकाशकतया । तदीयत्वेन—तद्विषयकत्वेन । व्यवतिष्ठते—प्रतिविषयं व्यवस्थितं भवति । 'अनुरागस्ये'ति । इन्द्रियार्थसन्निकर्षाद्यन्वयव्यतिरेकानुविधानं ज्ञानस्यार्थसंवन्धनिष्पादने उपक्षीणम् । संवध्यैव हि विषयप्रकाशकत्वम् । संवन्धस्य कादाचित्कतया च तद्विशिष्टस्य ज्ञानस्यार्थप्रकाशकस्यातीतत्वादिप्रतीत्युपपत्तिः । सतोऽपि ज्ञानस्यार्थसंवन्धाभावेनार्थाप्रकाशादेव स्वापाद्युपपत्तिरित्यन्यथासिद्धत्वं ज्ञानानित्यत्वसाधकानामिति भावः । दूषयति 'तदस'दित्यादिना । 'अर्थान्तरे'ति । प्रसरणेनेन्द्रियस्यार्थेन सन्निकर्षे संभवत्यपि ज्ञानस्यार्थेन सन्निकर्षस्यायोगादित्यर्थः । शङ्कते 'चैतन्यमपी'ति । इन्द्रियद्वारा चैतन्यमपि निष्क्रम्यार्थेन सन्निकृष्यत इति शङ्कितुराशयः । परिहरति 'अमूर्तस्ये'ति । अमूर्तस्य—अस्पर्शस्य । अमूर्तस्याप्यविभुत्वान्निष्क्रमणादि

र्तस्याकाशस्येव निष्क्रमणप्रवेशाद्यनुपपत्तेः। गुणश्च चैतन्यं गुणिनमपहाय कथमन्यतो यास्यति? न चार्थोऽन्तः प्रविशति। स हि बहिर्देशसंबद्धः सर्वलोकप्रत्यक्षः। जात्यादिषु चानुपपत्तिः तुल्यैव।

( इति ज्ञाननित्यत्वपक्षे ज्ञानार्थसन्निकर्षानुपपत्तिनिरूपणम् )

अथोच्येत–द्वेधा खल्वयं प्रत्यगर्थोऽवतिष्ठते बहुलो विरलश्च। तत्र बहुलः प्रत्यक्चेतनक्षेत्रज्ञादिपदपर्याय आत्मा। विरलस्तु चैतन्यज्ञानादिपदाभिधेयः प्रत्यगर्थतन्त्रतया गुण इत्युपचर्यते तेजोवत्, यथा बहुलं तेजः प्रदीपोऽग्निरिति, विरलं तु प्रभा ज्योतिरिति। अतो विरलात्मप्रदेशतया चैतन्यस्यालोकस्येव गमनं संयोगादिकमुपपद्यत इति; इदमनुपपन्नम्; निरवयवस्यामूर्तस्यासङ्गस्याऽऽत्मनो

---

घटते ज्ञानस्य। आकाशस्य तु विभुत्वान्नेति चेत्तत्राह 'गुणश्चे'ति। गुणत्वाद्गुणिनमात्मानमन्तःस्थमपहाय बहिर्निष्क्रमणं ज्ञानस्य न घटत इत्यर्थः। ननु जातिर्यथा गोत्वादिर्गवि कस्यांचिन्नष्टायां ततो निष्क्रम्य अन्यां चोत्पद्यमानामभिसङ्गच्छते धर्मभूताऽपि, एवं ज्ञानमपि बहिः संबध्यतामित्यत्राह 'जात्यादिषु चे'ति। जात्यादिष्वित्यादिपदेन गन्धादिर्ग्राह्यः। गन्धस्याश्रयं विना न प्रसरणम्। जातौ त्वसामञ्जस्यमेव पराभिमतायामिति भावः।

अथात्र कस्यचिन्मतमुपक्षिपति 'अथोच्येते'ति। बहुलः–निबिडावयवसंश्लेषवान्। विरलः–शिथिलावयवसंश्लेषवान्। प्रत्यगर्थतन्त्रतया–प्रत्यगर्थैकदेशत्वेन प्रत्यगर्थाधीनस्थितिकत्वेन प्रत्यगात्मपरतन्त्रतया। विरलात्मप्रदेशतया–विरलो य आत्मप्रदेश आत्मांशस्तस्य भावस्तत्ता, तया। आत्मप्रदेशतया नात्मविच्छेदः। विरलतया च प्रसरणाद्युपपत्तिरिति भावः। एतन्मतं प्रतिक्षिपति 'इद'मिति। 'निरवयवस्ये'ति। सावय-

वहुलविरलतादिधर्मानुपपत्तेः। यदि हि सावयवत्वमूर्तत्वानित्यत्व-संसर्गित्वादिकमपि धर्मजातमात्मन्यनुमन्वीमहि, तत एवमङ्गीकुर्वीमहि। नच तदनुमन्तुमुचितम्, अचेतनत्वापातादित्यलमनेनाऽऽर्हतमतानुकारदूषितेनाऽऽत्मवादेन।

( इति ज्ञानस्यात्मविरलप्रदेशत्वमतदूषणम् )

अथ मतम्—आत्माऽयमनवयवेन सर्वतः सर्वार्थावभासनसमर्थ-चैतन्यानुवन्धः सर्वव्यापी। अथ च न सर्वमस्य परिस्फुरति, तमोगुण–प्रतिवन्धात्। सत्त्वोत्कटैस्तु करणैः स्वकस्वकपाटवानुसारेण पाटिते तु तमसि ते तेऽर्थाः प्रतिभासन्ते। अतोऽन्तरेणापि ज्ञानार्थयो-

---

वत्वमन्तरा वहुलत्वं विरलत्वं च न घटते। सावयवत्वे च स्पर्शवत्त्वसलेपत्वविकारित्वानित्यत्वाचेतनत्वानि शरीरवदात्मनः प्रसज्यन्त इति भावः। 'आर्हते'ति। जैना हि सत्त्वासत्त्वादिविरुद्धजातमेकस्मिन्नैकदैवाभ्युपगच्छन्ति। तदनुकरणात्तन्मतदूषणमेवात्राऽपि। जैनानुकरणं चात्मनि वहुलत्वविरलत्वादिविरुद्धधर्मद्वयसमावेशोपगमादिति बोध्यम्।

मतान्तरमुत्थापयति 'अथ मत'मिति। आत्मनः सदा सर्वभासकज्ञानस्य विभुत्वमेतन्मते। ज्ञानत एव प्रकाशसंभवादात्मनः स्वप्रकाशत्वे चानादरः। अनवयवेन—कार्त्स्न्येन सदा सर्वार्थप्रकाशनसमर्थज्ञानवान् विभुरात्मेत्यर्थः। तर्हि कुतो न सदा सर्वभानम्? तत्राह 'अथ चे'ति। 'तमोगुणे'ति। यथा चक्षुरुद्घाटितमपि नान्धतमसे घटादि प्रकाशयति, एवं सदपि चैतन्यं तमोगुणावृतमर्थं न प्रकाशयतीत्यर्थः। नन्वेवं कस्याप्यर्थस्य कदापि भानं न स्यादितिचेत्तत्राह' सत्त्वोत्कटैस्त्वि'ति। प्रदीपादिनाऽन्धकारस्येव सत्त्वोद्रिक्तैरिन्द्रियैः सत्त्वोद्भवतारतम्येन महत्यल्पे वा तमसि निरस्ते ज्ञानं तं तमिन्द्रियार्थं प्रकाशयत्यल्प-

र्निष्क्रमणप्रवेशावुपपद्यत एवार्थविशेषोपरागः संविद् इति। एव-मप्यर्थातिशयमात्रहेतुत्वादिन्द्रियलिङ्गादेर्ज्ञानस्येव ज्ञापकत्वं न स्यात्, ज्ञानहेतुत्वाभावात्। न चार्थप्रकाशस्य ज्ञानत्वम्, प्रकाशमान-तयाऽर्थस्यापि ज्ञातृत्वप्रसङ्गात्। यदाहुः 'आत्मधर्मस्य चैतन्यस्य विषयेण संयोगो ज्ञानमित्युच्यते' इति; तत्रापि संयोग-स्योभयनिष्ठतया स एव प्रसङ्गः। अनुभवविरोधश्च—अहमिदमिदानीं जानामि, नेदानीमित्यात्मसमवायिनोरेव ज्ञानभावाभावयोरनुभ-

---

मधिकं वेत्यर्थः। गाढान्धकारे चक्षुषो न सत्त्वोत्कट्यमिति च फल-वलात्कल्पनीयमिति हृदयम्। मतमेतन्निरस्यति 'एवमपी'ति। अर्थगत-प्रकाशलक्षणातिशयमात्रे ज्ञानस्येवेन्द्रियादेर्हेतुत्वं स्यात्, नार्थज्ञाने, ज्ञानस्य नित्यत्वात्। प्रकाशहेतुत्वमपि साक्षात् ज्ञानस्यैव। प्रतिवन्धक-निरसनेन कथञ्चिदेवेन्द्रियादेः। तथा च पक्षेऽत्र ज्ञानकरणत्वं भज्येते-न्द्रियादेरिति भावः। नन्वस्त्वर्थनिष्ठः प्रकाश एव ज्ञानम्। तद्धेतुत्वा-ज्ज्ञापकत्ववाचोयुक्तिरिन्द्रियादेरिति शङ्कते 'न चार्थे'ति। खण्डयति 'प्रकाशमानतये'ति। प्रकाशस्य ज्ञानत्वे तदाश्रयस्य घटादेर्ज्ञातृत्वप्रसङ्ग इत्यर्थः। प्रसङ्गान्मतान्तरमप्युपक्षिपति 'यदाहु'रिति। चैतन्यस्यात्म-धर्मस्यार्थेन संयोगो ज्ञानम्। स चेन्द्रियाधीन इति ज्ञापकत्वमिन्द्रियादे-रुपपद्यत इति हार्दम्। अत्रापि पूर्वपक्षोक्तदूषणमतिदिशति 'तत्रापी'ति। संयोगस्य द्विनिष्ठतया चैतन्यसंयोगस्य ज्ञानत्वे तदाश्रयस्य घटादेरपि ज्ञातृत्वप्रसङ्ग इत्यर्थः। प्रकाशस्यार्थनिष्ठस्य चैतन्यार्थसंयोगस्य वा ज्ञानत्वे दूषणान्तरमाह 'अनुभवे'ति। ज्ञानतदभावयोरात्मनिष्ठतयैवानु-भववलात्तु विषयसंवद्धं नित्यं चैतन्यमेव ज्ञानमित्येष्टव्यम्। सत्येवं ज्ञापकत्वमिन्द्रियादेर्न स्यादिति दूषणं स्थितमेव पक्षेऽत्र। न च मास्तु

त्वात् । अविकृतप्रकाशहेतुकिरणसंहतावप्यहिममहसि प्रकाशकत्वप्रख्योपाख्यानवदुपपद्यत इति मा वोचः । तत्र हि गभस्तीनां द्रव्यतयाऽऽकुञ्चनप्रसारणद्रव्यान्तरसंयोगविभागादेः संभवादुपपद्यते व्यवस्थोपलब्धिः । चैतन्यं तु गुण इति न तथा व्यवस्थामर्हति ।

( इति नित्यसर्वगतज्ञानवदात्मवादनिरासः )

अथोच्येत—द्विधा हि ज्ञानमात्मनः, स्वस्मिन्नन्यत्र च । तत्राद्यमुदयास्तमयरहितमात्मस्वरूपप्रयुक्तमनवरतमनुवर्तते । इतरत्तु तत्तदर्थसंबन्धीन्द्रियाद्यागन्तुकहेतुभेदायत्तात्मलाभं तत्तद्भावाभावानुविधायि तत्तदर्थप्रकाशतयोदीयते लीयते च । तदपेक्षयैव स्वाप-

---

ज्ञापकत्वं तस्येति वाच्यम् । इन्द्रियसन्निकर्षादिनैवार्थप्रकाशोपपत्तेर्मास्तु चैतन्यमित्यपि प्रसङ्गात् । अनुभवानुरोधाज्ज्ञानमेष्टव्यमिति चेत्तुल्यम् । इन्द्रियादेर्ज्ञापकत्वमपि ह्यनुभवसिद्धमिति भावः । ननु सर्वदा सर्वार्थप्रकाशनसमर्थकिरणमालिनि दिनकरे इदानीमिदं प्रकाशयति, न तदानीमिति कादाचित्कप्रकाशकत्वप्रतीतिव्यवहारवन्नित्यचैतन्यवत्यात्मन्यपि प्रकाशकत्वव्यवस्थोपपद्यत इति शङ्कामनुवदति 'अविकृते'ति । परिहरति 'तत्र ही'ति । द्रव्यभूतस्य किरणस्य सङ्कोचविकासशालिनोऽर्थसंबन्धकादाचित्कत्वसंभवेऽपि अद्रव्यस्य चैतन्यस्य नित्यस्य विभ्वात्मसमवेतस्य सर्वगतस्य विषयसंबन्धो न घटते कादाचित्कः । सति तु विषयसंबन्धे नित्ये सदा विषयप्रकाशोऽप्यवर्जनीय इति भावः ।

मतान्तरमुत्थापयति 'अथोच्येते'ति । नित्यमेकमात्मनो धर्मभूतं ज्ञानमात्मस्वरूपमात्रविषयकम् । अनित्यानि पुनर्विषयज्ञानानीष्यन्त आत्मनि । तानि चेन्द्रियार्थसन्निकर्षादिजनितानि । विषयज्ञानाभावादेव स्वापाद्युपपत्तिरिति नित्यानित्यज्ञानभेदाभ्युपगमपक्षोऽयम् । अत्रापि

जागराद्यवस्थाव्यवस्थापि सङ्गंस्यत इति । उच्यते । अभ्युपगच्छेमाप्येवम्, यदि नित्यमात्मनि ज्ञानमस्तीत्यत्र किमपि साधनमुपलभेमहि ।

ननु अङ्गीकृतस्तावत् जाग्रदवस्थायां सर्वदाऽऽत्मानुभवः । स्वापादिषु चाऽनुमीयते, तात्कालिकस्य विषयज्ञानाभावस्योत्तरोत्तरकालं परामृश्यमानत्वात् । यत्कालीनोऽभावः परामृश्यते तत्कालीनेन तदाश्रयस्वरूपज्ञानेनापि हि भाव्यम्; मध्याह्नकालपरामृश्यमान इव प्रातस्समयपरिदृष्टतटाकतीरादिवृत्तिनि कुञ्जराद्यभावे । यत्कालीनाभावाश्रयतया यः परामृश्यते स तत्कालीनस्वरूपानुभववान्, यथा प्रातरनुभूततटाकतीरादिः । स्वापादिकालिकार्थानुभवाभावाश्रयतया चायमात्मा परामृश्यते । अतस्तात्कालिकस्वरूपानुभववा-

---

न स्वप्रकाशत्वमिष्यत आत्मनः । एतत्प्रतिवक्ति 'उच्यत'इति । आत्माश्रितमात्मविषयकं च नित्यमेकं ज्ञानमस्तीत्यत्र न प्रमाणं किञ्चिदस्तीत्याशयः ।

आत्मप्रकाशस्य स्वापकालीनस्य ज्ञानमन्तराऽनुपपत्तेः स्वापे ज्ञानमात्मगोचरमेषितव्यम् । तच्चाकरणकत्वान्नित्यमेव सेत्स्यतीत्याशयवान् स्वापे आत्मप्रकाशं तावत् साधयति 'ननु' इति । 'स्वापे'ति । आत्मानुभव इत्यनुषञ्जनीयम् । अत्र वाक्ये प्रतिज्ञा विवक्षिता । हेतुवाक्यं 'तात्कालिकस्ये'ति । उत्तरोत्तरेति दिनभेदाभिप्रायम् । स्वापोत्तरकालमित्यर्थः । उदाहरणं 'यत्कालीनाभावे'ति । व्याप्त्युपपादकं वाक्यं मध्ये । उपनयः 'स्वापादिकालिके'ति । निगमनम् 'अत' इति । अत्रायं प्रयोगः सङ्कलनीयः-आत्मा स्वापकालिकस्वरूपप्रकाशवान्, स्वापकालिकज्ञानाभावाश्रयतयाऽनुसन्धीयमानत्वात्, यो यत्कालीना-

निति। मैवम्, अनैकान्त्यात् प्रातस्तत्र नाहमासमिति स्वाभावभूमितया प्रतीतेन प्रातरनवगतगिरितटाकादिना। अभावप्रतिपत्तिसमये प्रतिपिपत्सिताभावसमकालवर्तिनः तदाश्रयस्वरूपस्यावगत्या, विद्यमानत्वे तत्कालतयाऽवगमप्राप्तस्य प्रतियोगिनोऽनवगत्या च भवितव्यमभावज्ञानस्येत्येतावत्। अन्तरेणापि स्वापकालीनमात्मानुभवमिह तदुभयमुपपद्यते, प्रत्यभिज्ञयैव प्रबोधे स्वरूपसिद्धेः; जाग्रदनु-

---

भावाश्रयतयाऽनुसन्धीयते स तात्कालिकानुभवगोचरः, यथा प्रातःकालिकगजाभाववत्तयाऽनुसन्धीयमानः प्रातः परिदृष्टस्तटाकतीरादिरिति। एतद्दूषयति 'मैव'मिति। 'अनैकान्त्या'दिति। प्रातःकालेऽननुभूते मध्याह्ने दैवात्स्मृते यस्मिन् गिरितटाकतटादौ प्रातस्तद्वृत्तितया स्वस्याप्रतिसन्धानबलात्स्वाभावः प्रातःकालिकः परामृश्यते, तदवच्छेदेन व्यभिचार इत्यर्थः। ननु तात्कालिकाश्रयप्रतीत्यभावे तात्कालिकाभावाश्रयतया तस्य प्रतिसन्धानं कथं घटत इत्यत्राह 'अभावे'ति। अवगमप्राप्तस्य—प्रतिपत्तियोग्यस्य । यत्कालीनयदभाववत्तयाऽनुसन्धीयमानत्वं यस्य, तत्र प्रत्यनुसन्धाने तस्य तत्कालावस्थितिरेवापेक्षिता। प्रतीतिस्त्वभावप्रतिपत्तिसमय एवापेक्ष्यते । तथा, तात्कालिकतद्वृत्तितया प्रतिपत्तियोग्यस्य प्रतियोगिनः तथाऽप्रतिपत्तिश्चाभावप्रतिपत्तावपेक्ष्यते । यत्कालीनोऽभावः परामृश्यते तत्काले आश्रयप्रतीतिरस्तु मा वा । सा तु नापेक्षिता। तथा च न स्वापे आत्मानुभवसिद्धिः 'एतावन्तं कालं न किञ्चिदहमज्ञासिष'मित्यादिप्रतिसन्धानेनेति भावः। 'अन्तरेणापी'ति। इह-अभावप्रतिपत्तिसमये । तदुभयम्—स्वापकालिकात्मस्थितेः प्रबोधकालेऽवगमः, प्रतियोगिनः संवेदनस्य स्वापकालिकत्वेनास्मरणं च । प्रत्यभिज्ञयैव—सुखमहमस्वाप्समित्यादिप्रत्यभिज्ञयैव स्वापकालिकस्यात्म-

भवस्येव पटीयसः स्वापेऽपि सतोऽनुभवस्य स्मर्तव्यस्य सतः तदानीमस्मरणाच्च ।

सुखमहमस्वाप्समित्यादिवृत्तयश्च तात्कालिकदेहेन्द्रियलाघवपाटवादिपर्यालोचनपूर्विकाः न स्मृतयः, जातिवेषसंस्थानादिष्विव । तेऽपि हि परामृश्यन्ते, एवंजातीयोऽहमीदृशेन वेषेणानेन संस्थानेनात्रेयन्तं कालमस्वाप्समिति । अपिच स्मृतित्वेऽपि जाग्रदवस्थायामिव निद्रालक्षणया प्रमाणविपर्ययादिवृत्त्यभावकारणतमोगुणालम्बनया प्रतीत्या तत्कालप्रसिद्धस्याऽऽत्मनः स्मरणम्, नतु

---

स्वरूपस्य प्रबोधकालेऽवगम उपपद्यते । पटीयसः—स्फुटप्रकाशस्यानुभवस्य स्वापे सत्त्वे तस्य स्मरण भवेत्प्रबोधे । अस्मरणाच्च तस्य तदभावस्य स्वापकालिकस्यात्मनि प्रबोधे परामर्श उपपद्यत इति यावत् ।

ननु स्वापे सुखत्वेनात्मनो भानमन्तरा सुखमहमस्वाप्समिति प्रतिसन्धानस्यानुपपत्त्या स्वापे आत्मानुभव एषितव्य इति चेत्तत्राह 'सुख'मिति । तात्कालिकेति—प्रबोधकालीनेत्यर्थः । स्वापसुखांशेऽनुमित्यात्मकं 'सुप्त एव प्रबुद्ध' इत्यादिप्रत्यभिज्ञाक्षिप्तस्वापकालिकात्मसत्तागोचरं चेदमनुसन्धानमिति भावः । 'जाती'ति । स्वापे जात्यादेः प्रतिभासाभावेऽपि यथा तदंशभानमानुमानं निरुक्तानुसन्धाने तद्वदित्यर्थः । 'अपिचे'ति । सत्त्वेऽपि वा स्वापेऽज्ञानसाक्षित्वेनात्मनः प्रतिभासस्य न तस्यात्मस्वरूपप्रयुक्तत्वम् । किन्त्वनित्यतादात्विकाज्ञानगोचरानुभवप्रयुक्तत्वमेवेति न स्वप्रकाशत्वं सिध्यत्यात्मनः, न वा नित्यमात्मनि ज्ञानमिति हार्दम् । ननु अज्ञानगोचरवृत्तेः स्वाप उपगमे

---

टि०—१. अज्ञानं–ज्ञानविरोधि तमः ।

सहजसंवेदनसिद्धस्य, स्वप्रकाशस्य वा; प्रमाणाभावात् । निद्राऽपि प्रमाणविपर्ययादिवद्वृत्तिविशेष इति तत्रभवान् पतञ्जलिः; यदाह "अभावप्रत्ययालम्बना वृत्तिर्निद्रा" इति । प्रयोगश्च-विमत्याक्रान्ताऽऽत्मस्वरूपसिद्धिः विषयानुभवनिबन्धना आत्मस्वरूपसिद्धित्वात् जाग्रतस्तात्सिद्धिवत् इति, तथा आगन्तुकं ज्ञानम् आत्मविशेषगुणत्वात् सुखादिवत् । न च सुखदुःखादयो नात्मगुणाः, अप्रसिद्धाश्रयान्तरत्वे सति अहंप्रत्ययसामानाधिकरण्येन प्रकाशमानत्वात् ज्ञानवदिति ।

( इति ज्ञानस्यानित्यत्वपूर्वपक्षः )

---

स्वापव्याघातः । वृत्तिसामान्याभावस्यैव स्वापत्वादित्यत्राह 'निद्राऽपी'ति । 'अभावप्रत्यये'त्यादियोगसूत्रम् । प्रमाणविपर्ययादिज्ञानवृत्त्यभावहेतुभूततमोगोचरवृत्तिर्निद्रेत्यर्थः । तमोवृत्तेर्निद्रात्वकीर्तनात् आत्मतमोऽतिरिक्तविषयज्ञानसामान्याभावस्यैव स्वापरूपत्वमेष्टव्यमिति भावः । विषयज्ञाने सत्येव तद्वत्तयाऽऽत्मनोऽनुभवो नान्यदेत्यत्र प्रयोगमाह 'विमत्याक्रान्ते'ति । नित्यानित्यज्ञानप्रयुक्तत्वस्वरूपप्रयुक्तत्वविप्रतिपत्तिविषयः स्वापकालिकात्मस्वरूपप्रकाश इति धर्मिनिर्देशार्थः । विषयानुभवनिमित्तत्वसाधनेन चागन्तुकत्वं तस्य फलति । ज्ञानस्यानित्यत्वे च प्रयोगः 'आगन्तुक'मिति । ज्ञानमागन्तुकमित्यन्वयः । दृष्टान्ते हेत्वसिद्धिं परिहरति 'न च सुखे'ति । अहंप्रत्ययसामानाधिकरण्येन--अहंप्रत्ययविषयाहमर्थवृत्तित्वेन । अहमर्थधर्मतया प्रतीयमानस्यापि स्थौल्यादेः शरीरमाश्रयान्तरं प्रसिद्धतरमिति अप्रसिद्धाश्रयान्तरत्वे सतीति हेतुविशेषणं कृतम् । अपरोक्षत्वाच्च सुखादेर्नेन्द्रियधर्मत्वं संभवतीति च हार्दम् ।

अत्राहुरात्मतत्त्वज्ञाः स्वतश्चैतन्यमात्मनः ।
स्वरूपोपाधिधर्मत्वात्प्रकाश इव तेजसः ॥ २४ ॥
चैतन्याश्रयतां मुक्त्वा स्वरूपं नान्यदात्मनः ।
यद्धि चैतन्यरहितं न तदात्मा घटादिवत् ॥ २५ ॥
चितिशक्त्या न चात्मत्वं मुक्तौ नाशप्रसङ्गतः ।
( बोधेनैवान्यतो भेदे व्यर्था तच्छक्तिकल्पना ) ॥ २६ ॥

---

एवं विषयप्रकाशकादाचित्कत्वेनात्मनो धर्मभूतं ज्ञानमागन्तुकमेव। आत्मस्वरूपप्रकाशोऽपि न सर्वदा, किन्तु विषयज्ञानकाल एव ज्ञानतः, न स्वतः इति प्रत्यवस्थानप्रसङ्गे ज्ञानस्य नित्यत्वं तावद्व्यवस्थापयति 'अत्राहु'रिति । आत्मस्वरूपप्रयुक्तं ज्ञानम् । तच्चात्मनो नित्यत्वान्नित्यमेव । आत्मस्वरूपनिरूपकधर्मत्वाच्च ज्ञानस्य न ज्ञानरहितमात्मनः स्वरूपं व्यवतिष्ठेत प्रकाशरहितमिव तेजः । अतो मुक्तावपि ज्ञानवत्त्वमुपेयम्, ज्ञानशून्यस्यानात्मत्वादिति श्लोकद्वयार्थः । ननु ज्ञानाभावेऽपि ज्ञानशक्तिमदात्मस्वरूपं मुक्तिकाल इत्यत्राह 'चितिशक्त्ये'ति । लुप्तमुत्तरार्धमस्य । तत्स्थानेऽस्मदीयं पूरणं ( ) एतच्चिह्नान्तर्निवेशितम् । नित्यस्य स्वरूपयोग्यत्वे फलावश्यंभावनियमाज्ज्ञानशक्तिमत्त्वे मुक्तस्य कदाचिज्ज्ञानमुदियात् । मुक्तौ कदाऽपि ज्ञानस्यानुदयात्तच्छक्तिरपि तदा नष्टैवेति आत्मनाश एव प्रतिज्ञातो भवेत् । स्वरूपनिरूपकधर्मनिवृत्तौ स्वरूपनिवृत्तेरवश्यम्भावादित्यर्थः । ननु ज्ञानस्य ज्ञानशक्तेर्वा नात्मस्वरूपनिरूपकत्वम्। किन्तु आगन्तुकमपि तदात्मन एवेष्यते धर्मभूतं न घटादेरित्यात्मानात्मव्यवस्थोपपद्यत इति चेत्; मैवम्; ज्ञानस्यात्मस्वरूपनिरूपकधर्मतायाः स्थापयिष्यमाणत्वात्, जडात्मवादस्य त्रय्यन्तविरुद्धत्वेन सद्भिरनादरणीयत्वाच्चेति हार्दम् ॥ २४ ॥ २५ ॥ २६ ॥

बुद्धिसुखदुःखादिनिःशेषवैशेषिकात्मगुणात्यन्तिकोपरमलक्षणो हि मोक्षः कणभक्षाक्षचरणमते। न चात्यन्तलुप्तकार्यं वस्तु तत्कार्यजननशक्तमित्यत्र किंचित्प्रमाणं क्रमते। देहादिविशिष्टसंबन्धितया दृश्यमानसुखदुःखज्ञानादिकार्यं विशिष्टवर्तिनीमेवात्मोत्पादशक्तिं कल्पयति, धूम इवार्द्रेन्धनसंबन्धिनि धूमध्वजे स्वोत्पादनसामर्थ्यम्, व्रीह्यङ्कुर इव च सतुषतण्डुले। अपि च बोधे सत्येवात्मनोऽनात्मव्यवच्छेदे संभवति कृतं तच्छक्त्याश्रयणेन।

न चैवं सति बोध एव परमात्मेति युक्तम्, तस्याऽऽश्रयप्रतियोगिसापेक्षस्वरूपत्वादात्मनश्च तद्विपरीतस्वभावत्वात्; साक्षाच्च चेतयितुरहमर्थस्य स्फुरणात्; अनुभवतर्कागमबलेन चितिमत आत्मभावस्यानन्तरमेव प्रपञ्चितत्वाच्च। नच चितिमात्रात्मवादेऽपि तस्या-

---

'चितिशक्त्ये'त्यादि विवृणोति 'बुद्धी'त्यादिना। पाषाणकल्पस्य मुक्तात्मनोऽचिद्व्यावर्तकचिच्छक्त्याश्रयणं व्यर्थमित्याह 'अपि चे'ति। लुप्तार्थविवरणं स्यादिदम्।

ननु नित्यत्वे ज्ञानस्याऽऽत्मत्वमपीष्यतां तस्यैवेति शङ्कामनूद्य परिहरति 'न चैवं सती'ति। परम्—वरम्। 'तस्ये'ति। विषयाश्रयसापेक्षस्य ज्ञानस्य तदनपेक्षस्वतन्त्रात्मस्वरूपत्वमयुक्तमित्यर्थः। किंच, कल्पनायामेव लाघवगौरवचर्चावसरः। ननु स्फुटप्रतिपन्ने बोद्धात्मनीत्याह 'साक्षाच्चे'ति। अहं जानामीति ज्ञात्रात्मप्रत्यक्षस्य भ्रमत्वमिति चेत्तत्राह 'अनुभवे'ति। अनन्तरमेव-अव्यवहितपूर्वमेव। ज्ञातुरात्मत्वसमर्थन इति यावत्। सत्प्रमाणतर्कानुग्रहात् ज्ञात्रात्मप्रत्यक्षस्याभ्रान्तित्वमेव संमन्तव्यमितिभावः। ननु चैतन्यमेवाऽऽत्मा। विषयसंबन्ध एव तस्य बोधो नाम। अतो बोद्धृत्वप्रतिपत्तिरात्मन उपपद्यत इति शङ्कते 'न च चितिमात्रे'ति। विषयचैतन्यसंबन्धस्य बोधत्वाभिमतस्य संयोग-

गन्तुकविषयसंबन्धे बोधत्वमध्यारोप्य बोद्धृत्वसमर्थनं साधीयः, संबन्धस्योभयनिष्ठतयाऽर्थस्यापि बोद्धृत्वप्रसङ्गात् । न च कार्य-कारणभाववद्व्यवस्थितत्वम्, तत्र जनिमतो जनयितुश्च परस्परापेक्षा-नियमलक्षणसंबन्धः । इहापि स एवेति चेन्न, अपेक्षाहेत्वभावात् । किमर्थमर्थः चैतन्यमपेक्षते, चैतन्यं वाऽर्थम् । सिद्ध्यर्थमिति चेत्, कः सिद्ध्यर्थः ? न तावदुत्पत्तिः, तस्या निर्ज्ञातनिमित्तान्तर-त्वात् । घटादयो हि प्रसिद्धमृद्दण्डचक्रभ्रमणादिपर्याप्तनिमित्तान्तर-

---

रूपत्वे तस्य द्विष्ठत्वाद्विषयस्यापि बोद्धृत्वप्रसङ्ग इत्याह 'सम्बन्धस्ये'ति। शङ्कते 'न च कार्ये'ति । यथा कार्यकारणभावस्य हेतुहेतुमदुभयनि-रूप्यत्वेऽपि हेतुहेतुमतोर्व्यवस्था इदमस्य कारणम्, इदं त्वस्य कार्यमिति, एवं चिद्विषयसंबन्धस्य विषयविषयिनिरूप्यत्वेऽपि बोद्धृबोध्यव्यवस्था घटत इति शङ्कितुराशयः । परिहरति 'तत्रे'ति । यद्यपि कार्यस्य कारणस्य च संबन्धः कार्यकारणभावः कथ्यते । परं तु कार्यत्वं कारणनिरूपितं कार्य-निष्ठं स्वपूर्ववर्तिकारणापेक्षत्वलक्षणं स्वप्राक्कालावच्छेदेन कार्यव्यापक-कारणकत्वपर्यवसायि, कारणत्वं च कार्यनिरूपितं कारणनिष्ठं स्वोत्तर-भाविकार्यापेक्षत्वलक्षणं कार्यनियतप्राक्कालवर्तित्वपर्यवसायि भिन्नभिन्न-मेव तत्र प्रविष्टम् । अत्र तु एक एवोभयसमवेतः संयोग इति व्यवस्था दुर्घटेत्यर्थः । यद्यपि संयोगस्योभयनिष्ठत्वेऽपि अनुयोगितासंबन्धेन तस्य चिन्निष्ठत्वाच्चित एव बोद्धृत्वम्, तत्प्रतियोगिनस्तु विषयस्य बोध्यत्वमिति व्यवस्था घटेत, अथापि न चिन्मात्रत्वमात्मनः, किन्तु चित्याश्रयत्वमपि श्रौतत्वादुपेयमेवेति ध्येयम् । चिच्चेत्ययोरपि परस्परापेक्षानियमलक्षण-एव संबन्धोऽस्त्विति शङ्कते 'इहापी'ति । परिहरति 'नापेक्षे'ति । अपे-क्षाया हेतुः प्रयोजनरूपोऽर्थो नास्तीत्यर्थः । तस्यैव विवरणं 'किमर्थ'-

शालिनो न चितिमपि निजजननेऽपेक्षन्ते । निरस्तश्च विज्ञानमात्रवादः । नित्यस्यात्मन उत्पत्त्यर्थमर्थापेक्षेति सुव्याहृतम् । सिद्धिः प्रकाश इति चेत्; किं भोः आत्मा स्वयंज्योतिरप्यर्थाधीनप्रकाशः? यदसौ तदर्थमर्थमपेक्षते । महनीयमिदमात्मवेदित्वम् । प्रकाशश्च न संविदतिरेकी कश्चिदर्थधर्मः संभवतीत्यावेदितम् । संभवन्नप्यसौ न चितिस्वरूपमात्रनिमित्तः, सर्वदा सर्वार्थप्रकाशप्रसङ्गात्। न हि सदा संनिहितसमग्रकारणं कार्यं कदाचिद्भवति । आगन्तुकातिशयाश्रयणे वा नामान्तरेण ज्ञानमेवाङ्गीकृतमिति तद्वानेवात्माऽऽयातः ।

(इति धर्मभूतज्ञानस्य नित्यत्वसाधनम्)

---

मित्यादि । नन्वर्थानां वासनादोषाच्चैतन्य एव कल्पितत्वादधिष्ठानतया चितोऽपेक्षा स्यादेवेत्यत्राऽऽह 'निरस्तश्चे'ति । एवमर्थस्योत्पत्तौ चिदपेक्षां प्रतिक्षिप्य चित उत्पत्तावर्थापेक्षां प्रतिक्षिपति 'नित्यस्ये'ति । नित्यचैतन्यस्यार्थापेक्षोत्पत्तिवचनं व्याहततरमिति भावः । तत्प्रकाशस्यार्थापेक्षां निरस्यति 'किं'मिति । 'महनीय'मित्यादि सोपालम्भम् । अनात्मवेत्तृत्वमेवैवं वक्तुः फलति । अर्थानां भासकस्यात्मज्योतिषः स्वयंप्रकाशत्वादिति भावः । नन्वस्तु प्रकाशेऽर्थानां चिदपेक्षा । तत्राह 'प्रकाशश्चे'ति । संविदेव प्रकाशः । तदर्थं संविदपेक्षा चेदात्माश्रय इति भावः । संविदतिरिक्तप्रकाशपक्षेऽप्याह 'संभव'न्निति । चैतन्यमात्रापेक्षत्वेऽर्थप्रकाशस्य नित्यत्वप्रसङ्ग इत्यर्थः । आगन्तुकधर्मवच्चिदपेक्षत्वे च तस्य ज्ञात्रात्मसिद्धिरप्रत्यूहेत्याह 'आगन्तुके'ति । आगन्तुकातिशयश्च स्वधर्मभूतज्ञानविकासरूप एव । तद्विशिष्टं ज्ञानं बोधः । तदाश्रय आत्मेति न बोधमात्रमात्मेति साम्प्रतमिति भावः ।

नन्वेवमर्थसिद्धिव्यवस्थापकतयाऽभ्युपगतं ज्ञानमागन्तुकं क्रियारूपमिति कथं तदात्मस्वभावः ? । तथाहि-अर्थान्तरगतत्वे सति जनकद्रव्यान्तरं प्रति कार्यत्वादिकेन रूपेणासाधारणो गन्तव्यदेशप्राप्त्यादिर्यं प्रत्यसाधारणः तत्समवेतागन्तुकासाधारणगमनादिक्रियाजन्यो दृष्टः। तादृशी चार्थसिद्धिर्यं पुरुषं प्रत्यसाधारणी तत्समवेततादृशक्रियाजन्येति शक्यमनुमातुम्। मैवम्। अक्रियाजन्येनाभावप्राप्तक्षेत्रादिस्वत्वेन क्षेत्रिणं प्रत्यसाधारणेन क्षेत्रजव्रीह्यादिस्व-

---

नन्वेवमात्मनो बोधस्वरूपत्ववद्बोधस्वभावत्वमपि न संभवति अनित्यस्य बोधस्य नित्यात्मस्वभावत्वायोगात् । अर्थप्रकाशकादाचित्कत्वाय बोधकादाचित्कताया एव मन्तव्यत्वादिति शङ्कते 'नन्वेव'मिति। ज्ञानस्य क्रियात्वमागन्तुकत्वं च साधयितुं सामान्यव्याप्तिं शिक्षयति 'अर्थान्तरे'ति । अर्थान्तरं-ग्रामादि । जनकद्रव्यान्तरं—गन्ता । गन्तव्यदेशप्राप्तिर्ग्रामपुरुषसंयोगः । उभयनिष्ठोऽप्ययं पुरुषप्रवृत्तिमूलत्वेन पुरुषासाधारणः पुरुषनिष्ठागन्तुकगमनक्रियाजन्यो दृष्ट इत्यर्थः । तादधीन्यादिना तदसाधारणार्थान्तरनिष्ठधर्मत्वव्यापकं तन्निष्ठागन्तुकक्रियाजन्यत्वमिति फलितम्। उदाहरणमुक्त्वोपनयनिगमने प्रदर्शयति 'तादृशी'ति। प्रतिज्ञाहेतू अर्थसिद्धौ । अवयवत्रयप्रयोगो वा यथेच्छम् । ज्ञेयनिष्ठश्च प्रकाशस्तत्तत्पुरुषासाधारणः तत्तत्पुरुषीयागन्तुकज्ञानक्रियाजन्यः सिषाधयिषितोऽत्र। व्याप्तिमेव दूषयति 'मैव'मित्यादिना । 'अक्रिये'ति । कुलपरम्परया प्राप्ते क्षेत्रादौ जन्मत एव स्वत्वं यस्य भागिनोऽन्यस्याभावात्, भावे वा दायतः;तत्र तदसाधारणेऽर्थान्तरक्षेत्रादिस्वत्वे तन्निष्ठक्रियाजन्यत्वं नास्तीति व्यभिचार इत्यर्थः । अभावप्राप्तेत्यत्र भावप्राप्तेति स्वभावप्राप्तेति वाऽन्यथा वा पाठः संभाव्यते। अन्यक्रियया दैवेन वा

त्वेन चानैकान्त्यात् । नच निर्व्यापारतया क्षेत्रिणस्तत्राजनकत्वम्; व्यापारकालादिना व्यभिचारात्, तद्भावभावित्वस्य चाविशेषात् । तज्जीवनमेव तत्र जनकव्यापार इति चेत्, ननु तत् सस्यपालनादिसाधारणमिति कथमसाधारणक्रियाजन्यत्वम्? अपि चैवं सति तदेवार्थप्रकाशेऽपि जनकव्यापारोऽस्तु; किमक्लृप्तकल्पनया?। सत्यपि तस्मिन्नर्थो न प्रकाशत इति चेत्, स्वत्वं वा किं यथोदितं सति जीवने जायत एव?। व्रीह्यादिसत्ताऽप्यपेक्ष्यत इति चेत्, इहापीन्द्रियादिप्रत्यासक्तिरिति समानश्चर्चः । अतो यं प्रत्यसाधारणो

---

स्वक्षेत्रे पतितानां वीजानां प्ररूढानां स्वत्वे स्वासाधारणे स्वीयागन्तुकक्रियाजन्यत्वं नास्तीति व्यभिचारमपि प्रदर्शयति 'क्षेत्रिण'मिति। 'तद्भावे'ति। यथा निर्व्यापारस्यापि व्यापारादेरन्वयव्यतिरेकाभ्यां कारणत्वम्, तथा क्षेत्रिणः सत्त्व एव तन्निरूपितं क्षेत्रादिस्वत्वं सिध्यतीति तत्र तत एव निर्व्यापारस्यापि क्षेत्रिणो जनकत्वं सेत्स्यतीति भावः। ननु क्षेत्रिणो न निर्व्यापारत्वम्, किन्तु जीवनमेव व्यापार इति शङ्कते 'तज्जीवनमेवे'ति। परिहरति 'ननु त'दिति । क्षेत्रिणो जीवनं हि सस्यरक्षणादिसाधारणकारणम् । न तु क्षेत्रादिस्वत्वेऽसाधारणकारणम् । तथा चासाधारणागन्तुकक्रियाजन्यत्वानुमानेऽनैकान्त्यमेवेति भावः। ननु तद्व्यापारजन्यत्वमेव साध्यते । न त्वसाधारणक्रियाजन्यत्वम्। नातो व्यभिचार इति चेत्तर्ह्यर्थान्तरमित्याह 'अपि चैव'मिति। तदेव वोद्धुर्जीवनमेव। 'कि'मिति। आगन्तुकज्ञानकल्पनाऽपार्थेति भावः। 'इहापी'ति। इन्द्रियार्थसन्निकर्षादिसहकारिसम्पत्तौ वोद्धुर्जीवनमेवार्थप्रकाशे जनकमस्त्विति भावः। जीवनस्याप्युत्तरोत्तरकालसत्तालक्षणस्य न क्रियारूपत्वमिति न तद्व्यापारजन्यत्वमपि साध्यम् । किन्तु तदसाधारणधर्मजन्यत्वमेवेत्युप-

यथोदितधर्मः तदीयासाधारणधर्मनिमित्त इत्येतावत्। स चेष्यत एवात्मनश्चैतन्यं रवेरिव तेजस्वित्वम्।

न च हेतुभेदानुविधायितया, जानाम्यज्ञासिषमित्यादिकालावच्छेदप्रतीतेर्गमनादेरिव ज्ञानस्यागन्तुकत्वमनुमेयम्; आदित्यप्रकाशेनानैकान्त्यात्। अस्ति हि तत्रापीमं देशमादित्यः प्रकाशयति प्राचीकशत् प्रकाशयिष्यतीति प्रतीतिः। स्वारसिकत्वेऽप्यादित्यप्रकाशस्य प्रकाश्यदेशसंबन्धकादाचित्कतया अवच्छेदप्रतीतिरुप-

---

संहरति 'अत' इति। अस्त्वेवम्। तावता भवतो लाभः कः ?। तत्राह 'स चेष्यत एवे'ति। अस्मदनिष्टं साधयितुं प्रवृत्तस्य भवतोऽर्थान्तरेण निग्रहणमेवास्माकं लाभ इति भावः। स्वभावप्राप्तक्षेत्रादिस्वत्वे व्यभिचारादेवागन्तुकधर्मजन्यत्वमपि न साधयितुं शक्यत इति चानुसन्धेयम्।

एवमर्थप्रकाशकादाचित्कत्वेन ज्ञानागन्तुकत्वसाधनं दूषितम्। प्रकारान्तरेण च तत्साधनं दूषयितुमनुवदति 'न च हेतुभेदे'ति। ज्ञानमागन्तुकं कालावच्छिन्नतया प्रतीतेः, गमनादिवत्, ज्ञानमिन्द्रियार्थसन्निकर्षादिजन्यं तद्भावाभावानुविधायिभावाभावत्वात् इन्धनादिजन्यपाकादिवदिति प्रयोगद्वयमत्र गर्भितम्। व्यभिचारेणैव दूषयति 'आदित्ये'ति। स्वाभाविकस्याप्यादित्यप्रकाशस्य तत्तत्प्रकाश्यदेशसंबन्धस्य कालत्रयपरिच्छिन्नतया तद्विशिष्टविषयिणी कालपरिच्छिन्नत्वप्रतीतिः न प्रकाशस्वरूपस्य कादाचित्कत्वसाधिकेति शङ्कते 'स्वारसिकत्वेऽपी'ति। स्वारसिकत्वम्—स्वाभाविकत्वम्। 'विशिष्टे विधिनिषेधौ विशेषणमुपसङ्क्रामतः सति विशेष्ये बाधे' इति न्यायेन विशिष्टे कालावच्छेदप्रतीतिर्विशेषणे पर्यवस्यति। अनित्यत्वानुमानं च विशिष्टविषयम्, नतु स्वरूपमात्रविषयम्। तथा च यद्रूपावच्छिन्नस्य कालावच्छेदप्रतीतिः

पद्यत इति चेत्; इहापि तर्हीन्द्रियादिप्रत्यासत्तिसमासादितयोग्यभावोऽनुभाव्यभेदः स्वाभाविकमात्मनश्चैतन्यगुणमवच्छिनत्तीति तदपेक्षयैवेन्द्रियाद्यनुविधानमतीतानागतप्रत्युत्पन्नत्वप्रत्ययप्रयोगौ चोपपद्यन्ते ।

कथं पुनरत्र निर्णयः, मणिद्युमणिप्रकाशादेरिवौपाधिकोऽयं भेदः, न तु गमनपचनादेरिव स्वाभाविक इति? ताद्रूप्येणैव प्रत्यक्ष-

---

तस्यानित्यत्वमेव। स्वरूपमात्रस्य च न कालावच्छेदप्रतीतिरिरिति न व्यभिचार इति भावः । स्वरूपमात्रस्य कालावच्छेदप्रतीतिः पक्षेऽप्यसिद्धेति परिहरति 'इहापी'ति । योग्यभावः—प्रकाशयोग्यता । अवच्छिनत्ति—कालावच्छिन्नत्वं यथा भवेत्तथा स्वसंबन्धेन विशिनष्टि चैतन्यमित्यर्थः। हेतुविशेषानुविधानस्याप्यन्यथासिद्धिमाह 'तदपेक्षयैवे'ति । अर्थसंबन्धापेक्षयैवेत्यर्थः । तथा च प्रथमानुमानस्याप्रयोजकत्वमिति हार्दम् ।

कालावच्छेदादेरौपाधिकत्वं स्वाभाविकत्वं च तत्र तत्र द्रष्टम् । ज्ञाने तस्यौपाधिकत्वनिश्चय एकान्ततः कुत इति पुनः शङ्कते 'कथं पुन'रिति। औपाधिकोऽयं भेदः—भूतभविष्यत्त्वादिभेदो ज्ञानस्य विषयसंबन्धौपाधिकः । 'ताद्रूप्येणैवे'ति । ज्ञानस्य नित्यात्मस्वभावत्वान्नित्यत्वमिति तत्कालावच्छेदप्रतीतेरौपाधिकत्वं सुनिश्चेयमिति भावः । ज्ञानवत्त्वेनैव साक्षात्क्रियमाणत्वादात्मा ज्ञानस्वभाव इत्यर्थः । साक्षात्कारो वृत्तिविशेषः । स चात्मनो ज्ञानवत्त्वेनैवेति यावत् । तेनात्मनः स्वरूपत एव प्रकाशमानस्य स्वापे ज्ञानवत्त्वेनाप्रकाशेऽपि न क्षतिः । न चैवमपि अहं सुखी, अहं दुःखी, अहमिच्छामि, अहं द्विष्यामीत्यात्मनः साक्षात्कारे ज्ञानवत्त्वेनाप्रकाशादसिद्धत्वं हेतोरिति वाच्यम्; तत्राप्यहमिति अनुकूलप्रतिकूलविषयकज्ञानवत्त्वस्योल्लेखात्; सुखादेरपि ज्ञानावस्थाविशेष-

त्वात् । न हि जातुचिदचिद्रूपोऽयमात्मा लोष्टादिवद्दृष्टचरः । यश्च यद्गुणतयैव साक्षाद्भवति, स तत्स्वभावः, मरुदिव स्पर्शगुणतयैवाध्यक्ष्यमाणः । यो यत्स्वभावो न भवति, स तद्विरहेणापि स्वरूपत उपलभ्यते, गमनादिरहिततयेव देवदत्तादिः ।

शरीरवदिति चेन्न, असिद्धत्वात् । स्यादेतत्—यथैव खल्वस्वभावभूतेनापि शरीरेण सध्रीचीन एवायं चेतनश्चकास्ति, तथा चैतन्येनापीति । तन्नैवम्, असिद्धत्वात् । न हि तनुविशिष्टतयैवायं चेतनः परिस्फुरति । योगिनां प्रणिहितमनसामुपरतबहिरिन्द्रियाणां च देहानुसन्धानविरहेणापि अहमिति स्फुटमनुभवात् । जानामीति प्रत्ययः शरीरवर्णसन्निवेशनिर्भासशून्यतया तत्त्वान्तरगोचर इति च

---

त्वाच्च । इच्छादिप्रत्यक्षकाले ज्ञानस्य स्वयंप्रकाशत्वादिच्छाद्यनुभववत्त्वेनाप्यात्मनो भानाच्च ज्ञानवत्त्वेनैवात्मन उपलम्भः सेत्स्यतीति चानुसन्धेयम् । यद्यपि ज्ञानस्यात्मस्वभावत्वादौ श्रुतिरेव जागर्ति । अथापि युक्तिप्रधानत्वात्प्रकरणस्यास्य युक्तिरेवात्र निदर्शिता । शास्त्रं चाग्रे प्रदर्शयिष्यते । 'न ही'ति । अचिद्रूपः-चैतन्यानाश्रयः । शिष्टं स्पष्टम् ।

अत्र शङ्कते 'शरीरवदिती'ति । तद्वत्तयैवोपलभ्यमानत्वं न तत्स्वभावकत्वव्याप्यम् । शरीरवत्तयैवोपलभ्यमानस्याप्यात्मनः शरीरस्वभावकत्वाभावादित्यर्थः । परिहरति 'असिद्धत्वा'दिति । शङ्काग्रन्थस्य विवरणम् 'स्यादेत'दित्यादि । सध्रीचीन एव—सहित एव । परिहारग्रन्थस्य विवरणम् तन्नैव'मित्यादि । शरीरवत्तयैवोपलम्भ आत्मनोऽसिद्धः । योगदशायामवधानदशायां मानसानुभवदशायामपि शरीरं विनैवात्मनो भानात् । तथाच न व्यभिचार इति भावः । योगिप्रत्यक्षे आत्मचिन्तने च देहं विनाऽऽत्मभानमुक्त्वा लौकिकप्रत्यक्षेऽपि

प्रागेवावोचम् । कर्मानुगुण्येन सुरमनुजादिजातीयतया भिद्यमानास्वागमापायिनीषु तनुषु मनस इवैकस्य वर्ष्मणः स्वभावानुवन्धित्वेनाश्रयितुमशक्यत्वात् । लिङ्गस्य पुनरनुवृत्तावपि अप्रत्यक्षत्वान्न व्यभिचारित्वम् ।

( इति ज्ञानस्यात्मस्वभावत्वप्रतिष्ठापनम् )

वोधस्वाभाव्ये पुंसः स्वापमूर्च्छयोः प्रकाशप्रसङ्ग इति चेन्न, विकल्पासहत्वात् । तथाहि–प्रकाश इति पदार्थमात्रसाधारणं बोधजन्यं प्रकटतादिपदपर्यायं धर्ममभिप्रेत्य वाऽयं प्रसङ्गः, अथ वोधमेव, तदविप्रकर्षं वा ? । आद्ये तदभावादेव न प्रसङ्गः । अभावश्च प्रकटित एव संवित्स्वतस्सिद्धिसमर्थनसमये । भावेऽपि तमःप्रति-

---

तदाह 'जानामी'ति । शरीरस्यात्मस्वभावत्वाभावं द्रढयति 'कर्मे'ति । तत्तन्मनुष्यादिशरीरविशेषवत्तयैवोपलम्भश्चात्मनोऽसिद्ध इति च हार्दम् । मनस इवेति वैधर्म्यदृष्टान्तः । मनो यथाऽनुवर्तते न तथा शरीरमेकमिति यावत् । मुक्तावस्थायामपि मनोऽनुवृत्त्याशयेनेदम् । ननु स्थूलशरीरस्य निवृत्तावपि सूक्ष्मशरीरस्य सर्वदाऽनुवृत्तिर्वर्तते । तस्य च नात्मस्वभावत्वमिति तत्र व्यभिचार इति मन्दाशङ्कामपनुदति 'लिङ्गस्ये'ति । अपिनाऽनुवृत्तिरेव नास्ति प्रलये मोक्षे चेति व्यज्यते । लिङ्गशरीरस्यातीन्द्रियत्वाद्धेत्वभावान्न व्यभिचार इति च भावः ।

अत्रेदं वोध्यम्—आत्मधर्मभूतज्ञानस्वरूपं तावन्नित्यमेव । किन्तु सङ्कोचविकासशालिनस्तस्य इन्द्रियादिद्वारकप्रसरणादर्थप्रकाशकत्वमिति पुनरर्थप्रकाशकत्वविशिष्टस्यानित्यत्वमिष्यते । अतो विशिष्टविशेषेणानित्यत्वं स्वरूपतो नित्यत्वं च व्यवस्थापितं तस्यात्रेति ।

अथ नित्यत्वे ज्ञानस्य चतुर्धाऽऽक्षेपमुपक्षिप्य प्रतिक्षिपति 'बोध-

बन्धादप्यनुदयः संभवी । इतरयोरभिमतमेवापादितमित्यदोषोद्भावनम् । बोधस्वाभाव्ये हि पुरुषस्य स्वापादिदशासु च तथाभावोऽभिमत एवेति न हि तदापादनं दोषाय ।

अथ मतम्—स्वापादावपि स्वानुभवसद्भावे जागर इव व्यवहारप्रसङ्ग इति; मैवम्, व्यवहारागोचरत्वात् । कः खल्वात्मनि व्यवहारः? न ह्यसावादातुं हातुमुपेक्षितुं वा शक्यः । व्याहारः प्रसज्यत इति चेत्, किमङ्ग! निर्विकल्पकबालमूकादिवेदनविषयो व्यवह्रियत एव? करणपाटवव्यवजिहीर्षादिसहकारिविरहात्तत्र व्याहारानुदय इति चेत्, समानोऽयं विधिरितरत्रापीति निरनुयोज्यानुयोगः ।

---

स्वाभाव्य' इत्यादिना । ज्ञानस्वभावत्वे पुंसः स्वापमूर्च्छयोः स्वरूपप्रकाशः स्यादिति प्रथमाक्षेपः । प्रकाशपदार्थविकल्पेनैनं परिहरति 'विकल्पे'त्यादिना । ज्ञानातिरिक्तस्य ज्ञानजन्यस्य प्रकाशस्य सत्त्वेऽपि आत्मनि बोधेन तस्याजननं स्वापे तमोगुणप्रतिबन्धाद्गाढान्धकारप्रतिबन्धादिव चाक्षुषस्याजननमिति भावः । 'तथाभाव' इति । बोधवत्त्वमित्यर्थः ।

बोधस्य सत्त्वे स्वाप आत्मनो व्यवहारप्रसङ्ग इति द्वितीयाक्षेपः । तमनुभाषते 'अथ मत'मिति । परिहरति 'मैव'मिति । व्यवहारः कायिको वाचिको वाऽऽपाद्यते । आद्यो न सम्भवतीत्याह 'कः खल्वि'ति । किंशब्दः क्षेपे । 'न ह्यसा'विति । नित्यप्राप्तत्वादात्मस्वरूपस्येति भावः । द्वितीयमनुवदति 'व्याहार' इति । परिहरति 'किमङ्गे'ति । निर्विकल्पकं वाचकशब्दादिविशेषणानुल्लेखि यज्ज्ञानं बालमूकादेः, तत्सत्त्वेऽपि न तद्विषयस्य व्याहरणं दृश्यत इत्यर्थः । तथाच स्वविषयव्याहारव्याप्तिर्ज्ञानस्य नास्तीत्यस्थाने प्रसङ्ग इति भावः ।

स्मृतिप्रसङ्ग इति चेन्न, अवृत्तित्वात्। यद्युच्येत-मूर्च्छादावात्मानुभवाभ्युपगमेऽर्थान्तरानुभव इवैवमहमन्वभूवमिति परस्तात् स्मृतिः प्रसज्यत इति; तन्न, अवृत्तित्वात्। न हि मूर्च्छा प्रस्वापो वा बुद्धिवृत्तिविशेषो दर्शनस्पर्शनादिवत्, येन स्मृतिबीजं संस्कारमादधीयाताम्। किन्तूद्भूतेन तमसोपरतव्यापारेषु करणेषु निर्वृत्तिकसांसिद्धिकबोधस्वरूपेणावस्थानमात्रमात्मनः। न च बोधस्वभावत्वादेवास्य संस्काराधायकत्वम्, अनवरतोपचीयमानसंस्कार-

---

अनुभवे सति स्वाप आत्मनो जागरणे स्मृतिप्रसङ्ग इति तृतीयाक्षेपः। तमनुवदति 'स्मृती'ति। परिहरति 'अवृत्तित्वा'दिति। शङ्काविवरणं 'यद्युच्येते'त्यादि। परिहारविवरणं 'तन्ने'त्यादि। 'न ही'ति। बुद्धिवृत्तिविशेषः—धर्मभूतज्ञानावस्थाविशेषः। स्वापादिकालिकात्मानुभवः स्वभावलक्षण एव, नतु धर्मभूतज्ञानावस्थाविशेषलक्षण इति यावत्। 'येने'ति। ज्ञानवृत्तेरेव स्मृतिबीजसंस्कारजनकत्वमिति भावः। 'किन्तु' इति। स्वापादौ स्वाभाविकधर्मभूतज्ञानवत्त्वेनावस्थानमेवात्मनः, न तु ज्ञानस्य वृत्तय इति भावः। 'न च बोधे'ति। नित्यस्वविषयकबोधस्वभावकत्वादित्यर्थः। धर्मभूतज्ञानं तावत् नित्यमात्मविषयकम्, इन्द्रियार्थसन्निकर्षादिसहकारिसंपत्त्या पुनर्विषयग्राहीति एकदेशिमतेनेदम्। यद्वा बोध एव स्वो भावः स्वरूपम्, तत्त्वाच्चिद्रूपत्वादेवास्य—आत्मनः स्वविषयकसंस्कारजनकत्वं किं न स्यादिति शङ्का। परं प्रकरणवशात्पूर्वोक्तरीत्यैवार्थोऽत्र सुसङ्गतः। अस्य—नित्यबोधस्य। नित्यबोधस्य संस्कारजनकत्वशङ्कां परिहरति 'अनवरते'ति। तथा—सति सामग्रीबलात्प्रतिक्षणं संस्कारोदयसंभवेन संस्कारधाराविश्रमाभावप्रसङ्गः। तथा च क्लेशकर्मविपाकाशयानामात्यन्तिकनिवृत्तिलक्षण-

तयाऽनिर्मोक्षप्रसङ्गात् । अनुभवे च स्वानुरूपसंस्काराधाननिरुद्धे सदृशसंबन्धिदर्शनादिसमुद्बोधितनिजबीजानुसारेण स्मरणमुपजायते। न चेहात्मस्वरूपबोधस्य जातुचिन्निरोधो जन्म वा; नित्यात्मसत्ताप्रयुक्तत्वात् । निमित्तान्तराभावश्चानन्तरमेव व्याकरिष्यते। तदेवमनुवर्तमान एवानुभवे कथं स्मृतिरुदयमासादयेत् ? । य एवाहं पूर्वेद्युरासं स एवाहमद्यापीति स्मृतिसंभिन्नप्रत्ययोऽपि कालावच्छिन्नस्वरूपगोचरः, न स्वरूपमात्रे। अविशदश्च स्वापादौ स्वानुभवो निर्विकल्पकश्च । पटीयसा सविकल्पकेनावगमेन स्मृति-

---

मोक्षस्यासिद्धिप्रसङ्ग इत्यर्थः । नित्यबोधस्वरूपस्य संस्कारजनकत्वे दोषमुक्त्वा निष्प्रयोजनत्वमप्याह 'अनुभवे चे'ति । संस्कारकल्पनं हि अनुभूतचरस्याननुभूयमानस्य प्रतिपत्त्यर्थम् । नित्यानुभव एव जाग्रति कः संस्कारकल्पनाया अर्थ इति भावः । स्वानुरूपत्वम्—अनुभवसमानविषयकत्वम् । निजबीजम्—स्मृतिबीजं, संस्कारः । नन्वात्मविषयिण्यपि स्मृतिर्दृष्टेत्यत्राह 'य एवाह'मिति । स्मृतिसंभिन्नप्रत्ययः—पूर्वकालावच्छेदांशे स्मृतिरूपो वर्तमानकालावच्छेदांशेऽनुभवरूपश्चात्मस्वरूपगोचरः प्रत्ययः । 'कालावच्छिन्ने'ति । आत्मस्वरूपमात्रस्य सदा प्रकाशेऽपि तत्तत्कालाद्यवच्छिन्नस्य वृत्तिग्राह्यतया वृत्तेश्च संस्कारजनकतया निरुक्तप्रत्यय उपपद्यत इत्यर्थः । न स्वरूपमात्रे—न स्वरूपमात्रविषयकः। नित्यात्मबोधस्य संस्कारजनकत्वे बाधकं प्रयोजनाभावं चाभिधाय तस्य स्वापादिकालिकस्य संस्कारजनकत्वासंभवमप्यभिधत्ते 'अविशदश्चे'ति। तमोगुणाभिभवादविशदः, बाह्यान्तरविशेषणानवगाहनान्निर्विकल्पश्चेत्यर्थः । पटीयसा—अनभिभूतेन । स्मृतिबीजं संस्कारः । आधीयते—उत्पाद्यते । अत्रेदं बोध्यम्—यद्यपि सुप्तोत्थितस्य 'सुखमहमस्वाप्स'-

वीजमाधीयत इति च कुतस्तत्प्रसङ्गः । साम्याच्चाननुभवाभिमानः शरीरतद्धारणप्रयत्नाननुसंधानवत् ।

न चाविकृतस्वाभाविकबोधमात्रेणावस्थाने स्वापमोक्षयोरविशेषापत्तिः; क्लेशवासनानां गुणाभिभवस्य चैकत्र भावात्, इतरत्र

मित्यादिप्रतिसन्धानवलात्स्वापकालिकात्मस्वरूपानुभवस्यापि संस्कारजनकत्वमेष्टव्यम् । अथापि एकदेशिमताश्रितवादोऽयम् । अत एवाग्रे 'अस्तु वा' इत्यादिना पक्षान्तरं वक्ष्यति । अनुभवे वर्तमाने तावन्मात्रविषयकस्मृतेरुदयायोगेऽपि प्रत्यवमर्शस्याधिकविषयस्य संस्कारवलादुदये न क्षतिरिति । अधिकमग्रे । ननु सर्वदाऽऽत्मस्वरूपानुभव इत्यनुपपन्नम् । विषयानुभवकाल एव सुखादिनाऽहमर्थप्रकाशस्यानुभवसिद्धत्वादित्यत्राह 'साम्याच्चे'ति । एकाकारेणानुभूयमाने विशेषाकारास्फूर्तेरननुभवभ्रमः । अत्र निदर्शनं शरीरादि । यथा जागरे सदाऽनुभूयमानस्यापि करचरणादिलक्षणस्य शरीरस्यागन्तुकविशेषस्फुरणवेलायामेव विशेषतः प्रतिपत्त्याऽन्यदाऽननुभूयमानतेव, यथा वाऽऽन्तरस्य जागरणे शरीरधारणप्रयत्नस्य सदाऽनुवर्तमानस्यापि बुद्धिपूर्वहस्ताद्युत्क्षेपणकाल एव स्फुटावभासेनान्यदाऽननुभूयमानतेव, तथा प्रकृतेऽपीति भावः । यद्यपि शरीरधारणप्रयत्नस्य जीवनयोनिशब्दितस्यातीन्द्रियत्वमिष्यते तार्किकैः । अथापि अदृष्टत एव जीवनस्योपपत्तेरतीन्द्रिययत्नकल्पनं गुरुभूतम् । जागरे तु प्रयत्नतोऽपि शरीरतदवयवधारणमिष्यते । स च प्रयत्नः प्रत्यक्षयोग्य एव । निद्रायां त्वदृष्टत एव शरीरधारणमिति हार्दमाचार्यचरणानाम् । तत् दृष्टान्तस्यास्य नानुपपत्तिरिति ध्येयम् ।

स्वापेऽपि बोधानुवृत्तौ समाधिमुक्त्योः स्वापाविशेषप्रसङ्ग इत्याक्षेपान्तरमनूद्य परिहरति 'न चाविकृते'ति । अविद्यादिक्लेशः, तमोगुणाभिभवादत्यन्तसङ्कुचितज्ञानत्वं च स्वापे । न हि तदा ज्ञानेन स्वात्म-

तदत्यन्तनिवृत्तेः । असंप्रज्ञातसमाधावपि परमवैराग्यशालिना पटुतरनिरोधसंस्कारेण चरिताधिकारिणा अपवर्गिणा विशेषः ।

( इति ज्ञाननित्यत्वे प्रसक्ताक्षेपाणां परिहरणम् )

कथं पुनर्निद्राया अवृत्तित्वे प्रबुद्धस्य प्रत्यवमर्शाः सुखमहमस्वाप्समित्याद्याः ? न ह्यननुभूतगोचराः स्मृतयः संभवन्ति । सत्त्वसचिवसमुल्लसिततमोगुणानुभवभावितभावनायोनिः खलु सुखमहमस्वाप्सं, प्रसन्नं मे मनः, लघूनि मे गात्राणीति प्रत्यवमर्शः; रजस्तमस्समुद्रेके तु दुःखमहमस्वाप्सं, भ्रमत्यनवस्थितं मे चित्त-

---

प्रकाशोऽपि । मोक्षे तु क्लेशात्यन्तनिवृत्तिः, आवरणनिवृत्त्या नित्यासङ्कुचितसर्वविषयज्ञानता चेति विशेषः । 'असंप्रज्ञाते'ति । संप्रज्ञातेति क्वचित् पाठः । समाधौ च पुंसः परमवैराग्यनिरोधसंस्कारपाटवात्मैकप्रवणमनस्कत्वप्रयुक्तमोक्षोपायसिद्धिकृतः स्वापतो महान् विशेषोऽस्तीति भावः । चरिताधिकारेणेति तु समीचीनः पाठः । कृताधिकारेणेत्यर्थः । अपवर्गिणा—अपवर्गोपधायकेन । कैवल्यावस्थात्मसाक्षात्करणयोग्येनेति यावत् । मनसा इति विशेष्यमध्याहार्यम् । चरिताधिकारिणेति पाठे तु कृतात्मनेत्यर्थः, कृतकृत्येनेति वा । एवं चित्स्वरूपत्वं चित्स्वभावत्वं चोपपादितं प्रसक्ताक्षेपपरिहरणेन ।

अथ स्वापेऽपि अनित्यया वृत्त्यैवात्मनः प्रकाशः सेत्स्यति, कृतं स्वप्रकाशत्वेनेत्यन्तर्निधाय स्वापेऽपि बुद्धिवृत्तिरेष्टव्येति शङ्कते 'कथं पुन'रिति । अत्रायं समुदिताशयः—स्वापो नाम तमोगुणानुभवः । ईषदुद्बुद्धसत्त्वसहकृततमआलम्बनत्वे तस्य सुखत्वं, सत्त्वकार्यं च लघुत्वादि । ईषदुद्बुद्धरजःसहिततमआलम्बनत्वे दुःखत्वं चलत्वादि च । सत्त्वरजसोरत्यन्ताभिभावकप्रोद्बुद्धतमआलम्बनत्वे च गाढमूढत्वादि । स्वापे तमअनुभवे सत्येव तज्जसंस्कारतः प्रबोधे सुखमस्वाप्समित्यादि-

मिति; सत्त्वरजसी त्वभिभूय नितान्तमुद्भूते तमसि गाढमूढं सुप्तोऽस्मि, गुरूणि मे गात्राणि, मुषितमिव मनः, मीलितमिव इति । सत्यमेवम् । दत्तोत्तरं ह्येतत् । नैवामी वासनायोनयः प्रत्ययाः । अपि तु तात्कालिकशरीरेन्द्रियमनोवस्थाविशेषपर्यालोचननिमित्ता आनुमानिका इति । एवंरूपा हीमे—यतः प्रसन्नं मे मनः, सम्यगाहारपरिणामवशाल्लघूनि चाङ्गानि, अतः सुखमहमस्वाप्समिति । स्वापावस्थायां वा इन्द्रियोपरमतारतम्यवशादविशदतात्कालिकतत्तदनुकूलप्रतिकूलविषयानुसन्धाननिबन्धनतयाऽपि स्मरणमुपपद्यत इति न वृत्त्यन्तरत्वं निद्रायाः । कथं तर्हि पारमर्षं सूत्रम् "अभावप्रत्ययालम्बना वृत्तिर्निद्रा" इति । निरोधपरत्वात्प्रकरणस्य न वृत्तिस्वरूपे तात्पर्यं विपर्ययवत् । नह्यतद्रूपप्रतिष्ठं मिथ्याज्ञानं

---

प्रतिसन्धानस्योपपत्तिः नान्यथेति । अर्धाङ्गीकारेण परिहरति 'सत्यमेव'मिति । निरुक्तप्रतीतावभ्युपगमः । स्वापस्य तमोगुणालम्बनवृत्तिरूपत्वे, स्मृतिरूपत्वे च स्वापादौ निरुक्तप्रतीतेरनभ्युपगमः । तदाह 'दत्तोत्तर'मिति । 'आनुमानिका'इति । वृत्तिसामान्यविरह एव स्वापः । योग्यास्मरणलिङ्गाच्च प्रकाशस्वभावाया वृत्तेरभावस्य तत्कालीनस्याऽनुमानम् । देहेन्द्रियलाघवादिलिङ्गाच्च सुखत्वादेस्तत्रानुमानम् । पूर्वदिनकृतस्यापरस्मिन् दिने प्रत्यभिज्ञावलात्स्वापकालिकात्मसत्तांशेऽप्यनुमानरूपैवेयं प्रतीतिरिति भावः । 'न वृत्त्यन्तरत्व'मिति । न तमोगुणविषयकबुद्धिवृत्तिरूपत्वं निद्राया उपगन्तव्यम् । स्वापानुमानादेव निरुक्तप्रतीतेर्निर्वाहादित्यर्थः । निद्राया वृत्तिरूपत्वाभावे पातञ्जलसूत्रस्य का गतिरिति शङ्कते 'कथं तर्ही'ति । उत्तरयति 'निरोधे'ति । भावालम्बनवृत्तिसामान्याभावो निद्रेति तात्पर्यम् । अस्याश्च वृत्तिवन्निरोद्धत्वसामान्याद्वृत्तित्वोपचार इति भावः । अत्र निदर्शनं 'विपर्ययव'दिति ।

किञ्चिदस्ति, सर्वसंविदामर्थाव्यभिचारात् । स चाधिकरणसिद्धः । साधयिष्यते चोपरिष्टात् । कैवल्यभागि यच्चित् तत्प्रत्यनीकतया निद्रादेर्निरोध्यत्वेनोपदेशः ।

( इति निद्राया वृत्तिरूपत्वनिषेधनम् )

अस्तु वा पूर्वोक्तप्रमाणादिवृत्त्यभावकारणभूतप्रचिततमतमोगुणावलम्बना वृत्तिरेव निद्रा; सन्तु च प्रबुद्धप्रत्यवमर्शाश्च स्मरणानि; तथा सत्य(प्य)नवरतानुवृत्तबोधतया स्थितमेव पुंसो बोधस्वभावत्वम्।

आह—बोधकारणानुवृत्त्याऽपि बोधानुवृत्तिरुपपद्यत इति कथं तथास्वाभाव्यनिश्चयः ? इत्थम्—

---

अन्यथाख्यातेरभावेन भेदाग्रहस्यैव भ्रमस्थलाभिषिक्तस्य विपर्ययशब्दितस्य निरोद्धव्यत्वतात्पर्येण वृत्तित्ववन्निद्राया अपि वृत्तित्वं कीर्त्यत इति भावः । 'स चे'ति । सर्वसंविदामर्थाव्यभिचारः—यथार्थख्यातित्वलक्षणो न्यायतत्त्वशास्त्रीयाधिकरणसिद्ध इत्यर्थः । निरोद्धव्यत्वं चैषां कैवल्यसाधनपरिपन्थितयेत्याह 'कैवल्ये'ति । कैवल्यभागि यच्चित्—मोक्षाधिकृतमात्मस्वरूपम्, तत्प्रत्यनीकतया—तदभिमतसाधनसिद्धिविघातकतयैतेषां निरोद्धव्यत्वमित्यर्थः ।

सुखमहमस्वाप्समिति प्रतीतेः प्रतिसन्धानरूपत्वमुपगम्याप्याह 'अस्तु वे'ति । ज्ञानवत्तयैवोपलभ्यमानत्वादात्मनो बोधस्वभावत्वमुक्तम् । निरुक्तरीत्या स्वापेऽपि बोधानुवृत्तिप्रतिपादनाच्च तदेव प्रतिष्ठापितं भविष्यतीति नास्माकं काचित् क्षतिः । यत्तु हृदयं वृत्त्यैवात्मनः प्रकाशो न स्वरूपत इति, तत्त्वाशामोदकायितमिति च पूर्वोत्तराभ्यां सुनिरूपितं भविष्यतीति भावः । स्मरणानि—प्रतिसन्धानरूपाणि ।

स्वापस्य वृत्तित्वोपगमेऽपि न ज्ञाननित्यत्वसिद्धिः । वृत्तेः करणजन्य-

यतः स्वतस्सतो बोधादृते पुंसो यथोदितम्।
तमः स्वापादिकालीनं न सिध्येद्बोधत्वसिद्धितः ॥ २७ ॥

उपरतानि हि प्रस्वापकाले सर्वाण्येवेन्द्रियाणि सह मनसा। संस्कारस्य च न स्मृतेरन्यत्र सामर्थ्यम्। न च स्वप्रकाशं तमः; अर्थान्तरवर्तिनोऽप्यनिशं प्रकाशप्रसङ्गात्। क्लृप्तश्च सर्वार्थसाधनतया बोध इति तेनैव करणविरहिणा सता स्वभावभूतेनो(द्भूतेनो)द्भूत-वृत्तेस्तमसोऽन्यस्य वाऽऽत्मवर्तिनो गुणस्य स्फुरणमिति बलादभ्युप-गमनीयम्।

नित्यप्रकाशश्चात्मा प्रमातृत्वात्। अप्रमातृत्वव्यापकबद्धं ह्यनित्य-प्रकाशत्वं व्यापकविरुद्धप्रमातृत्वभागिन्यात्मनि नात्मानं लभते।

---

त्वादिति परस्य शङ्कामनुवदति 'आहे'ति। परिहरति 'इत्थ'मिति। ज्ञान-स्वभावत्वनिश्चयोऽनन्तरनिर्दिश्यमानप्रकारेणेत्यर्थः। 'यत' इति। स्वापे कारणायोगात्स्वतःसिद्ध एव तमःप्रकाशको बोध इत्येष्टव्यमित्यर्थः ॥२७॥

श्लोकं स्वयमेव विवृणोति 'उपरतानी'ति। अन्यस्य वा—सुखादेर्वा। उपरतव्यापारत्वात्करणानां स्वापे न ज्ञानवृत्तेरवसरः। अतः स्वाभा-विकेन बोधेनैव तमोगुणप्रकाश इति बलादेष्टव्यं यदि तमोऽनुभवः स्वाप इष्यते। तत्सिद्धं बोधस्वभावत्वमिति भावः। वस्तुतो ज्ञानस्य न स्वापे तमःप्रकाशकत्वमतिसङ्कुचितवृत्तित्वात्। स्वरूपानुभवबलात्सुखत्वेन तदा भासमानस्यात्मनः परामर्शः परं प्रबोध इति तु सिद्धान्तः। 'अस्वाप्स'मिति स्वापकालांशयोस्त्वनुमितिरूपेव निरुक्तप्रतीतिः। नित्यानुभवस्य संस्काराजनकत्वे तु साक्षादेव स्वापकालीनात्मस्वरूपानु-भवस्य निरुक्तप्रतिसन्धानहेतुत्वं सुखत्वेनात्मावगाहनांश इति च बोध्यम्।

बोधस्वभावस्याप्यात्मनो वृत्तिकाल एवास्तु प्रकाशो न सर्वदेत्यत्र

स्वतःसिद्धप्रकाशत्वमप्यस्य ज्ञातृभावतः ।
अज्ञातृत्वेन हि व्याप्ता परायत्तप्रकाशता ॥ २८ ॥
( इत्यात्मनो ज्ञानस्वभावस्य नित्यस्वप्रकाशत्वसमर्थनम् )

कः पुनरयं प्रकाशः, योऽस्य नित्योऽभ्युपेयेत स्वाभाविकश्च ? कश्चास्यात्मना संबन्धः ? । यदि ज्ञानमेव; संबन्धश्चाश्रयाश्रयित्वम्; ततो हेत्वभावेन साध्याभावस्य व्याप्तिमुपदर्शयितुं निदर्शनतया घटाद्युपादातव्यम्–यदनित्यप्रकाशमन्याधीनप्रकाशं वा तदप्रमातृ,

---

तावन्नित्यप्रकाशत्वं साधयति 'नित्यप्रकाशश्चे'ति । 'अप्रमातृत्वे'ति । अप्रमातृत्वरूपं यद्व्यापकं, तद्व्याप्यमित्यर्थः ।

ननु नित्यप्रकाशत्वं स्वाभाविकबोधकृतमेव किं न स्यादित्यत्राह 'स्वतः सिद्धे'ति । व्याप्ता–व्याप्या । व्यापकाभावाद्व्याप्याभाव इति यावत् । ज्ञातृत्वस्वाभाव्यादेवानन्याधीनप्रकाशत्वसिद्धिरिति भावः । ज्ञानस्य प्रकाशो ज्ञानान्तरानपेक्षोऽप्यात्मसम्बन्धापेक्ष इति ज्ञानेऽनन्याधीन-प्रकाशत्वलक्षणं साध्यं नास्ति, तेन सपक्षे ज्ञाने सति पक्षमात्रवृत्ति ज्ञातृत्वं भवत्यसाधारणमिति शङ्कानवकाशः । यद्यपि केवलव्यतिरेकिणो न प्रमाणत्वं सिद्धान्ते । अथापि परप्रक्रियया परान् प्रत्येतत्समर्थनं सम्भवत्येव । सिद्धान्ते तु पूर्वोक्तान्वयिनैव स्वप्रकाशत्वसिद्धिरात्मनः । नित्यत्वग्राहकप्रमाणबलाच्चात्मनः तत्प्रकाशस्यापि नित्यत्वमर्थसिद्धम् । श्रुतिभिश्च सकलार्थप्रतिष्ठेति परमाचार्याणामाशयः ॥ २८ ॥

अथ प्रसङ्गात् प्रकाशपदार्थं निर्णेतुं विमर्शमुपक्षिपति 'कः पुन'-रिति । नित्यस्यापि ज्ञानस्य प्रतिकर्मव्यवस्थोपपादकत्वाच्चैतद्विमर्शस्य प्रकृतोपयोगिता । 'यदी'ति । प्रकाशत इत्यत्र धात्वर्थः प्रकाशो ज्ञानम् । आख्यातार्थश्चाश्रयत्वमिति यदि कथ्यते इत्यर्थः । एतद्दूषयति 'तत' इति ।

यथा घटादीति । तत्र च विशेषनिषेधस्य सामान्याभ्यनुज्ञाक्षेपकत्वादागन्तुकं ज्ञानं घटादावनुमतमापद्येत । अथ तन्माभूदिति विषयविषयिभाव एव संबन्धः संगीयेत, ततो नित्यवज्ज्ञानविषयत्वमात्मनः प्रसज्येत । ज्ञानविषयीकारश्च साधनविशेषायत्तत्वेन नियत इति न स्वाभाविकत्वसम्भवः । अचेतनगोचर एव तथा नियम इति चेन्न, चेतनान्तरविषयीकारेऽपि तथाभावदर्शनात् । न चानात्मगोचर एव साधनसापेक्षत्वनियम इति वाच्यम् । आत्मनोऽप्यानुमानिकागमिकयोगज्ञानविषयीकारे तत्सापेक्षत्वदर्शनात् । विरुद्धं चैकस्यैकक्रियायां कर्मकर्तृत्वे, सूच्यग्रस्येवात्मनि

---

'तत्र चे'ति । व्यतिरेक्युदाहरणवाक्ये नित्यप्रकाशरूपविशेषनिषेधस्य प्रकाशसामान्याभ्युपगमपर्यवसायित्वाच्च घटादावागन्तुकज्ञानवत्त्वमभ्युपगतं भवेदित्यर्थः । न चैवं सति तत्र हेत्वभावोऽज्ञातृत्वं न स्यादिति वाच्यम् । अनात्मत्वस्यात्राज्ञातृत्वपदेन विवक्षितत्वात् । प्रकाशाश्रयत्वमात्रस्य तु साधनायोगः सिद्धत्वादिति च बोध्यम् । उक्तदोषपरिहाराय प्रकारान्तरं शङ्कते 'अथ तन्माभू'दिति । यदि ज्ञानविषयत्वं प्रकाशमानत्वमुच्यत इति यावत् । एतदपि दूषयति 'तत' इति । नित्यप्रकाशवत्त्वसाधनेनात्मनः सार्वदिकं ज्ञानविषयत्वं प्रसज्यत इत्यर्थः । इष्टमेवेदमिति चेत्तत्राह 'ज्ञाने'ति । ज्ञानस्य विषयप्रकाशनव्यापारो हि इन्द्रियादिद्वारकः । अत इतरानपेक्षो नित्यश्च ज्ञानविषयभाव आत्मनो दुःसाध इत्यर्थः । 'तथा नियम' इति । करणमपेक्ष्यैव विषयीकरणमिति नियम इत्यर्थः । 'तथा भावे'ति । करणव्यापारसापेक्षत्वदर्शनादित्यर्थः । 'न चे'ति । स्वात्मभिन्नविषय एव विषयीकारस्य करणापेक्षत्वमुच्यत इति न च वाच्यमित्यर्थः । 'आत्मनोऽपीति । स्वात्म-

वेध्यवेधकत्वे । नित्यत्वनिरतिशयसूक्ष्मत्वव्यापित्वचित्स्वाभाव्यादिरूपेण प्रत्यगर्थस्यौपदेशिकत्वमानुमानिकत्वं वा, न स्वरूपतः। स्वरूपापेक्षयैव स्वतःसिद्धिरभ्युपेयत इत्यसमाधेयो विरोधः । रूपभेदेन गम्यगमकत्वाङ्गीकारपक्षेऽपक्षस्येव शब्दादेर्न स्वतःसिद्धत्वम्।

( इति ज्ञानाश्रयत्वविषयत्वयोः प्रकाशमानत्वरूपत्वे दोषानुकीर्तनम् । )

अथोच्येत–न प्रकाशो ज्ञानम् । अपि तु तन्निमित्तश्चेतनेतरसर्वपदार्थसाधारणो धर्मः, यद्वशात् प्रकाशत इति प्रख्योपाख्ये प्रतायेते सर्वपदार्थेष्वविशेषेण; आश्रयाश्रयित्वलक्षणश्च संबन्धस्तेन सह सर्वभावानाम् । स च यथोदितसाधनबलादेव सांसिद्धिको

---

प्रकाशनेऽपि शब्दलिङ्गादिकरणसापेक्षत्वदर्शनात् नियमसङ्कोचो न करणीय इत्यर्थः। ननु स्वरूपमात्रविषयकं नित्यज्ञानं सिषाधयिषितम्। अस्य चात्मविषयीकरणे न करणापेक्षेत्यत्राह 'विरुद्धे' इति । स्वरूपमात्रस्यैव कर्तृत्वकर्मत्वयोरुपगमो विरुद्धः । स्वरूपमात्रज्ञाने आकारभेदादविरोधसमर्थनमपि न सम्भवतीत्याह 'नित्यत्वे'त्यादिवाक्यद्वयेन । ननु स्वरूपस्यैव गम्यत्वेपि तस्यैव गमकत्वं सामान्यविशेषधर्मभेदाद्धटेतेत्यत्राह 'रूपभेदेने'ति । यथा शब्दशब्दस्य शब्दशब्दवाच्यत्वेऽपि वाच्यता श्रोत्रग्राह्यगुणत्वाकारेण, वाचकता चानुपूर्वीविशेषेणेति न स्वयंप्रकाशत्वमपक्षस्य शब्दस्य, एवं ग्राह्यग्राहकतावच्छेदकधर्मभेदे पक्षीकृतस्यापि आत्मनो न स्वप्रकाशत्वं सिध्येदित्यर्थः । एवं विमर्शकेन पक्षद्वयं दूषितम् ।

अथ भाट्टप्रक्रियामनुवदति 'अथोच्येते'ति । प्राकट्यं प्रकाशः, आश्रयत्वं च संबन्धः । प्रकाशत इति प्रतीतिव्यवहारौ च प्राकट्याश्रयत्वार्थकावेव प्राचुर्येण प्रवर्तेते । ज्ञानजन्यः प्रकाशश्च चेतनाचेतन-

नित्यश्चात्मन इति । पराकृतोऽयं पक्षः । न ज्ञानातिरेकी प्रकाशो नाम । यद्व्यवहारोपजननानुगुणं ज्ञानं, तत्प्रकाशत इत्युच्यते । ज्ञेयस्य ज्ञातुः स्वात्मनश्च व्यवहारानुगुणं ज्ञानमुदयत इति युक्तः त्रिष्वपि एकरूपः प्रकाशतेव्यवहारः । तत्त्वान्तरप्रकाशाभ्युपगमे तात्स्वाभाव्ये[न][1]च पुनः किं चैतन्याश्रयणेन ? । न च प्रकाश एव तदिति वाच्यम्, घटादेरपि प्रकाशवत्तया चेतनत्वप्रसङ्गात् । यद्युच्येत—सति चेतनावत्त्वे पुंसः प्रकाशमानत्वमिति; संविदीदानीं का वार्ता ? । चेतनैव हि सा, न चेतयते । अथ संविदस्तत्संबन्धाधीनः स धर्म इति चेत्; कस्तया संबन्धः, यस्तन्निबन्धनम् ? ।

सर्वपदार्थसाधारणः । स एव नित्यः स्वाभाविकश्चात्मनः साध्यतां ज्ञातृत्वबलादिति शङ्काग्रन्थार्थः । प्राभाकरमुखेन निराकरोतीमं पक्षं 'पराकृत' इति । ज्ञाततान्यवहारस्य स्वप्रकाशज्ञानत एवोपपत्तेर्न ज्ञानजन्ये ज्ञातताख्ये धर्मान्तरे प्रमाणं किमपीति पराकरणप्रकारः । 'त्रिष्वप्येके'ति । प्रकाशो ज्ञानम्, तदधीनव्यवहारानुगुण्यं सम्बन्धः प्रकाशत इत्यत्राख्यातार्थ इति पक्ष एव ज्ञेयज्ञानज्ञातृषु एकार्थकता प्रकाशतेव्यवहारस्य घटत इत्यर्थः । त्रितयव्यवहारानुगुण्यापादनं घटादिज्ञानस्य स्वभाव इति हार्दम् । ज्ञानातिरिक्तस्य प्रकाशस्य नित्यस्यात्मन्युपगमे तत्र ज्ञानं व्यर्थमिति चाह 'तत्त्वान्तरे'ति । स्वविषयकज्ञाने सत्येवात्मनः प्रकाशमानतेति क्षेमसाधारणप्रयोजकतोपगमान्नात्मनि चैतन्यस्य वैयर्थ्यमिति शङ्कते 'यद्युच्येते'ति । आक्षिपति 'संविदी'ति । संवित् ज्ञानमेव, न ज्ञानाश्रयः । तथा च चैतन्यसमवायित्वस्य प्रकाशमानताप्रयोजकत्वे चैतन्ये तदभावात्प्रकाशमानता न घटेतेति भावः । ननु चैतन्य-

टिप्प०—१ अधिकत्वेन प्रतीयमानमेतच्चिह्न [ ] मध्ये निवेशितम् ।

नाश्रयाश्रयित्वम्; घटादेस्तदभावप्रसङ्गात्। न विषयविषयिभावः, तस्यैवानिरूपणात्। अनिरूपणं च [1]भ्रान्त्यधिकरणसिद्धान्तारम्भे संवित्सिद्धौ चानुसन्धातव्यम्। आत्मनस्तस्य चाप्रकाशप्रसङ्गश्च। ज्ञानाधीनप्रकाशाश्रयतैव सिद्धिः, तया चानुमेयं ज्ञानमिति पक्षः प्रागेव प्रतिक्षिप्तः।

स्वप्रकाशसंविद्वादिनोऽपि व्यवहारानुकूल्ये वैरूप्यमशक्यपरि-

---

सम्बन्ध एव प्रकाशहेतुरुपेयत इति चेत्तत्राह 'कस्तये'ति। तया—चेतनया। संवन्धविकल्पेन दूषणमत्र क्रियते। चैतन्यवदात्मसमवेतत्वस्य चैतन्यसंवन्धत्वे घटादेरप्रकाशापत्तिः। तदाह 'घटादे'रिति। चैतन्यविषयत्वस्य तत्त्वे च चैतन्यस्यात्मनश्चाप्रकाशापत्तिः। तदाह 'आत्मन' इति। आत्मनः—संविदः। तस्य—पुंसः। प्रकाशप्रयोजकस्य चैतन्यविषयत्वस्याङ्गुल्यग्रेणेव स्वात्मस्पर्शस्याशक्यत्वाच्चैतन्ये, कर्मकर्तृत्वविरोधादात्मनि चासम्भव इति हार्दम्। ननु कर्मकर्तृविरोधोपगमेऽस्तु ज्ञानाश्रयतयैवात्मनि प्रकाशतेव्यवहारः। ज्ञानस्य त्वतीन्द्रियस्य ज्ञाततालिङ्गकानुमानात्प्राकट्यं सम्भवति प्रकाशतेव्यवहारनिदानमित्यत्राह 'ज्ञानाधीने'ति। ज्ञानानुमानप्रतिक्षेपाच्च ज्ञानस्य ज्ञानरूपतयैव प्रकाशतेव्यवहारो वाच्यः। तथा च प्राकट्येन ज्ञानजधर्मेणार्थेषु, ज्ञानरूपतया ज्ञाने, ज्ञानाश्रयतयैव चात्मनि प्रकाशतेव्यवहार इति त्रिष्वपि तस्यैकरूप्यासम्भव एतन्मत इति स्थितम्।

एवं भाट्टमते ज्ञेयज्ञानज्ञातृषु प्रकाशतेव्यवहारस्यैकरूप्यासम्भवं गुरुमुखेन प्रोच्य गुरुमतेऽपि त्रिषु व्यवहारानुगुण्ये ऐकरूप्यासम्भवं विमर्शक उद्भावयति 'स्वप्रकाशे'ति। ज्ञानविषयतयाऽर्थे, ज्ञानरूपतया

---

टिप्प०—१ भ्रान्त्यधिकरणं न्यायतत्त्वशास्त्रस्थम्।

हारम् । आत्मनि समवेतं ज्ञानमसंबन्धिन्यर्थे प्रकाशं व्यवहारं वा कथं प्रसुवीतेत्यपि चिन्त्यम् । इन्द्रियलिङ्गादिस्वकारणप्रत्यासत्तिवशादिति मा वोचः । न खलु लब्धात्मकं कार्यं स्वनिमित्तकारणमनुरुध्य कार्यमारभते । मा भूदुदकाहरणादि घटादेः कुलालादिसमानाधिष्ठानम् । न च निमित्तकारणनाशे कार्यनाशः । नश्यति चेन्द्रियसंप्रयोगादिनाशे रूपादिज्ञानम् । अत इन्द्रियेण सह चैतन्यमपि निस्सृत्य तेन तेनार्थेन सन्निकृष्यते, हस्तादिनेव त्वगिन्द्रियम् । तथा सति हि तदुपाधिकत्वात्तज्ज्ञानस्य युक्त तद्भा-

---

ज्ञाने, ज्ञानाश्रयतया चात्मनि व्यवहारानुगुण्यं वक्तव्यमिति गुरुमतेऽपि वैरूप्यमशक्यपरिहारमित्यर्थः । दूषणान्तरमप्याह मतद्वये 'आत्मनी'ति । अत्र शङ्का 'इन्द्रिये'ति । यदर्थसंबद्धेन्द्रियलिङ्गादिना यज्ज्ञानं जनितम्, तत् तस्मिन्नर्थे प्रकटतां व्यवहारानुगुण्यं वा निष्पादयतीति शङ्कार्थः । प्रतिक्षिपति 'न खलु लब्धे'ति । कार्यस्य स्वोत्पत्तावेव निमित्तकारणापेक्षा । न तु समुत्पन्नस्य स्वकार्यजननेऽपि । अन्यथा कुलालसन्निधान एव घटेन जलस्याहरणम्, नान्यत्रेति स्यादित्यर्थः । ज्ञानस्यैव स्वकार्यनिष्पादने स्वनिमित्तापेक्षेत्याश्रयणे चेदमपि वैषम्यं प्रसज्यत इति भावः । कुलालादिसमानाधिष्ठानम्–कुलालादिसमानाधिकरणम् । वैषम्यान्तरमप्याह 'न चे'ति । अन्यत्र निमित्तनाशे कार्यनाशस्यादर्शनात् ज्ञानस्यैव निमित्तनाशेन नाशाभ्युपगमेनापि वैषम्यं प्रसक्तं पक्षद्वयेऽपीत्यर्थः । कथं तर्हि प्रकाशस्य व्यवहारस्य वोपपत्तिः? तत्राह 'अत' इति । इन्द्रियादिद्वारा प्रसृतस्य तेन सहार्थसन्निकृष्टस्य ज्ञानस्यार्थप्रकाशकस्यार्थप्रकाशव्यवहारजनकत्वं स्वीकार्यमनायत्येति हार्दम् । सिद्धान्तिनां पक्षोऽयम् । 'तथा सती'ति । इन्द्रियेण सह प्रवृत्त्यादिमत्त्वे हि ज्ञानस्य

वानुविधायित्वम् । अन्यथोत्पन्नं ज्ञानमिन्द्रियार्थसन्निकर्षनिवृत्तौ किमिति निवर्तते ? । ज्ञानजन्यार्थधर्मप्रकाशवादिनोऽपि समानोऽयं दोषः । निमित्तकारणं हि ज्ञानम् । कुतस्तन्निवृत्तौ अर्थप्रकाशो निवर्तते ? कुतो वा यावत्तद्भावमवतिष्ठते ? ।

न च सङ्ख्यादिनिदर्शनेनात्र प्रत्यवस्थानं युक्तम्;

असिद्धत्वेन नाशस्य सङ्ख्याया बुद्धिनाशतः ।
एकसङ्ख्येव सङ्ख्यात्वादन्याऽप्याद्रव्यभाविनी ॥ २९ ॥
सर्वा ह्येकाश्रया सङ्ख्या नित्यानित्यार्थवर्तिनी ।
यावदाश्रयसत्येव संमता सर्ववादिनाम् ॥ ३० ॥
द्वित्वादिका परार्धान्ता सङ्ख्या याऽनेकवर्तिनी ।
साऽपि सङ्ख्यात्वसामान्ये सति कस्मान्न तादृशी ॥ ३१ ॥

---

तदर्थसन्निकृष्टस्य तत्प्रकाशकस्येन्द्रियार्थसन्निकर्षान्वयव्यतिरेकानुविधाय्यन्वयव्यतिरेकोपपत्तिरित्यर्थः। 'अन्यथे'ति। इन्द्रियादिद्वारकज्ञानार्थसन्निकर्षस्यानुपगमे निमित्तनाशस्य कार्यनाशेऽहेतुत्वादिन्द्रियार्थसन्निकर्षादिनिवृत्तौ ज्ञाननिवृत्तिर्न स्यादित्यर्थः ।

ननु निमित्तनाशस्यापि कार्यनाशे हेतुत्वं कचिदेष्टव्यम् । अन्यथाऽपेक्षबुद्धिनाशाद्द्वित्वादेर्नाशस्यानुपपत्तेः । तथा प्रकृतेऽपि भविष्यतीति शङ्कते 'न चे'ति । परिहरति 'असिद्धत्वेने'ति । अपेक्षाबुद्धिनाशेन द्वित्वादिनाशस्यासिद्धत्वेन न निमित्तनाशेन कार्यनाशे द्वित्वादेर्नाशस्य निदर्शनत्वं संभवतीत्यर्थः । 'एके'ति । यावदाश्रयभावित्वादेकत्वस्येव द्वित्वादेः सङ्ख्यात्वान्नापेक्षाबुद्धिनाशान्नाश इत्यर्थः । असिद्धत्वमेतेनोपपादितं भवति । फलितोऽत्र प्रयोगः—द्वित्वादिर्यावदाश्रयसती सङ्ख्यात्वादेकत्ववदिति ॥ २९ ॥ ३० ॥ ३१ ॥

ननु नैकत्वं सङ्ख्या; स्वरूपानतिरेकात् । अतः साधनविकलमुदाहरणम् । मैवम् । सङ्ख्यैव सा; द्रव्यान्तरेऽप्यनुवृत्तेः । यदि घटादेः स्वरूपमेवैकत्वम्, ततो घट एकः, पट एक इति सर्वद्रव्यसाधारण्यमेकत्वस्य न स्यात् । नहि घटस्वरूपस्य पटस्वरूपेण संभवति सामानाधिकरण्यं घटः पट इति । अस्ति तु तदेकत्वस्य ।

किंच—सङ्ख्यैकता विरुद्धत्वात् द्विसङ्ख्येत्रान्यसङ्ख्यया ।
एकं द्वाविति न ह्यस्ति सामानाधिकरण्यधीः ॥ ३२ ॥

यत्तु अनेकद्रव्यवृत्तित्वे सति गुणत्वात् संयोगवदयावद्द्रव्य-

दृष्टान्ते हेत्वसिद्धिं शङ्कते 'ननु नैकत्व'मिति । परिहरति 'मैव'-मिति । 'यदी'ति । तत्तद्व्यक्तिस्वरूपस्यैवैकप्रतीतिव्यवहारनियामकत्वे घट एकः, पट एक इत्याद्यनुगतप्रतीतिव्यवहारानुपपत्तिः । तत्तद्व्यक्तित्वस्याननुगतत्वात् । एकत्वसङ्ख्यायास्तथात्वे तु एकत्वेनानुगमादनुगतप्रतीत्याद्युपपत्तिरिति भावः । तार्किकप्रक्रिययेदम् ।

स्वरूपत्वे बाधकमुक्त्वैकत्वस्य सङ्ख्यात्वे साधकमप्याह 'सङ्ख्यैकते'ति । अत्र प्रयोगः—एकत्वं सङ्ख्या सङ्ख्यान्तरविरुद्धत्वात् द्वित्वादिवदिति । हेतुं पक्षे घटयति 'एक'मिति । अत्रेदं बोध्यम्—उद्देश्यतावच्छेदकावच्छिन्नपर्याप्तेर्द्वित्वादिसंबन्धतया भानात् एकत्वावच्छिन्नपर्याप्तेश्च द्वित्वादिसंबन्धत्वाभावेन न एकं द्वाविति प्रयोगः । एकं द्वित्ववदिति तु स्यान्नाम, अत्र द्वित्वसमवायस्यैव स्वरूपसंबन्धेन भानात्, तस्य चैकस्मिन्नप्यबाधात् । सङ्ख्यान्तरविरुद्धत्वं च सङ्ख्यान्तरपर्याप्त्यवच्छेदकावच्छिन्नपर्याप्तिकवृत्तिकत्वाभावलक्षणमिति । द्वित्वादेर्यावदाश्रयभावित्वानुमाने दृष्टान्ते साधनवैकल्यं परिहृतमेतावता ॥ ३२ ॥

सत्प्रतिपक्षमाशङ्कते 'यत्त्वनेके'ति । परिहरति 'तदि'ति । नानात्वं

भाविनी द्वित्वादिसङ्ख्येति, तन्नानात्वेऽनैकान्तिकम् । न हि सतोरपि घटपटयोस्तन्नानात्वं नश्यति । न च तत् द्वित्वसङ्ख्यैव । त्रयाणां तद्भावप्रसङ्गात् । न च तदेकत्वाभावमात्रम् । तुच्छस्यापि नानात्वापत्तेः ।

आपेक्षिकत्वात् द्वित्वादेः प्रतियोग्यनवग्रहात् ।
बुभुत्सोपरमाच्चापि सत्या एवानवग्रहः ॥ ३३ ॥

अतश्चैतन्यस्यैवेन्द्रियद्वाराऽर्थसन्निकर्ष एव तद्भावानुविधानोपपत्तिः ।

( इति भाट्टप्राभाकराभिमतप्रकाशपदार्थेऽप्यनुपपत्तिवर्णनम् ) ।

अन्यच्च, अर्थस्य प्रकाशकं हि ज्ञानं भवताम् । सर्वं च प्रकाशकं प्रकाश्यवस्तुसन्निकृष्टमेव प्रकाशकं दृष्टं दीपप्रभादि । अतस्तदपि तथेति युक्तमाश्रयितुम् । व्योमवदमूर्तस्य न क्रियावत्त्वमिति चेत्,

---

बहुत्वम् । तस्य च व्यासज्यवृत्तित्वाद्वित्वादिवद्गुणत्वमेव । न तु भेदरूपत्वम् । भेदस्याव्यासज्यवृत्तित्वादिति भावः ।

ननु यावदाश्रयं सत्त्वे आश्रयोपलम्भकाले नियमत एकत्वस्येव द्वित्वादेरुपलम्भः प्रसज्यत इति चेत्तत्राह 'आपेक्षिकत्वा'दिति । संबन्ध्यन्तरग्रहसापेक्षग्रहस्य द्वित्वादेः प्रतियोगिनः संबन्ध्यन्तरस्याग्रहणात्, ग्रहणे वा द्वित्वादिबुभुत्साया अपेक्षाबुद्धेश्च तद्बोधे सहकारिण्या विरहेण न सदा ग्रह इति भावः । एवं च निमित्तनाशनाश्यत्वस्य न निदर्शनीभवितुमलं द्वित्वादीत्युक्तं भवति । वस्तुतोऽपेक्षाबुद्धिविशेषातिरिक्तं द्वित्वादिकमेवाप्रामाणिकमिति तन्नाशाधीनतन्नाशस्य न तरां प्रसक्तिरिति बोध्यम् ॥ ३३ ॥

ज्ञानस्यार्थसन्निकर्षानुपगमे बाधकमुक्त्वाऽर्थसन्निकर्षे साधकं चाह 'अन्यच्चे'ति । ज्ञानस्य वहिःप्रसरणेऽमूर्तत्वविरोधमाशङ्कते 'व्योमव'-

केयं मूर्तिर्नाम? यद्विरहिणः क्रियाऽयोगः । यदि परिभाषिकी द्रव्यत्वे सति क्काचित्कतेति । इष्यत एव सा चैतन्ये । न हि तत्सर्वगतं द्रव्यम्, तथासति युगपत् सर्वार्थसिद्धिप्रसङ्गात् । क्काचित्कत्वे तु तद्धि यदैकदैकेन्द्रियेण संप्रयुक्तं तदर्थाभिमुखम्, न तदेन्द्रियान्तरमधितिष्ठति । अत एव हि युगपज्ज्ञानानुत्पत्तिः । निरतिशयवेगं च तत्, युगपदिवातिशीघ्रमनेकेन्द्रियाधिष्ठानदर्शनात् । अतो यथोदितममूर्तत्वमसिद्धम् । स्पर्शवत्ता मूर्तिः, तद्विरहान्निष्क्रियत्वमिति चेत्; शब्देनानैकान्तः । स खलु शङ्खमुखादेर्दवीयसोऽपि देशात् नोदनविशेषेण लोष्टादिरिव यावद्वेगं प्रतिष्ठते स्पर्शविहीनोऽपि । स्पर्शरहितस्यापि मनइन्द्रियस्य क्रियावत्त्वं पदार्थवाक्यार्थविदामुभयेषामपि संमतमेव ।

---

दिति । मूर्तत्वविकल्पेनैनां शङ्कां निरस्यति 'केय'मित्यादिना । 'न हि त'दिति । बन्धदशायां ज्ञानस्याविभुत्वमेवेति भावः । 'न तदे'ति । एकेन्द्रियाधिष्ठानकाले इन्द्रियान्तरसंपृक्तं सत्तन्न प्रवर्तयति तदर्थसन्निकर्षायेत्यर्थः । एवं चाविभुद्रव्यत्वलक्षणमूर्तत्वस्य ज्ञाने सत्वादमूर्तत्वमसिद्धमिति भावः । स्पर्शवत्त्वं मूर्तत्वमिति पक्षे दोषमाह 'शब्देने'ति । यस्यास्पर्शत्वं तस्याक्रियत्वमिति नियमोऽसिद्धः । शब्दस्यामूर्तस्यापि क्रियावत्त्वात् । तथा चास्पर्शस्यापि ज्ञानस्य प्रसरणादौ नानुपपत्तिरिति भावः । अनैकान्त्यप्रदर्शनं शब्दे तस्य द्रव्यत्वमतेन । तस्य द्रव्यत्वे विमत्यामपि संप्रतिपन्नस्थलान्तरे तद्दर्शयति 'स्पर्शे'ति । यद्वा ननु शब्दस्याश्रयद्वारैव गतिर्वाच्या । शब्दाश्रयश्च वायुः स्पर्शवानिति न निरुक्तनियमे क्षतिरिति चेत्तत्राह 'स्पर्शे'ति । पदार्थविदः— काणादाः, वाक्यार्थविदो जैमिनीयाः । उभयेषामपि सम्मतं मनसो निःस्पर्शस्यापि क्रियावत्त्वमित्यर्थः ।

कथमतीतानागतयोरसतोश्चैतन्येन संप्रयोग इति चेत्, कथं वा विषयभावः, प्रकाशमानत्वम्, सङ्ख्यादियोगो वा तयोः? यस्तत्र निर्वाहः, स एवात्रास्तु। अपि चातीततयाऽनागततया च तावप्यद्यापि विद्येते इति तेन रूपेण बोधसन्निकर्षे काऽनुपपत्तिः?। किंच, यथा दवीयसि देशे सता ध्रुवशिंशुमारादिना दृक् तु सन्निकृष्यते, तथा दवीयसि काले सता कल्पाद्यन्तवर्तिना स्वयंभुवादिनेति ह्यालोकं किञ्चित्। किञ्च—

---

अर्थसन्निकर्षेण ज्ञानस्यार्थप्रकाशकत्वेऽतीतेनानागतेन वाऽर्थेन सन्निकर्षायोगाज्ज्ञानेन तत्तदर्थप्रकाशव्यवहारौ न घटेते इति शङ्कते 'कथमतीते'ति। प्रतिवन्दीमाह 'कथं वे'ति। अतीतानागतयोर्वर्तमानज्ञानविषयत्वं वैशेषिकमते, वर्तमानज्ञानाधीनप्रकाशाख्यधर्मसमवायित्वं भाट्टमते, मतद्वयेऽपि द्वित्वादिसङ्ख्या च वर्तमानापेक्षाबुद्धिजन्या तयोः कथं घटत इत्यर्थः। उत्तरतौल्यं स्फोरयति 'यस्तत्रे'ति। ज्ञानविषयत्वे ज्ञानाधीनधर्मभाक्त्वे वा ज्ञानाधीने वर्तमानत्वमर्थस्य नापेक्षितमित्यकामेनापि स्वीकार्यम्। अस्माभिरपि ज्ञानसन्निकर्षस्तथैवोपपाद्यत इति भावः। वस्तुतः सिद्धान्ते ध्वंसप्रागभागभावलक्षणावस्थान्तरेण तयोरपि ज्ञानकाले सत्त्वाज्ज्ञानसन्निकर्ष उपपद्यत एवेत्याह 'अपि चे'ति। काऽनुपपत्तिरित्यत्र क्वचित् का नामानुपपत्तिरिति पाठः। नन्वेवमपि तत्तत्कालस्य ज्ञानेन ग्रहणं न स्यादद्यतनेन, तस्येदानीमभावादित्यत्राह 'किञ्चे'ति। ज्ञानस्यातिवेगितया तत्तत्कालसन्निकर्षेण तत्तद्ग्रहणमुपपन्नमित्यर्थः। व्यवहितकालसन्निकर्षे ज्ञानस्य निदर्शनं व्यवहितदेशसन्निकर्षोऽतिवेगिनो नायनतेजसः।

नातीतानागते बुद्धेर्दूरे भवितुमर्हतः ।
बुद्ध्या प्रकाशमानत्वाद्बुद्धिबोद्धृस्वरूपवत् ॥ ३४ ॥

एवं च चैतन्यस्य निरतिशयवेगितयाऽन्तरालदेशकालाग्रहणाभिमानोऽलातचक्रगतक्रमवद्देशभेदसंयोगविभागाग्रहणाभिमानवत् । अपि चेन्द्रियलिङ्गसंस्कारादेर्यदर्थप्रतिनियतं रूपम्, तेनैवोपश्लिष्य निस्सरच्चैतन्यमपि तद्गोचरेणैव सन्निकृष्यते; यथा गवादिपदशक्तिरेकबुद्धिसिद्धेऽपि सामान्यविशेषात्मके वस्तुनि सामान्यांशेनैव

---

दूरत्वेऽपि बुद्ध्या सन्निकर्षो घटत इत्युक्तम् । इदानीं बुद्ध्यपेक्षया दूरत्वमेव नेत्याह 'नातीते'ति । बुद्ध्यदूरत्वमेव बुद्धिसन्निकर्षो बोध्यबोधबोद्धृसाधारण इति तु सिद्धान्तः ॥ ३४ ॥

नन्वेवमपि व्यवहितदेशकालसन्निकर्षस्य मध्यवर्तिदेशकालसन्निकर्षनान्तरीयकतया मध्यवर्तिनामपि ग्रहणं स्यादिति प्रसङ्गमिष्टत्वेन परिहरति 'एवं चे'ति । नन्वेवमपि चक्षुषा प्रसृतस्य ज्ञानस्य रसादिभिरपि सति सन्निकर्षे तेन रूपस्यैव प्रकाशनं न तु रसादेरिति व्यवस्था कथमित्यत्राह 'अपि चे'ति । यदर्थप्रतिनियतं रूपम्—यदर्थ एव व्यवस्थितं बोधजननसामर्थ्यम् । तेन—तदर्थप्रतिनियतरूपेणेन्द्रियादिना । तद्गोचरेणैव—तत्तादिन्द्रियादियोग्यार्थेनैव । एवं च चाक्षुषज्ञानस्य न रसादिना सन्निकर्ष इति भावः । योग्यांशेनैव संबन्धे लौकिकं वैदिकं च निदर्शनं 'यथे'ति 'यथा वे'ति च । गवादिपदशक्तेस्तद्व्यक्तिलक्षणविशेषेण सम्बन्धे तत्तत्पदाद्व्यक्त्यन्तरबोधो न स्यात् । सामान्यांशेन संबन्धे तु स्यादिति गवादिपदसंबन्धयोग्यत्वं सामान्यस्यैव मतम् । विधेश्च प्राप्तार्थेऽन्वयस्य निरर्थकत्वादप्राप्तेनैवान्वययोग्यता मता । तेन तेन च तत्तदन्वय इष्यते यथा, एवं तत्तदैन्द्रियिकादिज्ञानस्य तत्तदिन्द्रियाद्यर्थे-

संबध्यते, यथा वा विधिः प्राप्तांशपरिहारेणाप्राप्तांशमेव भावनायाः स्पृशति। अत इन्द्रियादिद्वारेण चैतन्यं तदर्थाभिमुखं निर्गच्छतीति न्याय्यम्। यथाऽऽह भगवान् "तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि" इति। मनुश्च, "इन्द्रियाणां हि सर्वेषां यद्येकं क्षरतीन्द्रियम्। तेनास्य क्षरति प्रज्ञा दृतेः पादादिवोदकम्॥" इति।

(इति ज्ञानस्यार्थेन सन्निकर्षोपपादनम्)

— यत्तु गुणश्चैतन्यं गुणिनमपहाय कथमन्यतो यातीति; तदयुक्तम्, प्रहाणानभ्युपगमात्। अप्रहायैवात्मानमितस्ततश्चेतना इन्द्रि-

नैव संबन्धो मन्तव्यः; अन्यथाऽन्धबधिरादिविलोपप्रसङ्गात्, अव्यवस्थाप्रसङ्गाच्चेति भावः। भावनायाः साध्यसाधनेतिकर्तव्यतान्वयित्वेऽपि भावनान्वयिन्यप्राप्ते साधनांश एव विधितात्पर्यमिति मीमांसकाः। तदर्थाभिमुखमेव—इन्द्रिययोग्यार्थप्रकाशनैकतत्परम्। संबन्धमात्रं न सन्निकर्षः। किन्तु संबन्धविशेषः। स च तत्तदिन्द्रिययोग्यार्थेनैव तत्तदैन्द्रियिकज्ञानस्येति न चाक्षुषादिना रसादेः प्रकाश इति हार्दम्। चाक्षुषादिज्ञानस्य रसादिना संबन्ध एव नास्तीति तु कश्चन पक्षः। प्रागुक्तपक्ष एव तु युक्तः। इन्द्रियार्थाभिमुखतया ज्ञानस्य प्रसरणे श्रीमद्गीतावाक्यं प्रमाणयति 'तदस्ये'ति। "इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते" इति पूर्वार्धम्। आत्मग्रहणप्रवृत्तं ज्ञानमिन्द्रियार्थप्रवणं मन इन्द्रियद्वारा विषयाभिमुखं नयतीत्यर्थः। इन्द्रियद्वारा ज्ञानस्य प्रसरणे मनोर्वाक्यम् 'इन्द्रियाणा'मिति। क्षरति—बाह्यविषयमभिसरति। तेनेन्द्रियद्वारेण चैतन्यमपि निस्सरति चर्मभस्त्रिकाच्छिद्रद्वारेव जलमित्यर्थः।

'अप्रहायैवे'ति। सङ्कोचविकाशशालिनो ज्ञानस्यात्मधर्मस्यापरित्य-

यादिद्वाराभिश्वरति । विच्छिन्नायाश्च तस्याः सन्धानासंभवः शास्त्र एवोक्तः । दृश्यन्ते च गुणा अपि शब्दगन्धसूर्यालोकरत्नप्रभादयो गतिमन्तो धर्म्यतिवर्तिनश्च । अतिसूक्ष्मो दूरगमनधर्मा भौतिको हि शब्दः ।

ननु नभ इव विभुः शब्दो व्यञ्जकध्वनिवशेन प्रादेशिक इव गत्वर इव चोपलभ्यते । तथाहि-शब्दः सर्वव्यापी एकद्रव्यवर्तित्वे

---

ज्यैवात्मसंवन्धं विकासावस्थया वाह्यार्थसंवन्धो घटत इति यावत् । गुणस्याप्याश्रयादन्यत्र गमने निदर्शनमाह 'दृश्यन्त' इति । धर्म्यतिवर्तित्वं धर्मिदेशाधिकदेशसंवन्धित्वम् । गुणत्वं चायुतसिद्धप्रकारत्वलक्षणं द्रव्याद्रव्यसाधारणमत्र वाच्यम्, शव्दगन्धयोरद्रव्ययोरालोकप्रभयोश्च द्रव्ययोर्गुणत्वेनोपादानात् । गुणस्य गतिमत्त्वादि तु आश्रयांशद्वारा । न चैवं धर्म्यतिवर्तित्वमसिद्धमिति वाच्यम् । प्रसिद्धाश्रयशङ्खपुष्पाद्यतिवर्तित्वे तात्पर्यात् । 'दूराद्गन्धो वाती'तिश्रुतिर्गन्धस्य गतिमाह । शव्दस्य गतिमत्त्वं 'शङ्खनादोऽय'मित्याद्युपलव्धेर्दूरेऽपि । नन्वाकाशगुणत्वाच्छव्दस्याश्रयद्वाराऽपि गतिर्नोपपद्यत इत्यत्राह 'अतिसूक्ष्म' इति । भौतिकः—भूतजनितः । भेरीदण्डाभिघातादिनोद्भूते वायौ शव्दो जायते । आश्रयवाय्वंशविशरणवशाच्च नानादिक्षु तस्यापि सम्वन्धो घटत इति भावः । अतिसूक्ष्मत्वाद्दूरगन्तृत्वं वायोः । आश्रयधर्मश्चाश्रयिण्युपचरित इति वोध्यम् ।

नन्वाकाशगुणस्य शव्दस्य विभुत्वादेव न गमनापेक्षा । यत्कृते वायवीयत्वं कल्प्येत । व्यञ्जकयोगिदेश एवोपलम्भनियमाच्च न विभुत्वेऽपि सर्वत्रोपलम्भप्रसङ्ग इति शङ्कते 'ननु नभ' इति । शव्दस्य विभुत्वं साधयति 'शब्द' इति । घटाकाशसंयोगादौ व्यभिचारवारणाय हेतौ

सत्याकाशगुणत्वात् तत्परिमाणवत् । मैवम्, अतद्गुणत्वात् । वायवीयः शब्दः, तेन नियतसहोत्पत्तिकत्वात्, तदीयस्पर्शवत् । यश्च येन द्रव्येण नियतसहोत्पत्तिर्गुणः स तद्गुण एव, यथा तथाविधा रूपादयः । नियतसहोत्पत्तिश्च वायुना शब्दः । उभयोरपि भेरीदण्डवंशदलनादिसंयोगविभागजत्वनियमात् । उत्पद्यते च शब्दः इन्द्रियग्राह्यत्वे सति गुणत्वात् गन्धादिवत् । कृतकश्च, क्रियोत्तरमेवोपलभ्यत्वात् संयोगादिवत् । न चाभिव्यञ्जकत्वं प्रयत्नादेः कल्प्यम्, गौरवात् । तत्प्रतीतिकारणत्वकल्पनादपि तत्कारणत्वकल्पनैव हि लघ्वी । अभिव्यञ्जकाश्च एकदेशावस्थितानेकेन्द्रियग्राह्यान्

---

विशेषणदलम् । घटाद्येकत्वादौ तद्वारणाय विशेष्यम् । एतद्दूषयति 'मैव'मिति । स्वरूपासिद्धिमाह 'अतद्गुणत्वा'दिति । आकाशगुणत्वाभावादित्यर्थः । नन्वाकाशगुणत्वं शब्दस्य शास्त्रसिद्धं कथं प्रतिक्षिप्यत इति चेत्; उच्यते । आगमानुसारे आकाशस्यैव न विभुत्वमिति न तरां तद्गुणस्य विभुत्वम् । युक्त्या तु केवलया वायवीयत्वमेव सेत्स्यति शब्दस्येति हार्दम् । युक्तिमेवाह 'वायवीय' इति । विभुत्वं प्रतिक्षिप्य नित्यत्वमपि शब्दस्य प्रतिक्षिपति मीमांसकाभिमतम् 'उत्पद्यते चे'ति । अनेन वायवीयत्वानुमाने शब्दस्य हेतुविशेष्यांशासिद्धिरपि परिहृता । ननु तदुत्तरकालोपलभ्यत्वं तद्व्यङ्ग्यत्वादपि घटेतेत्यप्रयोजकत्वं हेतोरिति शङ्कां प्रतिक्षिपति 'न चे'ति । गौरवात्—तद्धेतुत्वकल्पनातस्तदभिव्यक्तिहेतुत्वकल्पनायां गौरवात् । विपक्षे गौरवप्रसङ्गः स्वपक्षस्यानुग्राहकस्तर्क इति हृदयम् । अभिव्यक्तिपक्षेऽनुपपत्तिमप्याह 'अभिव्यञ्जकाश्चे'ति । उच्चारणस्य वर्णाभिव्यञ्जकत्वे युगपदेव नानावर्णाभिव्यक्तिप्रसङ्गः । अभिव्यञ्जकस्यैकदेशस्थैकेन्द्रियग्राह्यसर्वाभि-

युगपदभिव्यञ्जन्ति, यथा प्रदीपो रूपसङ्ख्यापरिमाणानि करकादीं-श्चैकप्रदेशवर्तिनः। न चैवं ताल्वादिसंयोगविभागजनितपवन इति नासौ व्यञ्जकः ।

नित्यत्ववादिनः शब्दा निर्भागव्योमवर्तिनः ।
श्रावणाश्चेत्यभिव्यक्तिनियमे नास्ति कारणम् ॥ ३५ ॥
देशैक्ये ग्राहकैक्ये च व्यञ्जकैक्यं हि दर्शितम् ।
तदभावात्प्रयत्नोत्थमारुतः कारणं ध्वनेः ॥ ३६ ॥
अत एव च नानात्वं प्रत्युच्चारणमिष्यताम् ।
कृतस्य कारणायोगाद्धेतुपौष्कल्यभेदतः ॥ ३७ ॥
किञ्चोदात्तानुदात्तत्वदीर्घत्वह्रस्वतादयः ।
गादिस्था युगपद्भान्तो न भिन्द्युः स्वाश्रयान् कथम् ॥ ३८ ॥

---

व्यञ्जनस्वाभाव्यादिति भावः । वर्णाभिव्यञ्जकपवने वैजात्यपरिकल्पने त्वतिगौरवम्–व्यक्तिहेतुत्वकल्पनम्, व्यक्तिव्यवस्थित्यै व्यञ्जके वैजात्य-कल्पनं चेत्यपि वोध्यम् ।

व्यञ्जकत्वे दोषमेवोपपादयति सार्धश्लोकेन 'नित्यत्वे'ति । नित्य-त्ववादिन इति षष्ठ्यन्तम् । मते इति शेषः । एकाश्रयकत्वमेकेन्द्रिय-ग्राह्यत्वं च विशेषणद्वयेन सूचितम्। तथा चैकोच्चारणे सर्वव्यञ्जनप्रसङ्गो व्यञ्जकत्वपक्षे इति निगमयति 'देशैक्ये' इति । 'तदभावा'दिति । एकव्यञ्जकव्यङ्ग्यत्वाभावात् ध्वनेः—वर्णस्योच्चारणप्रयत्नोत्थितः कोष्ठ्य-मारुतस्ताल्वादिस्थानेऽभिघातं प्राप्त उत्पादक एव तस्य तस्य वर्णस्ये-त्यर्थः। व्यङ्ग्यत्वासंभवादुत्पाद्यत्वपक्षे प्रसक्तं प्रत्युच्चारणं गकारादेर्भिन्न-त्वमपि सम्मन्तव्यमेवेत्याह 'अत एवे'ति। विरुद्धधर्मोपलम्भादपि भेदं गादेः साधयति 'किञ्चोदात्ते'ति । आदिपदेन तारत्वमन्दत्वादि

स्थानैक्यापातसादृश्यात् प्रत्यभिज्ञाऽपि नैक्यतः ।
प्रदीपप्रत्यभिज्ञेव ज्ञापिता भेदहेतवः ॥ ३९ ॥

(इत्यात्मधर्मज्ञानस्यान्यत्र सम्बन्धोपपादनम्, शब्दस्य वायवीयत्वसमर्थनं च)

नन्वेवं चैतन्यसंयोगः, संयोगजो वा कश्चित्प्रकाशः प्राप्तः । उभयमपि तन्न चैतन्ये संभवति; भेदापेक्षत्वात् संबन्धस्य । आत्मनोऽपि न चैतन्येन संयोगः, तद्धर्मित्वात् । न हि धर्मधर्मिणोः संबन्धः संयोगः । समवायो हि सः; अयुतसिद्धसंबन्धत्वात् । संयोगस्तु पृथक्सिद्धयोर्द्रव्ययोः क्रियानिमित्ता प्राप्तिः, अकार्य-

---

ग्राह्यम् । एकस्यैव कालभेदेन विरुद्धान्वयसम्भवाद्युगपद्भान्त इत्युक्तम् । भान्तः—भासमानाः । व्यञ्जकत्वासम्भवादेव व्यञ्जकधर्मा व्यङ्ग्ये समारोप्यन्त इत्यपि दुर्वचमित्याशयः । ननु सोऽयं गकार इत्यादिप्रत्यभिज्ञा कथं प्रत्युच्चारणं भेदे ? तत्राह 'स्थानैक्ये'ति । सादृश्यमूलत्वाद्भ्रान्तिरूपा सेति भावः ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥

एवं नित्यत्वविभुत्वप्रतिक्षेपेण वायवीयगुणत्वं व्यवस्थापितं युक्त्या शब्दस्य विसृत्वरत्वं च । आत्मगुणस्य चैतन्यस्यान्यत्र संबन्धमात्रे दृष्टान्तः शब्दो गन्धश्च । आश्रयमन्तराऽन्यत्र गमने दृष्टान्तः सूर्यालोको मणिप्रभा च । द्रव्यरूपत्वादन्यत्र गमनं संभवति । आश्रयसंबन्धाविच्छेदात्तद्धर्मत्वं च सुस्थितमिति प्रघट्टकार्थः ।

एवमर्थसंबन्धश्चैतन्यस्योक्तः । प्रकाशतेव्यवहारश्च चैतन्यसंबन्धप्रयुक्त इत्यभिप्रेतम् । अत्र प्राभाकरः शङ्कते 'नन्वेव'मिति । चैतन्यसंयोगस्य प्रकाशमानताव्यवहारनियामकत्वे चैतन्ये तदाश्रये च तद्व्यवहारानुपपत्तिः । चैतन्यसमवायस्य तथात्वे च चैतन्यतद्विषययोस्तद्व्यवहारानुपपत्तिः । चैतन्यसंबन्धमात्रस्य तथात्वे चेन्द्रियादेरपि प्रकाशप्रसङ्गः । अतो निमित्तविशेषादेव तत्तज्ज्ञानस्य तत्तदर्थव्यवहारहेतुत्वं स्वभाव-

कारणयोर्वा तयोर्निरन्तरस्थितिः । चैतन्यसंयोगसमवाययोरन्यतरस्य, संबन्धमात्रस्य वा प्रकाशत्वे ज्ञातृज्ञानज्ञेयशरीरेन्द्रियेष्वव्याप्त्यतिव्याप्ती यथायोगमादर्शयितव्ये । तत्त्वान्तरप्रकाशाभ्युपगमस्त्वनुपलब्धिबाधितो न दूषणान्तरं प्रयोजयति । अतो यद्व्यवहारोदयानुगुणं ज्ञानम्, तत् प्रकाशत इत्येवाभ्युपगमो युक्तः । त्रितयव्यवहारानुगुण्यं संविदस्तु स्वभाव इत्यपर्यनुयोज्यं निमित्तवैरूप्यम् । न हि स्वभावाः पर्यनुयोगमर्हन्ति । एवं चेत्संयोगसमवायविरहिणोऽपि पदार्थस्य निमित्तभेदानुसारेण व्यवहारहेतुः संविदिति युक्तमाश्रयितुम् ।

(इति पुनः प्राभाकरमतविवरणम्)

उच्यते । उक्तमत्र, न निमित्तकारणमनुरुध्य कार्यं स्वकार्य-

---

तश्च स्वस्वाश्रयव्यवहारहेतुत्वमेष्टव्यमित्यनर्थकमर्थचैतन्यसंबन्धकल्पनमिति समुदिताशयः । विभुद्वयस्य संयोगोऽस्तीति पक्षे क्रियाया अभावात्तत्र संयोगं प्रकारान्तरेण निर्वक्ति 'अकार्ये'ति । अवयवावयविभिन्नयोर्द्रव्ययोरन्तरालाव्यवहितस्थितिः संयोग इत्यर्थः । स चाविभौ क्रियया । विभ्वोस्तु स्वत एवेति भावः । अर्थसंबन्धस्य निरासादेव तज्जन्यधर्मान्तरप्रकाशपक्षो निरस्तः । धर्मान्तरप्रकाशेऽनुपलब्धिबाधमप्याह 'तत्त्वान्तरे'ति । 'अपर्यनुयोज्य'मिति । स्वयमेव स्वस्य व्यवहारहेतुः, स्वाश्रयस्य स्वसमवायात्, विषयस्य तु स्वनिमित्तानुसारत इति प्रयोजकवैषम्यं न दूषणावहमित्यर्थः ।

गुरुमतेऽप्युक्ते दोषमाह विमर्शकः 'उच्यते' इति । स्वनिमित्तकारणवत्येव देशे स्वकार्यजनकत्वमदृष्टमन्यत्रेति इन्द्रियसन्निकर्षवत्येवार्थे ज्ञानेन व्यवहारो निष्पाद्यत इति न सम्यगिति भावः । दूषणान्तर-

मारभत इति। व्यवहारानुगुणसंवेदनत्वेऽपि प्रकाशपदार्थे प्रवृत्तिनिमित्तभेदो दुष्परिहर एव। बहुव्रीहिसमासाश्रयणे संविदन्तराभावेन तस्यां तदभावप्रसङ्गात्। कर्मधारयाश्रयणे ज्ञातृज्ञेययोरसंवेदनत्वेनाप्रकाशप्रसङ्गः। व्यवहारोदयानुगुण्यं च व्यवहारतोऽवगन्तव्यम्। ततः प्रागेव च भवति विदितत्वप्रतीतिर्व्याहारश्च।

(इति प्राभाकरमते पुनरपि दोषोद्भावनम्)

यद्येवम्, कस्तर्हि प्रकाशतेपदार्थः? । न हि निरवद्यमेकरूपं ज्ञातृज्ञेयज्ञानानुगतं तमुपलभामहे। उच्यते। नूनं भवानश्रुतपूर्वी प्रथमाधिकरणस्य न्यायतत्त्वे। अभिहितं हि तत्रेदमनुभवे स्मृतिमुपपादयद्भिः, 'अनुभवादूरत्वं स्मृतिनिमित्त'मिति। एतदुक्तं भवति—संविददूरत्वं प्रकाश इति।

---

मप्याह 'व्यवहारे'ति। ज्ञातृज्ञेययोःस्वव्यवहारानुगुणज्ञानकत्वलक्षणः प्रकाशः। ज्ञानस्य तु स्वव्यवहारानुगुणज्ञानत्वलक्षणः स इति त्रिष्वनुगतः प्रकाशपदार्थो नास्त्यनुगतव्यवहारनियामक इत्यर्थः। ननु ज्ञानाधीनं व्यवहारानुगुण्यमेवास्तु प्रकाशः। स चानुगत इत्यत्राह 'व्यवहारोदये'ति। व्यवहारयोग्यतारूपप्रकाशस्य व्यवहारत एवानुमेयतया व्यवहारात्पूर्वमेव जायमानौ विदितत्वप्रतीतिव्यवहारावनुपपन्नावित्यर्थः।

एवं विमर्शकेन प्रकाशपदार्थ आक्षिप्ते तटस्थः शङ्कते 'यद्येव'मिति। 'न ही'ति। ज्ञानसंबन्धमात्रस्याप्रकाशमानार्थसाधारण्यात् समवायादेश्चाननुगतत्वादन्यूनानतिरिक्तः प्रकाशतेपदार्थो दुर्निरूप इत्यर्थः। प्रकाशतेपदार्थः—प्रकाशतेपदघटकप्रकृतिप्रत्ययार्थः। सिद्धान्ती समाधत्ते 'उच्यते' इत्यादिना। प्रथमाधिकरणस्येति शैषिकषष्ठी। अनुभवे स्मृतिम्—अनुभवविषयिणीं स्मृतिम्। 'अनुभवादूरत्व'मिति। विषय-

आह—किमिदमदूर इति ? दूरादन्यस्तद्विरुद्धस्तदभावो वा ? तथा विशेषणमुपलक्षणं वा अदूर इति ? विशेषणत्वे पक्षत्रयेऽपि संवेदन-दूरत्वानुसन्धानपूर्विकया प्रकाशत इति प्रतीत्या भवितव्यम् । न च तथाऽस्ति । उपलक्षणत्वे स्वरूपान्तरं वाच्यम् । न च तदवगम्यत इत्युक्तम् । उच्यते; अलमस्थाने संभ्रमेण ।

भवत्वनुभवादूरं दूरादन्यद्विरोधि वा ।
तद्भावश्च प्रकाशत्वं(स्तु) किमत्र बहु जल्प्यते ॥ ४० ॥

---

स्येवानुभवस्याप्यनुभवादूरत्वमस्त्येवेति स्मृतिरुपपद्यत इति यावत् । नन्वस्तु नामैतत् । प्रकृते किमायातम् ? तत्राह 'एतदुक्त'मिति । संविददूरत्वं संविदोऽप्यस्तीत्युक्तप्रायम् । तद्रूप एव प्रकाशपदार्थस्त्रिष्वनुगत इत्युक्तं भवतीत्यर्थः ।

शङ्कते 'किमिद'मिति । नञो नानार्थत्वात्प्रकृते कोऽर्थ इति जिज्ञासया शङ्का । नञो यं कञ्चनाप्यर्थमभ्युपगम्य शङ्कान्तरं 'तथे'ति । दूर-भेदादेः प्रकाशपदार्थत्वे दूरज्ञानपूर्विकयैव तत्प्रतीत्या भवितव्यम् । न च तथोपलभ्यते । तस्योपलक्षणत्वे तूपलक्ष्याकारान्तरं वाच्यम् । नच तदस्ति । एवं पक्षद्वयेऽप्यनुपपत्तिप्रतीतिः शङ्काबीजम् । विकल्पासहत्वात्संविददूरत्वं न प्रकाशः स्यादित्याक्षेपो वा 'कि'मित्यादिः । परिहरति 'उच्यते' इति ।

प्रथमविकल्पं प्रतिवक्ति 'भवत्वनुभवे'ति । द्वितीयकल्पं प्रतिवक्ति 'तद्भावश्चे'ति । अनुभवदूरभिन्नत्वमनुभवदूरविरोधित्वं वा प्रकाशत्वम्—प्रकाशमानत्वम्, प्रकाशपदार्थ इति यावत् । अत्रानुभवपदं ज्ञान-सामान्यार्थकम् । अत्रेदं हार्दम्-शाखा चन्द्र इत्यादिवदुपलक्ष्योपलक्षणयोः सामानाधिकरण्यनिर्देशः 'तद्भावश्च प्रकाशत्व'मिति । तथा च संविद-दूरत्वोपलक्षितो धर्मः प्रकाश इति ॥ ४० ॥

प्रकाशत इति प्रतिभासोऽपि बुद्धिविप्रकर्षप्रत्यनीकबोधतत्संसृष्टपदार्थस्वरूपविमर्श एव, बाह्यप्रकाशवत्। तत्रापि ह्यालोके तद्व्याप्तभूभागादौ च प्रकटादिप्रख्योपाख्ये आलोकादूरत्वनिमित्ते। यथा च तत्र तन्निमित्ता सन्तमसनिवृत्तिः, एवमिहापि ज्ञानादूरत्वनिमित्ता अज्ञाननिवृत्तिः। अत एव चानुभूते अनुभवे चोत्तरकालतुल्यवत्स्मरणम्।

एवं च चैतन्यसंबन्धविशेषविषयविकल्पोऽप्यलब्धावकाश इति

---

उत्तरार्धं स्वयमेव विवृणोति 'प्रकाशत' इति। संविद्दूरभेदाद्युपलक्ष्याकारस्तु ज्ञानज्ञातृज्ञानसंबद्धार्थान्यतमभावः। प्रकाशपदस्य च संविददूरत्वोपलक्षितधर्मवाचित्वमिति भावः। यद्वा 'तद्भावश्च प्रकाशत्व'मित्यस्य संविद्दूरभिन्नत्वं संविद्दूरविरुद्धत्वं वा प्रकाश इत्यर्थः। नन्वेवं प्रकाशप्रतीतौ संविद्दूरप्रतीतेरप्यवश्यंभाविता प्रसज्यत इत्यत्राह 'प्रकाशत' इति। भावान्तरत्वादभावस्य संविद्दूरभेदस्य संवित्तत्संसृष्टपदार्थतदाश्रयविशेषरूपत्वाद्दूरपदार्थज्ञानमन्तराऽपि प्रकाशप्रतीतिर्घटते। प्रकाशपदस्य तु संविददूरत्वत्वावच्छिन्नमेवार्थ इति भावः। 'अज्ञाननिवृत्ति'रिति। अप्रकाशहेतुतमोगुणनिवृत्तिरित्यर्थः; यद्वा अप्रकाशनिवृत्तिरिति। ननु संविद्विषयत्वमेव प्रकाशोऽस्तु। संविदोऽपि संविदन्तरकर्मत्वात्प्रकाशप्रतीतिव्यवहारौ घटेते। तथा च किमदूरत्वपर्यन्तानुधावनेनेत्यत्राह 'अत एव चे'ति। घटानुभवोत्तरकाले घटानुभवविषयकज्ञानान्तरे चासति युगपद्घटतदनुभवयोः स्मरणमेवाप्रकाशितस्य स्मरणानुपपत्तेः संविददूरत्वप्रकाशतोपपादकमिति भावः।

'एवं चे'ति। संविददूरत्वस्यैव प्रकाशत्वेन, चैतन्यस्य संयोगः, समवायः, संबन्धमात्रं वा प्रकाश इति विकल्पस्य नावसर इत्यर्थः।

निरनुयोज्यानुयोग एव । नैरन्तर्यपदपर्यायमत्यन्तसामीप्यमात्रं च संयोगः। स एव परतन्त्राश्रितः समवायपदपरिभाषाभूमिर्वैशेषिकाणामिति नार्थान्तरत्वमूरीकृत्य विकल्पः संभवति। यथा च संयोगान्तर्भावः समवायस्य, तथा संबन्धविमर्शे दर्शयिष्यामः । ज्ञानादूरत्वप्रयुक्तो व्यवहारक्षमतालक्षणो वा परः प्रकाशः । स च सत्यपि स्वनिमित्तपौष्कल्ये प्रतिबन्धात् योग्यताविरहाद्वा व्यापित्वासङ्गि-

---

नैरन्तर्यस्यैव संयोगसमवायरूपत्वादपि तद्भेदोपजीवित्रिकल्पो न घटत इत्याह 'नैरन्तर्ये'ति । 'नैरन्तर्यपदपर्यायाभिधान'मिति पाठः स्याद्वा । अत्रेदं बोध्यम्—संविददूरत्वं च संविन्नैरन्तर्यमेव । तच्च संवित्तद्विषयतदाश्रयेषु समानम्। तत्र पृथक्सिद्धयोर्नैरन्तर्यं संयोगपदवाच्यम्, अपृथक्सिद्धयोः समवायपदवाच्यम्, स्वस्यैव स्वापेक्षया चाभेदपदवाच्यमिति। तथा च प्रकाशत इत्यत्र संविद्धात्वर्थः, नैरन्तर्यं प्रत्ययार्थ इति फलति । प्रकाशविषये सिद्धान्तपक्षमाह 'ज्ञानादूरत्वे'ति । चक्षुषा प्रकाशत इतिवत् ज्ञानेन प्रकाशत इति व्यवहारात् ज्ञानप्रयोज्यः प्रकाश इति स्वरसगतिः। स च ज्ञानादूरत्वप्रयुक्तो व्यवहारोदयानुगुण्यलक्षण एव ज्ञानज्ञातृज्ञेयसाधारण इति हार्दम्। नन्वेवमपि व्यवहारेणैव व्यवहारक्षमताया ज्ञातुं शक्यतया व्यवहारात्पूर्वं प्रकाशप्रतीतिर्नैव घटेतेति चेत्; मैवम्; अर्थेषु ज्ञानसंबन्धस्य नैरन्तर्यलक्षणस्य ज्ञानेनैव प्रतीतेस्तस्य च व्यवहारयोग्यताव्याप्यत्वानुसन्धानाद्विनाऽपि व्यवहारं तद्योग्यताया ज्ञेयत्वात्। ननु ज्ञानसन्निकर्षेणार्थस्य प्रकाश इत्युपगमे चाक्षुषज्ञानसन्निकर्षस्य रसादौ मानसज्ञानसन्निकर्षस्यात्मपरिमाणादौ च सत्त्वात्ततस्ततस्तत्तत्प्रकाशप्रसङ्ग इत्यत्राह 'स चे'ति । प्रतिबन्धः—प्रबलगुणान्तरेणाभिभवः । अभिभवेनाग्रहे निदर्शनं यमुनाजलरूपम् ।

त्वाद्यात्मधर्मान्तरेषु देहेन्द्रियादौ च न सञ्जायते, चक्षुस्सन्निकृष्ट इव कालिन्दीपयसि रूपरसादयः ।

( इति संविद्दूरत्वप्रयुक्तव्यवहारानुगुण्यस्य प्रकाशपदार्थतोपसंहारः )

अतो यथोक्तनीत्याऽऽत्मा स्वतश्चैतन्यविग्रहः ।
ज्ञा(भा)नस्वभाव एवान्यत्करणैः प्रतिपद्यते ॥ ४१ ॥

यत्तु सुखादिनिदर्शनेनात्मविशेषगुणतया चितेरागन्तुकत्वमुपपादितम्, तदपि गुणवृत्तापरिज्ञानेन; यतः

---

तदीयशौक्ल्यस्याग्रहो हि तलमलिनिमाभिभूतस्य । अयोग्यतयाऽग्रहे च यमुनाजलीयरसस्य चक्षुषाऽग्रहः । सति पुष्कलकारणे कस्यचिदग्रहोऽभिभवाद्वाच्यः । अयोग्यस्य तु पुष्कलकारणाभावादेवेति विवेकः । प्रबलदुःखादिना प्रचुरतमोयोगेन च स्वल्पसुखादेः स्वापे सतोऽपि ज्ञानस्य चाभिभवादग्रहः । अयोग्यत्वाच्चात्मपरिमाणादेरग्रह आत्ममानसेनेति हार्दम् ।

प्रकाशपदार्थविचारो वृत्तः प्रासङ्गिकः । विषयवित्तिवेलायामेवात्मनो वित्त्यधीनः प्रकाश इति वादस्य निरासार्थं प्राग् यत्समर्थितं ज्ञानस्वभावत्वमात्मनोऽनन्यापेक्षप्रकाशत्वं च, तन्निगमयति 'अत' इति कारिकया । यतो ज्ञेयज्ञानज्ञातृसाधारणः प्रकाशो निर्वक्तुं शक्यते, अतः पक्षसपक्षानुगतप्रकाशसिद्ध्या 'सजातीये'तिकारिकोक्तयुक्त्या स्वाधीनस्वप्रकाश आत्मा सिद्धः । स च ज्ञानस्वभावक एव । नत्वागन्तुकमस्य ज्ञानम् । चक्षुरादिना प्रसृताच्च धर्मभूतज्ञानादर्थान्तरस्यापि प्रकाशको भवत्यात्मेति कारिकार्थः । ह्लानस्वभाव इति प्राचीनमुद्रितपाठस्तु न समीचीनः ॥ ४१ ॥

अथ यद्बोधस्य स्वाभाविकत्वप्रतिपक्षतयाऽऽगन्तुकत्वमुक्तम्, तदनूद्य प्रतिक्षिपति 'यत्तु सुखादी'ति । 'तदपी'ति । गुणवृत्तं—गुण-

स्वरूपोपाधयो धर्मा यावदाश्रयभाविनः ।
नैवं सुखादि बोधस्तु स्वरूपोपाधिरात्मनः ॥ ४२ ॥

यथा च बोधोपाधिरात्मभावः, तथोपपादितम् । सुखदुःखे च नात्मधर्मौ,इन्द्रियसौष्ठवनाशयोरेव तद्भावोपपादनात् ।व्याकरिष्यते चैतदन्तिमपदार्थसमर्थनावसर इति साधनविकलता च निदर्शनस्य ।

---

स्वभावः । स च कः ? । तत्राह 'स्वरूपोपाधय' इति । स्वरूपोपाधित्वं स्वरूपनिरूपकत्वम् । तथाभूतानां धर्माणां यावदाश्रयभावित्वं स्वभावः । अन्येषां त्वागन्तुकत्वमिति गुणवृत्तम् । अस्त्वेवम्, ततः किम् ? तत्राह 'नैव'मिति । वैषयिकस्य सुखादेरागन्तुकत्वं स्यादेव । बोधस्य त्वात्मस्वरूपनिरूपकत्वादात्मनश्च नित्यत्वस्य स्थापयिष्यमाणत्वान्नागन्तुकत्वं साधयितुं शक्यत इति भावः ॥ ४२ ॥

'यथा चे'ति । बोधोपाधिरिति बहुव्रीहिः । ज्ञानाभिन्नस्वरूपनिरूपकधर्मक आत्मपदार्थ इत्यर्थः । ज्ञानवत्त्वेनैवोपलभ्यमानत्वयुक्त्या बोधोपाधित्वमात्मनः समर्थितम् । विषयसंबन्धकादाचित्कत्वाद्विषयोपरक्तज्ञानस्य कादाचित्कत्वप्रतीतावपि ज्ञानस्वरूपं नित्यमेवेति भावः । यद्यपि ज्ञानस्यात्मस्वभावत्वे नित्यत्वे च शास्त्रमग्रे प्रमाणीकरिष्यते । अथापि युक्तिप्रधानत्वात्प्रकरणस्यास्य युक्तिरेव पुरस्कृतेति बोध्यम् । अनेन ज्ञानस्यागन्तुकत्वानुमाने स्वरूपनिरूपकधर्मभिन्नत्वमुपाधिरित्युक्तं भवति । अथ तत्र निदर्शने हेत्वसिद्धिमप्याह 'सुखे'ति । अनुकूलप्रतिकूलज्ञानान्येव राद्धान्ते सुखदुःखरूपाणि । तेषां च पक्षान्तर्भावान्न निदर्शनता । ज्ञानविशेषातिरिक्ते च सुखदुःखे करणपाटवापाटवलक्षणे । तयोश्च नात्मगुणत्वमिति हेत्वसिद्धिर्दृष्टान्त इति भावः । 'अन्तिमे'ति । 'स्वतःसुखी'त्येतदंशसमर्थनावसर इत्यर्थः । नन्वेवमपि

रागद्वेषादयोऽपि मनोवस्थाविशेषाः न साक्षादात्मगुणाः। विज्ञायते हि "कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एवे"ति। गीयते च 'इच्छा द्वेषः सुखं दुःख'मिति। 'चेतनाधृति'रिति क्षेत्रलक्षणमेकपद्येन। चेतनया ध्रियमाणः सङ्घातो हि देहः। स्ववृत्त्यनुगुणचैतन्यमात्रादेव प्रवर्तमानं क्षेत्रमिति यावत्। अत एव ह्यन्तर्यामिब्राह्मणे 'यस्य

---

रागादेर्दृष्टान्तता स्यात्, आत्मविशेषगुणत्वादागन्तुकत्वाच्चेत्यत्राह 'रागे'ति। मनोवृत्तिभेदा रागादयो नात्मधर्माः। किन्त्वग्निधर्मस्यौष्ण्यादेस्तत्संसृष्टस्थाल्यामिव मनोधर्माणामात्मनि केवलं प्रतीतिः। तथा चोक्तं "निर्वाणमय एवायमात्मा ज्ञानमयोऽमलः। दुःखाज्ञानमला धर्माः प्रकृतेस्ते न चात्मनः॥" इति भावः। रागादेरन्तःकरणधर्मत्वं श्रुत्यामपि प्रतीयत इत्याह 'विज्ञायत' इति। अस्मिन्नर्थे भगवद्वचनमपि संवादयति 'गीयते चे'ति। क्षेत्राश्रितत्वादन्तःकरणस्य तद्धर्मा रागादयः क्षेत्रधर्मत्वेनोक्ताः। नन्वत्र 'चेतनाधृति'रित्यपि पठ्यते। अतो बोधस्यापि नात्मधर्मत्वमित्यत्राह 'चेतनाधृति'रिति। चेतनेति धृतिरिति च न पदद्वयम्। किन्तु चेतनाधृतिरिति समस्तम्। चेतनेन, चेतनया वा आधृतिर्यस्येति चेतनाधार्यं नियमतः शरीरमिति शरीरलक्ष्मोच्यतेऽत्रेति भावः। तदाह 'स्ववृत्ती'ति। वृत्तिः सत्ता, प्रवृत्तिर्वा। प्रवर्तमानम्—प्रकर्षेण वर्तमानं लब्धस्थितिकम्; प्रवृत्तिमद्वा। आत्मचैतन्यसम्बन्धाधीनस्वसत्ताप्रवृत्तिसामान्यकं शरीरमिति फलितोऽर्थः। इदमेव शरीरलक्ष्म साधु। करचरणादिमत्त्वादिलक्षणानामव्याप्त्यादिदोषादिति हृदये निधाय पृथिव्यादीनां परमात्मशरीरत्वपरश्रौतव-

पृथिवी शरीरम्' 'यस्यापः शरीरम्' 'यस्यात्मा शरीर'-मित्यादिनिर्देशः । 'तानि सर्वाणि तद्वपु' रिति च पुराणे।

किमिदं धीरिति ? उत्प्रेक्षाभिप्रायं तत्, न ज्ञप्तिविषयम्। तस्याः स्वाभाविकत्वस्य तस्यामेव श्रुतौ श्रूयमाणत्वात् । श्रूयते हि "न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते" इति, "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते अविनाशित्वा"दिति च । ज्ञातुरविनाशित्वादेव ज्ञानस्याविनाशमुपपादयन्तीयं श्रुतिर्ज्ञातुः स्वरूपप्रयुक्तं

---

चनान्युपादत्ते 'अत एवे'ति। भगवत्सङ्कल्पात्मकज्ञानेनैव लब्धस्वरूपस्थितिप्रवृत्तिकत्वात्सर्वस्य तच्छरीरत्वं शोश्रूयते मुख्यमेवेति भावः ।

'कि'मिति। नन्वन्तःकरणधर्मेषु धीरपि पठ्यते । तन्न बोधस्यात्मस्वभावत्वमिति गर्भितं चोद्यमत्र । परिहरति 'उत्प्रेक्षे'ति । चित्तवृत्तिविशेषेषु उत्प्रेक्षा धीरित्युच्यत इत्यर्थः। यद्यपि कामादिकानामपि मतमात्मधर्मत्वम् । परं नैते स्वाभाविका आत्मनः, किन्तु कर्माद्युपाधिनिबन्धनाः । कामादितत्तद्बुद्धिवृत्तिहेतुव्यापारवत्तया च मनसस्तत्तदभेद निर्देश औपचारिकः श्रुतौ कृत इति सिद्धान्तः। अथाप्यवस्थाविशेषविशिष्टस्य ज्ञानस्यैव रागादिरूपतया ज्ञानकादाचित्कत्वानुमाने न रागादेर्दृष्टन्तता संभवति। नच विशिष्टनिदर्शनेन ज्ञानमात्रस्यागन्तुकत्वं साध्यमिति वाच्यम् । अवस्थाविशिष्टस्यैवोपलभ्यमानतयाऽविशिष्टे ज्ञानमात्रे आगन्तुकत्वसाधनायोगात्। तस्य श्रुतिसिद्धत्वे च तन्नित्यत्वमपि श्रुतिसिद्धमेवेति धर्मिग्राहकमानबाधः । असतोऽवस्थाऽयोगेन च ज्ञाननित्यत्वमेव युक्तिमदिति हार्दम्। यथाश्रुतं त्वभ्युपगमवादेन । ज्ञाननित्यत्वे श्रुतिमुदाहरति 'श्रूयते ही'ति । विज्ञातित्वदृष्टित्वाद्यवस्थाभाजो ज्ञानस्वरूपस्य नित्यत्वमत्र विवक्षितम् । विपरिलोपः—विनाशः । नन्वत्राविनाशित्वमेवोक्तम्, नानाद्यनन्तत्वं ज्ञानस्येत्यत्राह

ज्ञानमिति दर्शयति। न च दृष्टिविशेषणतया द्रष्टुरुपादानमिति साम्प्रतम्, पुंल्लिङ्गनिर्देशविरोधात्; हेतोश्च साध्यसमत्वापत्तेः। द्रष्टुः स्वरूपनिर्देशपरत्वेऽपि दृष्टिपदस्यासमाधेयमहेतुत्वम्, स्वपक्षहानिश्च। आत्मनस्तु नित्यत्वमप्रचाल्यमनेकन्यायागमसिद्धं युक्तं हेतुतया व्यपदेष्टुम्। न हि सति पदार्थे तत्स्वरूपोपाधयो न भवितुमर्हन्ति, सति कनक इव पैङ्गल्यम्, प्रभेव च प्रदीपे। तेनायमर्थः—

---

'ज्ञातु'रिति। स्वरूपनिरूपकत्वेन नित्यात्मस्वरूपप्रयुक्तस्य ज्ञानस्य पुरातनत्वमपि फलतीति भावः। 'न चे'ति। अभेदेन दृष्टिविशेषणत्वं द्रष्टृपदस्य न युक्तं, तथासति 'द्रष्ट्र्या' इति स्त्रीलिङ्गनिर्देशेन हि भाव्यमिति भावः। शब्दविरोधमुक्त्वार्थविरोधमाह 'हेतोश्चे'ति। साध्यसमत्वम्—असिद्धत्वम्। सर्वकालवर्तमानतालक्षणनित्यत्वरूपसाध्यस्यैवाविनाशित्वरूपहेतोरप्यसिद्धिरित्यर्थः। अविनाशित्वस्यैव साध्यतया तस्यैव हेतुत्वायोग इति वा। अर्थान्तरपरत्वमाशङ्क्य परिहरति 'द्रष्टु'रिति। अत्र योजनायां दृष्टिपदं भावप्रधानम्। ज्ञानत्वायोगव्यवच्छेदो द्रष्टुः साध्यः। अत्र चाप्रयोजकत्वेन हेतोरहेतुत्वम्—असाधकत्वं दुष्परिहरमिति भावः। 'स्वपक्षे'ति। आत्मनो ज्ञानरूपत्वोपगम आगन्तुकज्ञानवादिनोऽपसिद्धान्तश्चेत्यर्थः। अद्वैत्यभिमते च निरुक्तश्रुत्यर्थे दूषणमत्राभिमतम्। यथा—ज्ञातुर्ज्ञानस्वरूपानतिरेके साध्ये व्यधिकरणासिद्धत्वेनात्मनित्यत्वस्याहेतुत्वम्। ज्ञातुरहमर्थस्यात्मत्वाविनाशित्वोपगमे चापसिद्धान्त इति। निरुक्तश्रुतेरभिमतमर्थं वक्तुं विषयं विशोधयति वाक्यद्वयेन 'आत्मनस्त्वि'ति, 'नहि सती'ति च। नित्यात्मस्वरूपनिरूपकधर्मत्वं ज्ञानस्य नित्यत्वे हेतुर्वाक्यद्वयेन समसूचि। अथ श्रुतिवाक्यार्थमाह 'तेने'ति। द्रष्टुरिति व्यधिकरणविशेषणं दृष्टेर्ज्ञानस्य धर्मभूतस्य। आत्मनो नित्यत्व'मविनाशित्वादात्मन' इत्यु-

आत्मस्वभावभूतायाश्चितेर्बाह्याभ्यन्तरविषयविशेषसंबन्धप्रकारप्राप्त-दृष्टिघ्रातिरसयतिवक्तिश्रुतिमतिस्पृष्टिविज्ञातिव्यपदेशभेदायाः स्वात्मावभासिन्याः संसारापवर्गावस्थयोर्न जातुचिद्विपरिलोपो विद्यत इति। 'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव, एवं वा अरे अयमात्मा अनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघनः' तथा, 'स्वेन भासा स्वेन ज्योतिषा' 'आत्मज्योतिः सम्राडिति होवाच' इति। तथाऽपवर्गदशायामेव

---

क्तम्। 'द्रष्टु'रिति धर्मिनिर्देशाच्चात्मस्वरूपनिरूपकधर्मत्वं ज्ञानस्य सिद्धम्। तथा च फलितं हेतुमाह 'आत्मस्वभावभूताया' इति। नित्यात्मस्वभावत्वं हेतुः। एतेन व्यधिकरणासिद्धिशङ्का निरस्ता। विषयविशेष संबन्धप्रकारः—इन्द्रियादिद्वारकप्रसृतिभेदाधीनचैतन्यार्थसंबन्धविशेषलक्षणः, तेन प्राप्तो दृष्ट्यादिव्यपदेशो ययेति समासः। दृष्टिश्चाक्षुषमध्यक्षम्। घ्रातिर्घ्राणजम्। रसयतिः—रासनम्। वक्तिः— शाब्दं ज्ञानम्। श्रुतिः—श्रावणमध्यक्षम्। मतिरनुमानम्। स्पृष्टिः—स्पार्शनमध्यक्षम्। विज्ञातिरुपासनम्, योगजः साक्षात्कारो वा। स्वात्मावभासिन्याः-स्वप्रकाशायाः। ज्ञानस्यात्मस्वभावत्वे नित्यत्वे चान्या अपि श्रुतीरुदाहरति 'स यथे'ति। अनन्तर इति बाह्यः, अबाह्य इति आन्तरश्च प्रदेशः सामस्त्येन विवक्षितः। कार्त्स्न्यं चात्मनः स्वरूपतो धर्मतश्च। तथाच ज्ञानस्वरूपत्वं ज्ञानस्वभावत्वं चात्मनः सदा लभ्यते। उक्तेऽर्थे श्रुत्यन्तरं 'स्वेन भासा स्वेन ज्योतिषे' ति। स्वरूपतो धर्मतश्च प्रकाशरूपत्वमत्रोच्यते। 'आत्मज्योति'रित्यपि निरुक्तार्थमेव। सूर्यादिज्योतिर्हि ज्योतिष्मज्ज्योतीरूपं च, तथाऽऽत्मापि। सूर्यादिज्योतिषः प्रकाश इव, आत्मनो ज्योतीरूपं ज्ञानं स्वाभाविकमिति चात्र विवक्षितम्। मुक्तौ

च्छन्दोगाः 'न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम्। सर्वं ह पश्यः पश्यति' 'नोपजनं स्मरन्' इति, 'स वा एष एतेन दैवेन चक्षुषा मनसैतान् कामान् पश्यन् रमते' इति च। अन्याश्च 'जानात्येवायं पुरुषः, ज्ञातव्यं तु न वेद' इत्याद्याः सकलकरणोपरमदशायामप्यात्मनः प्रबोधमभिदधानाः श्रुतयो बोधस्वभावतामस्य द्रढयन्ति। 'निर्वाणमय एवायमात्मा ज्ञानमयोऽमल' इत्यादि च पुराणे। 'ज्योतिषामपि तज्ज्योति'रित्यादि इतिहासे। भगवान् शौनकश्च—

"यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः।
दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा॥
यथोदपानकरणात् क्रियते न जलाम्बरम्।
सदेव नीयते व्यक्तिमसतः सम्भवः कुतः॥
तथा हेयगुणध्वंसादवबोधादयो गुणाः।
प्रकाश्यन्ते न जन्यन्ते नित्या एवात्मनो हि ते॥" इति।

---

ज्ञानानुवृत्तौ श्रुतिमुपक्षिपति 'तथाऽपवर्गे'ति। स्वाभाविकाकाराविर्भावलक्षणायां मुक्तौ ज्ञानानुवृत्त्या ज्ञानस्यात्मस्वभावानुबन्धित्वं प्रसिध्यतीति भावः। स्वापेऽपि ज्ञानानुवृत्तिपरां श्रुतिमाह 'अन्याश्चे'ति। सतोऽपि ज्ञानस्यार्थसन्निकर्षाभावात्स्वापे नार्थप्रकाश इति 'जानात्येवे'त्यादेरर्थः। नित्यत्व आत्मस्वभावत्वे च ज्ञानस्य स्मृतीश्चोदाहरति 'निर्वाणे'ति। पुराणे—श्रीमति वैष्णवे। 'ज्ञानमय' इति। मयट् प्राचुर्ये। एवकारोऽत्रापि संबध्यते। ज्ञानप्रचुर एवेत्यवधारणेन निरुक्तार्थलाभः। 'ज्योतिषामपी'ति महाभारते श्रीभगवद्गीतायाम्। ज्ञाननित्यत्वादौ स्फुटं श्रीविष्णुधर्मवचनमुपक्षिपति 'भगवा'नित्यादिना। 'आहे'त्यध्याहार्यम्।

अत एव हि सूत्रकारश्च 'ज्ञोऽत एव' इति ।

( इति धर्मभूतज्ञाननित्यत्वस्य श्रुत्यादिभिः प्रतिष्ठापनम् )

तदेवमात्मस्वभावभूतस्य चैतन्यस्य विषयसंश्लेषविशेषेषु निश्चय-संशयादिव्यवहारभेदः, तत्तद्विशेषभाजि चैतन्ये वा । चैतन्यस्य विषयेण दृढसंयोगो हि निश्चयः; तस्यैव बहुभिर्युगपद्दृढसंयोगः संशयः; ज्ञानवासनानुसारेण संश्लेषः स्मरणमित्यादिः । उक्तं च 'आत्मधर्मस्य चैतन्यस्य विषयेण संयोगो ज्ञानमित्युच्यते' इति । नचैवं संयोगस्योभयाश्रितत्वेन विषयस्यापि ज्ञातृत्वप्रसङ्गः । विषयेण

---

उक्तार्थे सूत्रमपि प्रमाणमित्याह 'अत एव ही'ति । अतः—श्रुतित एव आत्मा ज्ञः—ज्ञातैवेति सूत्रार्थः । ज्ञ एवेत्यनेन नित्यत्वमात्म-स्वभावत्वं च ज्ञानस्य सूत्रकृदभिमतम् । अत एव ज्ञाननित्यत्वे स्वापेऽपि प्रकाशः स्यादित्याशङ्क्य परिहृतं 'पुंस्त्वादिव'दित्यनेन ।

नन्वेवं ज्ञानस्यात्मधर्मभूतस्य स्वाभाविकत्वे तस्य संशयनिश्चयादि-भेदः स्मृत्यनुभवभेदश्च कथम्? तत्राह 'तदेव'मिति । युगपत्—झटिति, नैरन्तर्येणेति यावत् । ज्ञानवासना—अनुभवाधीनसंस्कारो ज्ञानसूक्ष्मांशः । चैतन्यार्थसंश्लेषविशेषः, अर्थसंश्लेषविशेषविशिष्टं चैतन्यमेव वा संशयनिश्चयादिव्यपदेशभागित्युक्तम् । तत्र प्रथमपक्षे शङ्कते 'न चैव'मिति । संयोगस्य द्विष्ठत्वेन चिदर्थसंयोगस्य ज्ञानत्वे विषयस्यापि ज्ञातृत्वप्रसङ्ग इत्यर्थः । चैतन्यस्य ज्ञातृत्वप्रसङ्गे कथञ्चि-दिष्टापत्तिसम्भवाद्विषयस्य ज्ञातृत्वं प्रसञ्जितम् । यद्वा विषयस्य—विषयाश्रयस्य । यथाश्रुते आत्मनोऽपि तत्तज्ज्ञानाश्रयत्वं न स्यात् पक्षेऽस्मिन् । अतः स्वाश्रयाश्रयत्वसंबन्धेन ज्ञानवत्त्वमेव ज्ञातृत्वमत्र पक्षे वाच्यमिति विषये न ज्ञातृत्वप्रसङ्ग इति । परिहरति 'विषयेणे'ति ।

संयोगाभावात्। चैतन्येन हि तस्य संयोगः, बाह्यप्रकाशवत्। यथा खलु आलोकसंबन्धेऽपि प्रकाशे सूर्यादेरेव प्रकाशकत्वं न घटादेः। अथ सूर्यादितन्त्रत्वादालोकस्य स एव तद्धर्मा तत्संबन्धेनार्थान्तरस्य प्रकाश(क) इत्युच्यते, इहापि तर्हि चैतन्यस्यात्मधर्मत्वात्तेनार्थान्तरं स्पृशन् स एव जानातीत्युपपद्यते। तत्सिद्धं चैतन्यस्वभाव

---

विषयेणेति हेतौ तृतीया। विषयशब्दो विषयव्यापारपरः। एवमग्रे चैतन्येनेत्यत्रापि। अयं भावः—अर्थग्रहणार्थं व्याप्रियमाणं हि चैतन्यमेव। तथाच विषयचैतन्यसंयोगस्य तत्तदर्थज्ञानत्वेऽपि तस्य स्वानुकूलव्यापृतिमच्चैतन्याश्रयत्वसंबन्धेनात्मन्येव सत्त्वात्तस्यैव ज्ञातृत्वं नार्थादेरित्युपलम्भबलाद्व्यवस्थाप्यम्, यथा आलोकार्थसंयोगस्यैव प्रकाशत्वेऽपि प्रकाशकत्वं स्वधर्मभूतालोकप्रसरणवशात्सूर्यादेरेव नार्थस्य तद्वदिति। यद्वा विषयानुयोगिकसंयोगाभावादिति विषयेणेत्यादेरर्थः। तस्य संयोगः—विषयप्रतियोगिकसंयोगः। एवं प्रथमं पक्षमुपपाद्य तत्तदर्थसंबद्धं चैतन्यमेव तत्तदर्थज्ञानमिति द्वितीयं पक्षं शङ्कासमाधानमुखेन व्यवस्थापयति 'अथे'ति। प्रकाशः—प्रकाशकः। सूर्यादितन्त्रत्वम्—सूर्याद्यधीनस्वरूपस्थितिप्रवृत्तिकत्वं तदपृथक्सिद्धविशेषणत्वं च। तत्तदर्थसंबद्धालोकाश्रयस्यैव सूर्यादेः प्रकाशकत्वमिव तत्तदर्थसंबद्धचैतन्यवत आत्मन एव ज्ञातृत्वमित्यर्थः। अयमेव मुख्यः पक्षः। ज्ञातृत्वस्य साक्षादात्मनि सङ्गतेरिति भावः। 'अनन्यसाधन' इत्युक्तमनन्याधीनसिद्धित्वं चैतन्यस्वभावत्वं चात्मनो निगमयति 'तत्सिद्ध'मिति। चैतन्यस्वभाव एव—ज्ञातृत्वस्वभाव एव। अनेन ज्ञानस्यागन्तुकत्वं निरस्तम्। आत्मानं विदन्नेवास्ते-नित्यानन्याधीनस्वप्रकाशवानेवास्ते। अनेनात्मनः प्रकाशस्यागन्तुकत्वं ज्ञानप्रयुक्तत्वं च व्यावर्तितम्। निमि-

एवायमात्मा आत्मानं विदन्नेवास्ते; अन्यत्तु निमित्तभेदानुसारेण जानाति न जानाति चेति ।

( इति धर्मभूतज्ञानस्य संशयाद्यवान्तरभेदोपपादनम् )

तदेवं चैतन्यस्वभावः परिस्फुरन्नप्ययमात्मा गम्भीरजलाशयचरमीनवत् जलसंसृष्टक्षीरवच्च न विविच्य स्फुटं चकास्तीति तदुपपादनन्यायानुगताः पूर्वानुमानभेदाः वचनानि चाद्रियन्ते । तैरप्यपरितुष्यन्तो यमनियमादियोगाङ्गानुष्ठानक्षपिताशुद्ध्यावरणमलाः निरोधाभ्यासपुटपाकनिर्धूतरजस्तमःकलङ्कसत्त्वोद्रेकसमुत्थस्वेतरसकलविषयवैलक्षण्यापरोक्षज्ञानाय प्रयतन्ते । भावनाप्रकर्ष-

---

त्तभेदानुसारेण—इन्द्रियलिङ्गादिज्ञानार्थसन्निकर्षोपाध्यन्वयव्यतिरेकानुविधानतः । शिष्टं स्पष्टम् ।

स्वयंप्रकाशस्यात्मनः शाब्दादिप्रमाणधीगोचरत्वमपि साधयति 'तदेव'मित्यादिना । अस्फुटप्रकाशे मीनो निदर्शनम्; अविवेकग्रहणे च क्षीरम् । तदुपपादनन्यायानुगताः—आत्मानात्मविवेकोपपादकावयवपञ्चकात्मकन्यायप्रयोज्याः, अनुमानभेदाः—अनुमानविशेषाः । वचनानि—प्रमाणवाक्यानि शास्त्रानुगतानि । 'तैरपि' इति । अनुमानागमानां परोक्षैकहेतुत्वेन प्रस्फुटप्रकाशासम्पादकत्वात्तावन्मात्रेऽपरितोषः प्रस्फुटात्मप्रकाशाकाङ्क्षिणां युक्त एव हि । मन्मआदिगतज्ञानावारणदोषक्षपणं योगाङ्गानुष्ठानेन सम्पद्यत इति यमनियमेति द्योतितम् । निरोधाभ्यासः—योगाभ्यासः । 'योगश्चित्तवृत्तिनिरोध' इति हि योगसूत्रम् । योगाभ्यासपरिपाकतो रजस्तमःकालुष्यनिवृत्त्योद्रिक्तविशुद्धसत्त्वे मनसि आत्मविवेकसाक्षात्कारयोग्यतेति 'निरोधाभ्यासे'त्यादेरर्थः । वैलक्षण्यस्यात्मगतस्यापरोक्षज्ञानाय, प्रयतन्ते—आसिद्धिनिष्प-

पर्यन्ते चापरोक्षज्ञानमुदयत इति सर्ववादिनिर्विवादमिति न तदु-पपादनायाद्य प्रयत्यते ।

एवमात्मा स्वतःसिद्ध्यन्नागमेनानुमानतः ।
योगाभ्यासभुवा स्पष्टं प्रत्यक्षेण प्रकाश्यते ॥ ४३ ॥

( इत्यात्मप्रमाणनिरूपणप्रकरणम् । )

अथास्य कालावच्छेदपरीक्षा । तत्र सुगतमतानुसारिणः सन्मात्रा-नुबन्धिनीं क्षणिकतामाचक्षाणा नित्यात्मदर्शनमेव सर्वानर्थमूलं मन्यमानाः क्षणभङ्गिनमेनं सङ्गिरन्ते; यत् सत् तत् क्षणिकम्, संश्चायमात्मेति । कथं पुनः सन्मात्रानुबन्धिनी क्षणिकता ? ।

---

त्तेर्निरन्तरमात्मतत्त्वचिन्तनप्रवृत्तिमाचरन्ति । 'भावने'ति । आत्मनो निरन्तरानुचिन्तनलक्षणे योगे भावनाप्रकर्षपर्यन्ते निष्पन्ने सति, चा-परोक्षज्ञानम्—योगजधर्मानुगृहीतविशुद्धमनोजन्यात्मतत्त्वसाक्षात्कारः, उदयते—जायत इत्यर्थः ।

उक्तमर्थं सङ्गृह्णाति 'एवमात्मे'ति । स्वप्रकाशस्यात्मनो धर्मभूतं ज्ञानं विषयादिग्रहणे देहादिवैलक्षण्यग्रहणे चात्मन उपयुज्यत इत्येता-वता सिद्धम् । एवमात्मनि प्रमाणपरीक्षा वृत्ता ॥ ४३ ॥

अथ नित्यत्वं व्यवस्थापयितुं विचारमुपक्रमते 'अथास्ये'ति । अस्य—आत्मनः, कालावच्छेदपरीक्षा—कालसंबन्धविषयविचारः । प्रवर्तत इति शेषः । 'तत्रे'ति । आत्मनः कालसंबन्धे विचारविषये क्षणमात्रकालसंबन्धिनं विनाशिनमात्मानमामनन्ति केचन वादिनः ( सौगताः ) इति यावत् । कालसंबन्धः क्षणिकत्वलक्षण एवेत्यमीषा-माशयः । सत्त्वात् क्षणिकत्वमात्मन इत्युक्तम् । सत्त्वस्य क्षणिकत्व-

अक्षणिकस्य सत्तानुपपत्तेः । यन्न कस्मैचित्कार्याय, अन्ततः सार्वज्ञ्य-विज्ञानगोचरत्वायापि न प्रभवति, न तस्य सद्भावः संभाव्यत इत्यर्थ-क्रियाकारितैव सत्ता भावानाम् । न च सा स्वव्यापकभूतक्रमयौग-पद्यविरहिण्यक्षणिके संभविनीत्यन्यत्र निरवकाशतया क्षणिकतयै-वानुबध्यते । कथं पुनः क्रमयौगपद्ययोरर्थक्रियाव्यापकत्वम् ? कथं वा तयोरक्षणिकान्निवृत्तिः ? । श्रूयताम् ।

अर्थक्रियासु भावानां कर्तृत्वस्य द्वयी गतिः ।
क्रमेण युगपद्वेति न विधान्तरसंभवः ॥ ४४ ॥

---

व्याप्यत्वे सिद्धे शोभनमिदम् । तदेव कुत इत्यतः सत्त्वं क्षणिकत्व-व्याप्त्यर्हं परिष्करोति 'यन्ने'ति । अर्थक्रियाकर्तृत्वमेव सत्त्वम्, तच्च क्षणिकत्वव्याप्यमित्याशयः । सार्वज्ञ्यविज्ञानम्—बुद्धज्ञानम् । क्षणिकत्व-व्याप्तिमेवोपपादयति 'न च से'ति । अर्थक्रियाकर्तृत्वव्यापकं क्रमा-क्रमान्यतरत् । तच्चाक्षणिके स्थिरेऽघटमानं कर्तृत्वं क्षणिके व्यवस्थाप-यतीति सत्त्वं क्षणिकत्वव्याप्यमेवेत्यापततीति भावः । क्रमयौगपद्यान्य-तरस्य कर्तृत्वव्यापकत्वम्, तस्य स्थिरेऽसम्भवं चोपपादयितुं प्रश्नः 'कथं पुन'रिति । उत्तरं 'श्रूयता'मित्यादिना ।

'अर्थे'ति । किञ्चिदर्थक्रियाकरणं क्रमेण, किञ्चिचाक्रमेण-युगपत् । यौगपद्यासंभवे क्रमः, तदभावे च यौगपद्यं नियतमिति क्रमयौगपद्यान्य-तरव्याप्यैवार्थक्रिया भवतीत्यर्थः ॥ ४४ ॥

भावाभाववदनयोरन्यतरनिवृत्तावन्यतरव्यवस्थानादर्थक्रियाजनने भावानां न तृतीयप्रकारसंभव इति क्रमाक्रमप्रतिबद्धैवार्थक्रिया। न चाक्षणिके क्रमयौगपद्ये संभवतः।

( एतावानेवात्मसिद्धिग्रन्थभाग उपलभ्यते )

इति श्रीमद्विशिष्टाद्वैतसिद्धान्तप्रवर्तनधुरन्धरपरमाचार्यश्रीभगवद्यामुनमुनिसमनुगृहीते सिद्धित्रये आत्मसिद्धिः॥

---

भवत्वेवम्। अथापि स्थिरे कथं न सा? तत्राह 'न चे'ति।

ग्रन्थभागोऽग्रिमः क्वापि नेतः समुपलभ्यते।
व्याख्यानं विहितं यावदुपलब्धस्य सारतः॥

इति श्रीनागपुरी (तिरुनाङ्गूर) दिव्यदेशाभिजनेन प्रतिवादिभयङ्कराचार्यान्वयभूषणविद्वद्वर्य श्रीकृष्णमाचार्याख्याचार्यवर्यपुत्ररत्नेन चतुस्त्रीपारावारपारीणदिगन्तविश्रान्तकीर्ति-दयामूर्ति-श्रीमद्भाष्यकारदिव्यवंशावतीर्ण-श्रीभूतपुरीनिवासरसिक-विद्वत्सार्वभौम-हारीत-श्रीमदासूरिरामानुजाचार्यदेशिकेन्द्रचरणकमलवरिवस्यासमधिगतपदवाक्यप्रमाणतन्त्रहृदयेन श्रीवैष्णवदासेन प्र. भ. अण्णङ्गराचार्येण न्यायव्याकरणशिरोमणिनोभयवेदान्तविदुषा प्रणीतमात्मसिद्धेर्व्याख्यानं सिद्धाञ्जनं जयतात् चिरम्।



श्रीः।

श्रीहरिर्जयति।

श्रीमद्भगवद्यामुनमुनये नमः।

श्रीमते रामानुजाय नमः।

परमाचार्यश्रीमद्यामुनमुनिसमनुगृहीते सिद्धित्रये-

# ईश्वरसिद्धिः।

## सिद्धाञ्जननामकव्याख्योपेता।

---

(सू०) तत्र कस्यचिदेकस्य वशे विश्वं प्रवर्तते।
इति साधयितुं पूर्वं पूर्वपक्षं प्रचक्ष्महे॥ १॥

---

(व्याख्या) ध्यात्वा श्रीपतिचरणौ नत्वा चाचार्यपादपद्मयुगम्।
ईश्वरसिद्धेर्विवृतिं कुर्वे ललितां सुखावबोधार्थाम्॥ १॥
त्र्यन्तसिद्ध ईशो मतस्तु सद्युक्तिचिन्तकैरनिशम्।
भक्त्या ध्यानाभ्यासात् प्रकटः प्रज्ञां तनोतु मे शुभ्राम्॥२॥

अथ खलु तत्रभवान् परमाचार्यः श्रीमद्भगवद्यामुनमुनिरात्मचिन्तां विधायात्मसिद्धौ परमात्मचिन्तां विदधदीश्वरसिद्धावीश्वरसाधकप्रमाण-व्यवस्थापनायोपक्रममाणः प्रतिजानीते 'तत्रे'ति। समस्तं चेतनाचेतना-त्मकं जगत् एकस्य—सर्वेश्वरस्य वशे— इच्छायां सङ्कल्पलक्षणायां प्रवर्तते-प्रकर्षेण वर्तते—असङ्कीर्णस्वरूपस्वभावव्यवस्थमास्ते, प्रवर्तन्ते च स्वे स्वे कर्मणि यथायथमिति कृत्स्नस्य सर्वेश्वरसङ्कल्पाधीनस्वरूपस्थितिप्रवृत्तिकत्वं साधयितुं-प्रमाणतो व्यवस्थापयितुं, प्रथमतः पूर्वपक्षं वर्णयाम इति कारिकार्थः। अत्र 'तत्रे'ति प्रकान्तपरामर्शकतच्छब्दनिर्देशादेतत्पूर्वतनः कश्च-नेश्वरसिद्धिग्रन्थभागः स्यात्, यो बहोः कालात्पूर्वमेवविलुप्त इत्यभ्यूह्यते१

तत्र मीमांसकाः प्राहुः—नायं सर्वार्थदर्शनशक्तिसम्पन्नः पुरुषोऽभ्युपगममर्हति, अतिपतितसकलसाधकप्रमाणसम्भावनाभूमित्वात्स्फुटविविधबाधकत्वाच्च। तथाहि—अस्य प्रत्यक्षमन्यद्वा साधकं भवेत्? प्रत्यक्षमपि लौकिकं यौगिकं वा?

व्यवस्थितमितस्वार्थं न तावदिह लौकिकम्।
साधनं तेन सर्वार्थतज्ज्ञानादेरसिद्धितः ॥ २ ॥

---

'नाय'मिति। सर्वार्थसाक्षात्कारसर्वकार्योपजननशक्तिसम्पन्नश्चेतनविशेष ईश्वरशब्दितः साधकाभावाद्बाधकबलाच्च नाङ्गीकर्तुं योग्य इत्यर्थः। 'अतिपतिते'ति। अतिपतिता-अपक्रान्ता सकलसाधकप्रमाणसम्भावना यस्याः एवम्भूता भूमिर्विषयः, तत्त्वात्—व्यपेतसकलसाधकप्रमाणसम्भावनात्मकविषयत्वादित्यर्थः। अत्र 'अतिपतितसकलसाधकप्रमाणसम्भावनत्वा'दिति 'अतिपतितसकलसाधकप्रमाणसंभावनाभूमित्वत्वा'दिति वा पाठः सम्भाव्यते। 'स्फुटे'ति। स्फुटानि-प्रसिद्धानि विविधानि बाधकानि यस्यैवम्भूतत्वाच्चेत्यर्थः। उपक्षिप्तयोरीश्वरे साधकाभावबाधकभावयोः साधकाभावं तावदादौ समर्थयितुमुपक्रमते 'तथाही'त्यादिना। अन्यत्—अनुमानादि।

लौकिकस्येन्द्रियार्थसन्निकर्षजस्य प्रत्यक्षस्येश्वरासाधकतामुपपादयति 'व्यवस्थिते'ति। हेतुगर्भमिदं विशेषणम्। लौकिकप्रत्यक्षस्य विषया यतः परिमिता व्यवस्थिताश्च, अत इत्यर्थः। इह—ईश्वरे विषये। साधनं-साधकम्। प्रमाणमिति यावत्। तेन—लौकिकप्रत्यक्षेण। असिद्धितः-अप्रकाशतः। अयं भावः—चाक्षुषस्य तावत् प्रत्यक्षस्य रूपरूपिरूपैकार्थसमवेतसङ्ख्यादय एव विषयाः, न तु रसादय इति परिमितता। उद्भूतानभिभूतमेव रूपं महत्त्वैकाधिकरणं ग्राह्यं न तु परमाण्वादिगत-

सर्वार्थदर्शनशक्तिशालिनमवगमयता हि देशकालस्वभावविप्रकर्षव्यवधानजुषः सर्व एवार्थास्तद्दर्शनं शक्तिश्च गोचरयितव्यानि । न च विद्यमानेन्द्रियसन्निकर्षयोग्यकतिपयविषयनियतवृत्तेर्लौकिक-

---

मिति तत्रापि व्यवस्थितता । एवं रासनादिष्वपि बोध्यम् । एवंभूतस्य चैन्द्रियिकप्रत्यक्षस्य सर्वार्थादेरप्रकाशकत्वान्नेश्वरे प्रमाणत्वं सम्भवति । सर्वार्थदर्शनकरणसामर्थ्यविशिष्टो ह्यभिमतः सः । सर्वार्थस्य तद्ग्रहणस्य तच्छक्तेश्च ग्रहणमन्तरा च न तस्य ग्रहणं घटते । सर्वार्थेष्वयोग्यानामपि प्रविष्टत्वाच्छक्तेश्चातीन्द्रियत्वात्, ज्ञानस्य बहिरिन्द्रियाग्राह्यत्वाद्बाह्यार्थानां च केवलेन मनसाऽग्रहान्नेन्द्रियेण केनापि सर्वार्थादेर्ग्रहणम् । तद्ग्रहणमन्तरा च न विशिष्टेश्वरग्रहणम् । 'नागृहीतविशेषणे'ति न्यायात् । तदैन्द्रियिकलौकिकप्रत्यक्षं नेश्वरे प्रमाणं भवितुमर्हतीति ॥ २ ॥

'व्यवस्थिते'त्यादिकारिकार्थं स्वयमेव विवृणोति 'सर्वार्थे'ति । अवगमयता—गृह्णता । अवगमयन्त इति पूर्वमुद्रितपाठोऽशुद्धः । देशविप्रकर्षो दूरदेशस्थत्वम् । कालविप्रकर्षोऽतीतत्वमनागतत्वं च । स्वभावविप्रकर्षोऽयोग्यत्वमतीन्द्रियत्वरूपम् । योग्यानामपि कुड्यादिव्यवहितानां चक्षुरादिनाऽग्रहणं दृष्टम् । सर्वार्थेष्वेवम्भूता अपि पदार्थाः प्रविष्टा इति भावः । एवकारोऽप्यर्थे । गोचरयितव्यानि—विषयीकरणीयानि । 'नपुंसकमनपुंसकेने'ति क्लीवैकशेषनिर्देशोऽयम् । 'न चे'ति । विद्यमानेत्यनेन कालविप्रकृष्टस्य व्यवच्छेदः । इन्द्रियसन्निकर्षयोग्येत्यनेन व्यवहितस्य देशविप्रकृष्टस्य च । कतिपयेत्यनेनातीन्द्रियस्य । कतिपयविषयनियतवृत्तेः—निरुक्तविधकतिपयपदार्थमात्रग्रहणानुगुणव्यापारवतः । निरवधिर्महिमा अपकर्षासमानाधिकरणोत्कर्षः । स च ज्ञानस्य सर्वार्थ-

प्रत्यक्षस्य निरवधिरयं महिमा संभावनाभूमिरिति कथमिव तदिह साधनमिति मन्येमहि।

नापि योगिप्रत्यक्षमस्य साधकम्; यतः—

प्रत्यक्षत्वे तदप्येवं विद्यमानैकगोचरम्।
भूतादिगोचरं नैव प्रत्यक्षं प्रतिभादिवत्॥ ३॥

तत् खलु योगिविज्ञानमैन्द्रियिकं न वा? ऐन्द्रियिकमपि बहिरिन्द्रियसम्भवमान्तरकरणजनितं वा? बहिरिन्द्रियाणि तावत्समधिगतनिजविषयसन्निकर्षसहकारीणि तद्गोचरज्ञानजननानीति जगति विदितम्। अतो न रसनादिभिरजातातिवृत्तव्यवहितादि-

---

गोचरत्वरूपः। तत्—लौकिकप्रत्यक्षम्। इह—सर्वदर्शित्वादिविशिष्ट ईश्वरे। साधनं—प्रमाणम्। शिष्टं स्पष्टम्।

योगिप्रत्यक्षस्यापीश्वरासाधकत्वं साधयति 'प्रत्यक्षत्व' इति। प्रत्यक्षत्वव्यापकत्वाद्वर्तमानार्थग्राहकत्वस्य योगिज्ञानमपि प्रत्यक्षं चेद्वर्तमानैकग्राहि भवेदिति न तस्य सर्वार्थग्राहकत्वम्। अतीतादिविषयत्वे वा न तत्प्रत्यक्षं भवेत्। किन्तु प्रतिभादिज्ञानवदुपनीतभानविशेषरूपमेव संशयादिसहमिति न प्रमाणतामनुभवितुमलमीश्वर इत्यर्थः॥ ३॥

श्लोकार्थमेव प्रपञ्चयति 'त'दित्यादिना। 'समधिगते'त्यादि बहुव्रीहिवृत्तम्। यैः स्वयोग्यार्थसन्निकर्षरूपसहकारिकारणमधिगतम्, एवंभूतानि चक्षुरादीनि स्वविषयप्रत्यक्षज्ञानजनकानीति लोके प्रसिद्धमित्यर्थः। 'अत' इति। यतोऽर्थसन्निकर्षस्य सहकारित्वं प्रसिद्धमन्वयव्यतिरेकाभ्याम्, अत इत्यर्थः। 'रसनादिभि'रिति। 'नयनादिभि'रिति पाठः स्याद्वा। अजातातिवृत्तौ—आगाम्यतीतौ। इन्द्रियेणातीता-

सकलविषयवेदनप्रसङ्गः । न चाविद्यमानैरजातादिभिः संभवति सन्निकर्षः; तस्य द्व्याश्रयत्वादाश्रयाभावे तदसम्भवात् । अतोऽपेक्षितोऽर्थसन्निकर्षः । सहकारिविरहे कथमिन्द्रियाण्यतीतादिविषयसाक्षात्काराय कल्पेरन् ? । भवति च—यत् यत्सहकारि यत्कार्यजननम्, तत्तदभावे न तज्जनयति; यथा क्षितिसलिलसहकारि अङ्कुरकार्यजननबीजं क्षित्याद्यभावेऽङ्कुरम् । अर्थसन्निकर्षसहकारीणि वहिरिन्द्रियाणि ज्ञानजननानीति तान्यपि नातीतेऽनागते वाऽर्थे ज्ञानं जनयन्तीति न तदुपजनितं प्रत्यक्षं यथोक्तविषयनियममतिक्रामति ।

---

नागतयोरग्रहणे प्रयोजकं सन्निकर्षाभावमुपपादयति 'न चे'ति । 'रजतादिभि'रिति मुद्रितपाठस्तु न सुसङ्गतः । तस्य—सन्निकर्षस्य संयोगलक्षणस्य, द्व्याश्रयत्वात्—उभयसमवायिकत्वात्, आश्रयाभावे—अन्यतराश्रयविरहे, तदसम्भवात्—सन्निकर्षोत्पत्त्ययोगात् । 'अतः' इति । सहकारित्वादित्यर्थः । इन्द्रियेणातीतादिग्रहणासम्भवमुपपादयति 'सहकारी'ति । कारणाभावात्कार्याभाव इति भावः । अमुमर्थं प्रयोगारूढं प्रपञ्चयति 'भवति चे'ति । यदित्याद्युदाहरणवाक्यम् । यत्सहकारि यस्य तद्यत्सहकारीति वहुव्रीहिवृत्तम् । यादृक्सहकारिविशिष्टमित्यर्थः । एवमग्रेऽपि बोध्यम् । जननम्—जनकम् । 'अर्थसन्निकर्षे'त्याद्युपनयः । 'तान्यपी'ति च निगमनम् । इन्द्रियाणि नातीतादिग्राहीणि, तदसन्निकृष्टत्वादिति प्रतिज्ञाहेतू चानुसन्धेयौ । एवं योगिप्रत्यक्षस्य वहिरिन्द्रियजत्वे न सर्वार्थगोचरत्वमित्युक्तम् । अतश्चेश्वरे तस्य साधनत्वायोगः फलितः ।

नाप्यान्तरकरणसम्भवम्, आन्तरगोचर एव सुखादौ स्वान्तस्वातन्त्र्यात्। बाह्यविषयमितिषु च मनसो निरङ्कुशकरणताङ्गीकारे हि कृतं चक्षुरादिभिः। अतश्च न कश्चिदन्धो बधिरो वा भवेत्। भवति चात्र–विमतिपदं मनो बहिरिन्द्रियनिरपेक्षं न बाह्यप्रत्यक्षगोचरे प्रवर्तते, तत्र तत्तन्त्रवृत्तित्वात्। यद्यत्र यत्तन्त्रवृत्ति न तत्तन्निरपेक्षं तत्र प्रवर्तते, यथाऽऽलोकापेक्षप्रवृत्ति चक्षुः स्वगोचरेऽन्धतमस इति। न च सिद्धौषधमन्त्रतपःसमाधिमहिमसमासादितातिशयानीन्द्रियाणि

---

अथ तस्य मनोमात्रजन्यत्वेऽपि न तत्प्रमाणत्वं सर्वार्थाद्यग्राहकत्वादेवेत्याह 'नाप्यान्तरे'ति। 'आन्तरगोचर' इति। कर्मधारयोऽयम्। अबाह्यविषये सुखादावेव मनसो बहिरिन्द्रियमद्वारीकृत्य प्रत्यक्षजनकत्वादित्यर्थः। मनसः साक्षादेव बाह्यार्थग्राहकत्वे दोषमाह 'निरङ्कुशे'ति। निरङ्कुशत्वमत्र बहिरिन्द्रियनिरपेक्षत्वम्। एवं मनसि हेतुमुपपाद्य साध्यं प्रयोगमुखतः साधयति 'भवती'ति। प्रयोग इति शेषः। न प्रवर्तते–न ग्रहणानुगुणप्रवृत्तिमत्। तत्तन्त्रवृत्तित्वात्–बाह्यार्थेषु बहिरिन्द्रियसहकारद्वारकग्रहणव्यापृतिमत्त्वात्। तन्त्रं–प्रयोजकं, सहकारि वा। तत्तन्त्रं यस्याः, एवम्भूता वृत्तिर्यस्य तत्तत्तन्त्रवृत्ति, तस्य भावस्तत्त्वं तस्मादिति च व्युत्पत्तिः। उदाहरणं 'यद्यत्रे'ति। यद्यत्र कार्ये यत्सहकारिसमवधानाधीनजननव्यापारवत् तत्तदसमवधाने न तत्कार्यजनकतावत्, यथाऽऽलोकसहकारिकं चक्षुर्नालोकाभावे स्वार्थघटादिचाक्षुषजनकमित्यर्थः। शङ्कते 'न चे'ति। आजन्मसिद्धेरपि प्राक्तनतपःफलत्वात्पृथगनुक्तिरत्र। सिद्धौषधादिसाध्यश्चेन्द्रियाणां पाटवातिशयः सूक्ष्मविप्रकृष्टादिग्रहणसामर्थ्यलक्षणः। समधिगतविषयनियमम्–औत्सर्गिकं वर्तमानयोग्यसन्निकृष्टार्थमात्रग्राहकत्वरूपनियमम्। अपजहति-परित्य-

कदाचिदपजहति समाधिगतविषयनियममिति सम्भवति; सांसिद्धिकसामर्थ्याविर्भावैकफलत्वात्तेषाम्, सामर्थ्यस्य च प्रतिनियमात्। न खलु सुप्रयुक्तभेषजशतविहितसंस्कारमपि श्रोत्रं रूपरसविभागावगमाय कल्पते। भवति च—विवादाध्यासितबाह्याभ्यन्तरकरणपाटवातिशयोऽनुल्लङ्घितसीमा, ऐन्द्रियिकप्रकर्षत्वात्, दृश्यमानतत्प्रकर्षवत् इत्यैन्द्रियिकं ज्ञानं नातीतादि गोचरयति।

भावनाप्रकर्षपर्यन्तजन्मनस्तु सत्यपि विशदनिर्भासत्वे प्राच्यानु-

---

जन्ति। परिहरति 'सांसिद्धिके'ति। कर्मप्रतिबद्धसङ्कुचितप्रवृत्तिस्वाभाविककरणशक्तिविकासकत्वमेव सिद्धौषधादीनाम्, नत्वपूर्वशक्त्याधायकत्वमित्यर्थः। नन्वस्त्वेवम्। तावता योगिचक्षुरादिना सर्वार्थाग्रहणस्य किमायातम्? अत्राह 'शक्तेश्चे'ति। चक्षुषो हि स्वाभाविकं सामर्थ्यं रूपरूप्यादिग्रहण एव, न तु योगादिनाऽपि रसादिग्रहणे सामर्थ्यं तस्य संभवतीत्यर्थः। तथाच पाटवातिशयाद्दवीयोऽपि सूक्ष्मतमं रूपं गृह्णातु नाम योगिचक्षुः। नैतावताऽतीतादेः रसादेर्वा तद्ग्राहकं भवेदिति भावः। अत्र च न्यायमाह 'भवती'ति। अनुल्लङ्घितसीमा—अनतिक्रान्तस्वमर्यादः। मर्यादा च चक्षुषो रूपादिषु चतुर्षु रूपस्यैव ग्राहकत्वमिति। एवं रसनादावपि अनुसन्धेयम्। 'दृश्यमाने'ति। अयोगिनामपि चाक्षुषतेजोमान्द्यप्रकर्षाभ्यां रूपादिग्रहणतारतम्यं हि दृष्टम्। एवमेव योगिचक्षुस्तेजःप्रकर्षोऽपि ततोऽप्यधिकगोचरोऽनतिक्रान्तमर्याद एव सिध्येदित्याशयः।

एवमैन्द्रियिकत्वे योगिज्ञानस्य सर्वार्थाद्यग्राहकत्वमुपपाद्यानैन्द्रियिकत्वेऽपि तस्य तथात्वमत एवेश्वरे प्रमाणत्वासंभवं चोपपादयति 'भावने'ति। भावनाप्रकर्षपर्यन्ते जन्म यस्येति बहुव्रीहिः। विशद-

भवगोचरादनधिकमधिकं वाऽध्यवस्यतः स्मृतिविभ्रमस्रोतसोरन्यतरावर्तपरिवर्तिनः कुतः प्रामाण्यकूलप्रतिलम्भः ? कुतस्तरां च प्रत्यक्षतयोत्तम्भनम् ?। प्रत्यक्षस्य वा सतः कथमिव विदितविषयनियमव्यतिक्रमः ? . अतिक्रामतो वा कुतः प्रत्यक्षत्वमिति न विश्वानुभवैश्वर्यशालिनि प्रत्यक्षं प्रमाणम् ।

( इतीश्वरे प्रत्यक्षप्रमाणनिरसनम् )

---

निर्भासत्वे—विशदप्रकाशकत्वे—लौकिकविषयतानिरूपकत्वे । प्राच्यानुभवगोचरात्—पूर्वानुभवविषयात् । अध्यवस्यतः—प्रकाशयतः । पूर्वानुभूतादनधिकविषयत्वे स्मृतित्वम् । अधिकविषयत्वे तु भ्रमत्वम्, कामिनीभावयितुः कामिनः पुरोवर्तित्वेनासत्याः कामिन्याः प्रतिभानस्येवेत्यर्थः । समुदिताशयस्त्वयम्—अनुभूतस्य पौनःपुन्येन स्मृत्यभ्यासेन संस्कारप्रचयः संपद्यते । तत्पर्यन्ते स्मृत्यभ्यासे सति जायमाना स्मृतिरेव प्रत्यक्षवद्विशदविषयावभासा भवतीति प्रत्यक्षसमानाकारं स्मरणमेव चेद्योगिप्रत्यक्षं विवक्षितम्, तर्हि तस्य पूर्वानुभूतार्थमात्रगोचरत्वान्नेश्वरगोचरत्वम् । सर्वार्थग्रहणादिसमर्थस्येश्वरस्य प्रमाणाभावेन प्रागननुभूतत्वात् । स्मृतित्वे च यथार्थानुभवत्वलक्षणमज्ञातार्थज्ञापकत्वलक्षणं वा प्रामाण्यं तन्नार्हत्येव । अत एव प्रमाणविशेषप्रत्यक्षरूपत्वं तस्य न तरां घटत इति । 'प्रत्यक्षत्वे' इति श्लोकार्थोपसंहारः 'प्रत्यक्षस्य वे'ति । विदितत्वं—प्रसिद्धत्वम् । 'न विश्वे'ति । सर्वसाक्षात्कर्तरि सर्वकर्तरि सर्वनियन्तरि चेश्वरेऽस्मदादीनां योगिनां वेन्द्रियरूपं प्रत्यक्षं न प्रमाणं न प्रमितिजनकमित्यर्थः । ननु केवलस्य स्वान्तस्य बहिरस्वातन्त्र्येऽपि योगजप्रकृष्टादृष्टसहकृतस्य तस्य बाह्येष्वतीन्द्रियेषु त्रैकालिकेषु चार्थेषु प्रवृत्तिः संभवेन्नाम । तत् प्रकृष्टादृष्टसहकृतमनोजन्यमेव प्रत्यक्षं

नापि प्रमाणान्तरम् । तत्खल्वनुमानमागमो वा ? अनुमानमपि विशेषतोदृष्टं सामान्यतोदृष्टं वा ? तत्र सकलपदवीदवीयसि भगवति

---

योगिनां स्यादीश्वरे प्रमाणम् । प्रत्यक्षस्य वर्तमानमात्रग्राहित्वमिति व्यवस्था चायोगिप्रत्यक्षैकगोचरेति चेत् ; अत्र ब्रूमः—प्रकृष्टादृष्टविशेष-सहकारादपि प्रामाणिकसर्वार्थग्रहणमेव भवेन्नाम । सर्वेश्वरे चैकस्मिन् न प्रमाणं किञ्चित् । अतो न तत्सिद्धिर्योगजप्रत्यक्षेणापीति हार्दमाक्षेप्तुः । एतेन परमात्मध्यानजनितमेव परमात्मविषयमानसप्रत्यक्षं प्रमाणं तस्मिन्नित्यपि निरस्तम् । परमात्मनो ध्यानं हि तज्ज्ञानमन्तरा न संभवति । तच्चान्ततो गत्वा शास्त्रजनितमेवेति वक्तव्यम् । शास्त्रस्य च कार्यपरस्य न तत्र तात्पर्यम् । श्रुतिपौरुषेयत्वनये पुनरन्योन्यसंश्रयः स्पष्ट एव—ईश्वरसिद्धौ तदुक्तत्वाच्छास्त्रप्रामाण्यसिद्धिः, तत्सिद्धौ चेश्वरसिद्धिरिति । अनुमानं च न प्रमाणं तत्रेत्यनन्तरमेव वक्ष्यते । तथा चेश्वरप्रमितेरेवा-भावात्तन्मूलतद्ध्यानाद्यसिद्धिरेवेति । एवं लौकिकयौगिकभेदेन द्विविधस्य प्रत्यक्षस्येश्वरे न प्रमाणत्वमित्युक्तम् ।

अथ प्रमाणान्तरस्यापि न तत्र प्रमाणत्वमिति वदन् द्विविधेऽनुमाने विशेषतोदृष्टस्य तावत् न तत्र प्रमाणत्वमित्याह 'तत्रे'ति । तत्र—द्विविधा-नुमाने । सकलपदवीदवीयसि-सकलकरणविदूरगे । इदं—विशेषतोदृष्टम् । तत्त्वं च सिषाधयिषिताकारविशिष्टसाध्यनिरूपितव्याप्तिग्रहविषयत्वं हेतोः । तत्रास्यासंभवे हेतुकथनं 'स्वलक्षणे'त्यादि । तदसाधारणाकार-ग्रहणपूर्वकविशिष्टतत्सहचारदर्शनाधीनतद्व्याप्तिग्रहविषयलिङ्गरूपस्य वि-शेषतोदृष्टानुमानस्यासाधारणाकारेण सार्वज्ञ्यादिनाऽप्रत्यक्षत्वादीश्वरस्य तत्सहचारदर्शनमूलव्याप्तिग्रहस्य हेतुविशेषेऽसम्भवादसम्भवस्तस्मि-न्निति यावत् । विशेषतोदृष्टस्य विशिष्य साध्यग्रहमन्तराऽसम्भवं

न तावत् स्वलक्षणसाक्षात्कारपूर्वकाविनाभावावधारणाधीनोदयत्वादिदमनुमानमुदेतुमलम्। न ह्यनवगतचरहुतभुजस्तदविनाभावितया धूममनुसन्धातुमीशते। नच सर्वार्थनिर्माणसाक्षात्कारपटीयसि लिङ्गं सामान्यतोदृष्टमपि किञ्चन लभ्यते।

( इतीश्वरेऽनुमानस्य प्रामाण्यासम्भवोपक्षेपः )

नन्वेकचेतनाधीनं विवादाध्यासितं जगत्।
अचेतनेनारब्धत्वादरोगस्वशरीरवत् ॥ ४ ॥

---

प्रपञ्चयति निदर्शनतः 'नही'ति। भूतपूर्वे चरट्। असाक्षात्कृतपूर्ववह्नयः पुरुषा न वह्नित्वावच्छिन्नवह्निव्याप्तिं धूमे ग्रहीतुं समर्था इत्यर्थः। सिषाधयिषितवह्निसामान्यस्य पूर्वं महानसादौ गृहीतत्वाद्धूमानुमानस्य विशेषतोदृष्टत्वमिति भावः। वह्नित्वावच्छिन्नेन व्याप्तिग्रहादेव यत्र वह्नित्वातिरिक्ताकारविशेषस्यापि पक्षधर्मतादिबलात्सिद्धिरिष्यते तत्र पुनर्धूमानुमानं भवति सामान्यतोदृष्टमिति बोध्यम्। केचित्तु यद्व्यक्तेः पूर्वं ग्रहः, तद्व्यक्तेरेवानुमापकं विशेषतोदृष्टम्। यथा एतद्रूपवानेतद्रसादिति। धूमाद्दहन्यनुमानं तु सामान्यतोदृष्टमेवेति वदन्ति। सर्वथाऽपि न विशेषतोदृष्टस्येश्वरे सम्भव इति स्थितम्। सामान्यतोदृष्टमपि तत्र निषेधति 'न चे'ति। 'सर्वार्थे'ति। सर्वार्थानां करणसाक्षात्करणसमर्थतरे ईश्वर इत्यर्थः। साधकमिति शेषः। सिषाधयिषितविशेषाकारातिरिक्तसामान्यधर्मावच्छिन्नेन गृहीतव्याप्तिकत्वं लिङ्गस्य सामान्यतोदृष्टत्वम्। विशेषसिद्धिस्तु पक्षधर्मताबलात्परिशेषाद्वेति दिक्।

अत्र नैयायिकः प्रत्यवतिष्ठते सामान्यतोदृष्टमीश्वरेऽस्तीति 'नन्वेके'ति। जगत्—कार्यद्रव्यजातम्। तच्चैकविधातृकं न वेति विप्रतिपत्तेः सन्दिह्यमानसाध्यं पक्षीभूतम्। तत्रैकचेतनाधीनत्वं साध्यते, अचेतनेनारब्धत्व-

तथा सर्वार्थनिर्माणसाक्षात्करणकौशलम् ।
कार्यत्वादेव जगतस्तत्कर्तुरनुमीयताम् ॥ ५ ॥

सर्वं हि कार्यमुपादानोपकरणसम्प्रदानप्रयोजनसंवेदिचेतनर-

---

रूपहेतुना। रुग्णशरीरस्य स्थित्यादौ नानाचेतनाधीनत्वदर्शनान्न दृष्टान्ततेति नीरोगस्वशरीरं स्वात्मैकाधीनत्वेन सम्प्रतिपन्नं दृष्टान्तीकृतम्। अचेतनारब्धत्वं—अचेतनसमवायिकारणकद्रव्यत्वरूपं समवेतद्रव्यत्वपर्यवसितं हेतुत्वेन विवक्षितम्। तेनारब्धत्वस्यैव हेतुत्वसंभवेऽचेतनारब्धत्वस्य व्यर्थविशेषणत्वमिति शङ्काया नावकाशः। अनुमानस्यानुमानान्तरादूषकत्वादारब्धत्वादिहेतुकमपि निरुक्तसाध्यकमनुमानं भवतु नाम। न ततः काचन क्षतिः। एवं विश्वस्मिन् धातुरेकस्य साधकमनुमानमुक्तम्। तस्य सार्वज्ञ्यादिविशेषव्यवस्थापकमनुमानान्तरमाह 'तथे'ति। जगद्रूपपक्षनिष्ठेन कार्यत्वहेतुना तत्र कश्चित्कर्ताऽनुमीयताम्। तस्य च जगद्रूपपक्षसम्बन्धविशेषबलात्सार्वज्ञ्याद्यप्यनुमित्या प्रसिध्यतुतरामित्यर्थः। कार्यं सकर्तृकं कार्यत्वाद्घटवदिति चानुमानमत्र विवक्षितम्। नच पक्षतावच्छेदकहेत्वोरैक्यं दोषाय, पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वात्, तत्र च पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धिगर्भस्य व्यापकसामानाधिकरण्यरूपव्याप्तिनिश्चयस्याविरोधित्वात्। अस्तु वा स्वरूपसंबन्धविशेषरूपमुत्पत्तिमत्त्वरूपं च भिन्नभिन्नमेव कार्यत्वं पक्षतावच्छेदकं लिङ्गं चेति दिक् ॥ ४ ॥ ५ ॥

अनेनानुमानेनाभिमतेश्वराकारविशेषसिद्धिप्रकारं विशदयति 'सर्व'मिति। उपादानं—समवायिकारणम्। उपकरणं—सहकारिकारणम्। संप्रदानं—कार्यं यद्भोगार्थं सृष्टं, स उपभोक्ता। प्रयोजनं—क्रियमाणवस्तुसाध्यं फलम्। उपादानादीनां संवेदी—साक्षात्कर्ता यश्चेतनः तेन

चितमवगतं घटमणिकगृहादि। कार्यं च विमतिपदमवनिगिरिमहार्णवादीति तदपि तथाविधबुद्धिमद्धेतुकमध्यवसीयते। न च कार्यत्वमसिद्धमिति वाच्यम्, अवयवसन्निवेशादिभिर्हेतुभिस्तत्सिद्धेः। इह चान्त्यावयविभ्यः प्रभृति आद्व्यणुकमखिलमवयविक्रमनिहीयमाननानावयवव्यतिषङ्गविशेषजनितमवगतमित्यन्तत उपादानं चतुर्विधाः परमाणवः प्रपञ्चस्य। तेषामादिपरिस्पन्दश्च

---

निमित्तहेतुना क्रियमाणं दृष्टं घटादिकार्यमित्यर्थः। मणिको-महाघटः। एतद्वाक्येन कार्यत्वस्य सकर्तृकत्वव्याप्यत्वं प्रतिपादितं भवति। उपादानादिगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वं कर्तृत्वमत्र विवक्षितम्। उपनयनिगमने 'कार्यं चे'ति। विमतिपदं सकर्तृकत्वाकर्तृकत्वविप्रतिपत्तिविषयीभूतम्। अनेन सन्दिग्धसाध्यकत्वलक्षणं पक्षत्वमवन्यादेरुपपन्नमिति सूचितम्। स्वरूपासिद्धिमाशङ्क्य परिहरति 'न चे'ति। पक्षे मह्यादाविति शेषः। आकृतिमत्त्वादिभिः क्षित्यादेः कार्यत्वसिद्धिरिति भावः। पक्षधर्मताबलात्कर्तृविशेषसिद्धिरिति प्रतिपादनार्थं कार्यसामान्योपादानादि निर्धारयति 'इहे'ति। अवयवत्वासमानाधिकरणावयवित्वमन्त्यावयवित्वम्। अन्त्यावयवित आरभ्याद्यावयविद्व्यणुकमभिव्याप्य सर्वमवयवि—कार्यद्रव्यजातमवयवसंयोगविशेषजनितं प्रसिद्धमित्यर्थः। उत्तरोत्तरापेक्षया पूर्वपूर्वकार्येऽवयवाल्पत्वं 'क्रमनिहीयमाने'त्युच्यते। अवयवसंश्लेषविशेषजनितत्वं च क्वचित्प्रत्यक्षादनुमानाच्च क्वचित् सिद्धमिति भावः। अन्त्योपादानत्वम्-अवयवित्वासमानाधिकरणावयवत्वम्। चतुर्विधाः परमाणवः—पृथिवीजलज्वलनपवनपरमाणवः। प्रपञ्चस्य—कार्यद्रव्यप्रपञ्चस्य। 'तेषा'मिति। परमाणूनामादिपरिस्पन्दः—सर्गाद्यकालीनारम्भकसंयोगजनकक्रियालक्षणः अदृष्टवदा-

तदनुगुणादृष्टविशिष्टतत्तत्क्षेत्रज्ञसंयोगासमवायिकारणक इति उपकरणमपि समस्तक्षेत्रज्ञवर्तीनि धर्माधर्मलक्षणान्यदृष्टानि । प्रयोजनं पुनस्तदभिनिर्वर्तितविचित्रार्थक्रियाकारश्चेतनोपकारप्रकारभेदोऽपर्यन्तः । तदुपभुजस्त एव क्षेत्रज्ञाः सम्प्रदानम् । न चामी स्वसमवायिनावपि धर्माधर्मावलमवलोकयितुमिति तदतिरेकी निखिलभुवननिर्माणनिपुणोऽधिकरणसिद्धान्तसमधिगतनिरतिशयसहजसकलविषयसंविदैश्वर्यशक्त्यतिशयः पुरुषधौरेयकः किमिति न सामान्यतोदृष्टलिङ्गादनुमीयते ?

( इतीश्वरे सामान्यतोदृष्टानुमानस्य प्रमाणताप्रतिपादनम् )

---

त्मसंयोगरूपासमवायिहेतुज इत्यदृष्टानामुपकरणत्वमित्यर्थः । आद्यपरिस्पन्दस्यादृष्टहेतुकत्वं च कणादमुनिना सूत्रितम् 'अग्नेरूर्ध्वज्वलनं वायोस्तिर्यक्पवनमणूनां मनसश्चाद्यं कर्मादृष्टकारित'मिति । 'प्रयोजन'मिति । सृष्टिप्रयोजनमनवधिर्जीवोपकारप्रकारभेदः सृज्यपदार्थनिर्वाह्यनानाविधार्थक्रियारूपः नानाविधभोगनिष्पादनलक्षणोऽसङ्ख्यात इत्यर्थः । सम्प्रदानं च साक्षात्परम्परया वा कार्यपदार्थनिष्पादितं भोगमनुभवन्तो जीवराशय इत्याह 'तदुपभुज' इति । एवं सर्वविधपरमाणुसर्वजीवादृष्टसर्वजीवोपकारप्रकाररूपनिखिलजगदुपादानोपकरणप्रयोजनसाक्षात्कर्तृत्वादि जीवेषु न संभवतीति कैमुतिकन्यायेन साधयितुं स्वीयादृष्टसाक्षात्कर्तृत्वमपि न तेष्वित्याह 'न चामी' इति । तदतिरेकी—जीवविलक्षणः । 'यत्सिद्धावन्यप्रकरणसिद्धिः सोऽधिकरणसिद्धान्तः' इति न्यायसूत्रम् । यत्सिद्धिमन्तरा प्रकृतोऽर्थो न सिध्यति, तथाभूतः प्रकृतार्थसिद्धेर्नान्तरीयकतया सिध्यन्नर्थोऽधिकरणसिद्धान्तसिद्ध इत्यर्थः । तथाच निखिलार्थसाक्षात्कारित्वाद्यन्तरा कर्तुः क्षित्यादेः सकर्तृकत्वरूपः प्रकृतार्थो न सिध्यतीति विशिष्टकर्तृलाभोऽधिकरणसिद्धान्तनयेनेति फलितम् ।

तदिदमविदितानुमानवृत्तस्य स्वमतिरचिततरलतर्कोल्लसितमिति परिहसन्ति मीमांसकाः। तथाहि—किमिदमेकचेतनाधीनत्वं नामाभिप्रेतं तनुभुवनादेः ?। तदायत्तत्वमिति चेत्;

किमस्य तस्मिन्नायत्तं किं नु जन्माथवा स्थितिः।
प्रवृत्तिर्वाऽऽद्ययोस्तावत् साध्यहीनं निदर्शनम् ॥ ६ ॥

न खलु शरीरमेकचेतनाधीनोत्पत्तिस्थिति। ये हि यद्देहाधीनसुखदुःखोपभोगभागिनः, भवति हि तद्दुचितादृष्टशालिनां सर्वेषा-

---

तार्किकाभिमतमीश्वरानुमानप्रकारमिमं निरस्यन्ति मीमांसकाः 'तदिद'मित्यादिना। दृष्टजातीयस्यैव साधकमनुमानं, न त्वतीन्द्रियार्थस्येत्यनुमानवृत्तमजानतः स्वबुद्ध्युत्प्रेक्षिताव्यवस्थिततर्काभासमूलमिदं विलक्षणपुरुषसाधनमित्यर्थः। तर्कस्वभावानभिज्ञस्य तार्किकत्वव्यपदेशः सुशोभन इति चोपहासो गर्भितः। परोक्तस्य तर्कस्याभासत्वमुपपादयितुमुपक्रमते 'तथाही'ति। 'किमिद'मिति। तनुभुवनादेः—पिण्डब्रह्माण्डादेः। पिण्डो देहः। तथाच पुराणरत्ने 'पिण्डः पृथग्यतः पुंसः शिरःपाण्यादिलक्षणः' इति। पक्षसपक्षयोरिति वाऽर्थः।

एकचेतनायत्तत्वं जगतो विकल्प्य दूषयति 'किमस्ये'ति कारिकया। आयत्तं—कार्यत्वेन संबद्धम्। एकचेतनहेतुकत्वं किं भुवनजन्मनः साध्यते, उत भुवनस्थितेः, आहोस्विद्भुवनप्रवृत्तेः ? आद्ययोः कल्पयोरन्वयदृष्टान्तो नीरोगदेहः साध्यविकल इत्यर्थः। तथाच व्याप्त्यसिद्धिर्व्यभिचारश्चेति भावः ॥ ६ ॥

दृष्टान्ते साध्यशून्यत्वमुपपादयति 'न खल्वि'त्यादिना। स्वशरीरोत्पत्तिस्थित्योः स्वस्याप्यदृष्टद्वारा हेतुत्वं वाच्यम्। तच्छरीराधीनोपभोगोपकारभाजामन्येषां च तत्रादृष्टद्वारा हेतुत्वं तद्देहिन इवास्तीति

मेव तेषां तद्देहिन इव तदुत्पत्तिस्थितिनिमित्तत्वम् । अपि च शरीरावयविनः स्वावयवसमवायलक्षणा स्थितिरवयवव्यतिषङ्ग-विशेषादृते न चेतयितारं परमपेक्षते । या पुनस्तदपेक्षिणी प्राणन-लक्षणा स्थितिः, न सा पक्षीकृते क्षित्यादौ सम्भवतीति स्थितिमपि नैकरूपां पक्षसपक्षानुयायिनीमुदीक्षामहे । एकचेतनाधीनप्रवृत्तित्वे तु प्रबलबहुजनसरभसप्रयत्नप्रचाल्यैरुपलतरुरथादिभिर्व्यभिचारः । आरब्धत्वादेव चैतत्साध्यसिद्धावधिकमिदमुपादानविशेषवचनम् ।

( इत्येकचेतनाधीनत्वानुमानदूषणम् )

---

एकचेतनायत्तोत्पत्तिस्थितिकत्वं दृष्टान्ते नास्तीत्यर्थः । द्वितीये कल्पे स्थितिशब्दार्थविकल्पनमुखेन दूषणान्तरमप्याह 'अपि चे'ति । शरीरा-वयविन इति कर्मधारयवृत्तम् । आरम्भकसंयोगेऽवयवसमवेते दृढे सति स्वावयवसमवेतत्वलक्षणाऽवयविनः स्थितिः शरीरस्य निराबाधा घटादे-रिव प्रसिध्यत्येवेति नैवंविधस्थितेश्चेतनापेक्षता । प्राणवृत्त्यधीनाशैथिल्या-वस्थानलक्षणा शरीरधृतिः परं जीवनयोनियत्नहेतुकत्वाद्भवेन्नाम चेत-नापेक्षा । दृष्टान्ते व्यापकत्वेन साधनस्य गृहीतैवंविधा स्थितिस्तु न पक्षे मह्यादौ । तथाच कार्यत्वावच्छेदेन एवंविधैकचेतनाधीनस्थितिकत्व-साधनेंऽशतो बाध इति भावः । तृतीये कल्पे एकचेतनायत्तप्रवृत्तिक-त्वेऽनैकान्त्यमाह 'एके'ति । सरभसप्रयत्नः—तीव्रप्रयत्नः । बहुजनैक-साध्यचलनप्रवृत्तिमति महोपलादौ साध्यशून्ये सत्त्वादनेकान्तता हेतो-रित्यर्थः । हेतोर्व्यर्थविशेषणत्वं चाह 'आरब्धत्वादेवे'ति । जन्यत्वस्यैव हेतुत्वे व्यभिचाराप्रसक्तेरचेतनोपादाननिरूपितत्वस्य तद्विशेषणस्य वैय-र्थ्यम् । तथा च व्याप्यत्वासिद्धिः । अधिकं नाम निग्रहस्थानं च प्रयुञ्जत इति भावः । यद्यपि समवेतद्रव्यत्वरूपे फलिते हेतौ न वैयर्थ्य-

चेतनाधीनतामात्रसाधने सिद्धसाध्यता ।
चेतनैर्भोक्तृभिर्भोग्यः कर्मभिर्जन्यते हि नः ॥ ७ ॥

युक्तं चैतत्—यदुभयवादिसिद्धानामेव चेतनानां कर्तृत्वाभ्युपगमः; लाघवात् । न चोपादानाद्यनभिज्ञतया तत्प्रतिक्षेपः ।

उपादानं पृथिव्यादि यागदानादि साधनम् ।
साक्षात्कर्तुं क्षमन्ते यत्सर्व एव च चेतनाः ॥ ८ ॥

---

प्रसक्तिः । अथापि यथाश्रुतहेत्वभिप्रायेण व्यर्थविशेषणत्वाभिधानम् । फलितेऽपि हेतावनैकान्त्यं तु दुर्वारमेवेति दिक् ।

नन्वनैकान्त्यप्रसङ्गादेकत्रविशेषणं त्यज्यते । चेतनाधीनत्वमेव तु साध्यत इति चेत्तत्राह 'चेतने'ति । यद्यप्युक्तहान्याद्येवं वदतः प्रसज्यत एव । अथापि तस्योक्तिदोषत्वात्तदुपेक्ष्यार्थदूषणमेवात्रोच्यते । 'ही'ति प्रसिद्धौ । अस्माकमपि कार्यसामान्यस्य जीवादृष्टहेतुकत्वेन चेतनाधीनत्वस्य सम्प्रतिपत्तेः चेतनाधीनत्वमात्रसाधने जीवैः सिद्धसाधनम् । भवतश्चार्थान्तरमिति भावः ॥ ७ ॥

नन्वदृष्टद्वारा चेतनप्रयोज्यत्वमात्रं न साध्यते । किं तु चेतनकर्तृकत्वम् । कर्तृत्वं च क्षित्यादौ जीवानां न संभवतीति चेत्; एवं सति द्वितीयानुमान एव विश्रान्तिः । तत्रापि सिद्धसाधनमेवेत्याह 'युक्त'मिति । लाघवपक्षपातित्वादनुमानस्य सकर्तृकत्वानुमानस्यापि संप्रतिपन्नजीवमात्रविश्रान्तिरिति भावः । ननु जीवस्य जगत्कर्तृत्वमनुपपन्नम् । अनुपपन्ने चार्थे लाघवमकिञ्चित्करम् । तदीश्वरसिद्धिरप्रत्यूहेति शङ्कां प्रतिक्षिपति 'न चोपादाने'ति ।

जीवस्याप्युपादानादिसाक्षात्कार उपपन्न एवेत्याह 'उपादान'मिति । अयमाशयः—तत्तद्वैदिककर्मणोऽतिशयिततत्तत्फलसाधनत्वमवगत्य वेदा-

अद्यवदेव विश्वम्भरादयः क्रमप्राप्तागन्तुकोपचयापचयैकदेश-शालिनो न युगपदेव निरवशेषविलयजननभागिन इत्यन्तिमपर-माणुसाक्षात्कारो न कर्तृभावोपयोगी ।

कर्मणः शक्तिरूपं यदपूर्वादिपदास्पदम् ।
मा भूत्प्रत्यक्षता तस्य शक्तिमद्ध्यक्षगोचरः ॥ ९ ॥

---

द्वैदिकानां वचनाच्च तदनुग्रहत एवानुष्ठाय तत्तत्कर्म यथाविधि समधि-गतसामर्थ्यविशेषा जीवविशेषा एव पृथिव्यादिभूतचतुष्टयं भौतिक-कार्यवर्गोपादानभूतं सहकारिवर्गं च साक्षात्कृत्योपादाय च जगत्सृजे-युरिति न कर्त्रन्तरकल्पनावकाश इति । यत्-यस्मात्, क्षमन्ते, अतो न तत्प्रतिक्षेप इत्यन्वयः पूर्वेण ॥ ८ ॥

ननु प्रलये पृथ्व्यादेराद्यद्व्यणुकं विनाशाज्जीवानां च तदा करणकले-वरविधुरत्वेन ज्ञानोपादानसामर्थ्यविरहान्न तेषां सर्गाद्यजगत्सृष्टिकर्तृत्वं संभवतीत्यत्राह 'अद्यव'दिति । न पृथिव्यादीनां सर्वांशेन प्रलयोत्पादौ । किंतु वर्तमान इव काले भागभेदेनैव तौ क्रमशः आगन्तुकैकदेशवृद्धि-ह्रासलक्षणौ । तथाच जीवेष्वेव केषाञ्चित्साधनविशेषसमासादितज्ञान-शक्त्यतिशयानां हीनांशप्रपूरणात्मकं सर्जनं पृथिव्याद्युपादानसाक्षा-त्कारादितः संभवेदेव विश्वामित्रादीनामिवेत्यर्थः । निरवशेषप्रलये न पुनः सर्गः । सावशेषलये तु जीवविशेषाणां तत्तद्भागभेदकर्तृत्वं संभविष्य-तीति नेश्वरकल्पनावसर इति भावः ।

नन्वदृष्टमप्यस्ति सहकारि पुण्यपापरूपम् । तत्साक्षात्कारमन्तरा च न तदनुगुणकार्यसर्जनं संभवेत् । तत्साक्षात्कारो न च जीवानां घटत इत्यत्राह 'कर्मणः' इति । अन्यकर्तृकयागादिधर्माणां चौर्याद्यधर्माणां च साक्षात्कारे क्षमा एव साक्षिभूता जीवविशेषाः । शाश्वतश्च

न खलु कुलालादयः कुम्भादिकार्यमारभमाणास्तदुपादानोपकरणभूतमृद्दण्डचक्रादिकार्योत्पादनशक्तिं साक्षात्कृत्य तत्तदारभन्ते। यदि परं शक्तिमविदुषामभिलषितसाधने तदुपादानादिव्यवहारोऽनुपपन्नः, इह तु—

आगमादवगम्यन्ते विचित्राः कर्मशक्तयः।
तेन कर्मभिरात्मानः सर्वं निर्मिमतां पृथक्॥ १०॥

( इति मह्यादिसकर्तृकत्वानुमानस्य सिद्धसाधनत्वापादनम् )

अपि च तदेव चेतनकर्तृकं जगति परिदृश्यते, यदेव शक्यक्रियं

---

तत्तत्कर्मणः फलविशेषजननसामर्थ्यमधिगतवन्तस्ते। तथाच तत्तदनुगुणं सृजेयुर्नाम। शक्तिमतः साक्षात्कारः शक्तेर्ज्ञानमात्रं च कर्तृत्वोपयोगि, नतु शक्तेरपि साक्षात्करणम्। स्वस्य पुनः करणसामर्थ्यं चापेक्षितम्। तथाच पुण्यपापशब्दितकर्मशक्त्यसाक्षात्कारेऽपि नोपरोधः कर्तृभावस्येति भावः॥ ९॥

उपपादयत्येतदेव निदर्शनतः 'ने'ति। 'यदी'ति। तुशब्दार्थेऽयं प्रयुक्तोऽत्र। यद्वा इहेत्यतः पूर्वं इति, सत्यम्, इति योज्यम्। 'आगमा'दिति। तेन—कर्मनिष्ठशक्तीनां शास्त्रतोऽवगमेन, कर्मभिः—नानाजीवीयकर्महेतुतः, कर्मानुगुणमिति यावत्, आत्मानः—शक्तिमन्तो जीवाः, पृथक्—विभागेन, तत्तदेकदेशभेदेनेति यावत्, सर्वं जगत्—कार्यद्रव्यजातम्, निर्मिमताम्—सृजन्तु इत्यर्थः॥ १०॥

अथ कार्यत्वहेतौ दोषानाह 'अपिचे'त्यादिना। तत्रादौ स्वरूपासिद्धिरुपाधिमुखेन व्याप्यत्वासिद्धिश्च कीर्त्येते। शक्या क्रिया-करणं यस्य तच्छक्यक्रियम्। कर्तुं शक्यमिति यावत्। शक्यं ज्ञानं यस्य तच्छक्यज्ञानम्, शक्यज्ञानमुपादानादि यस्य कार्यस्य तच्छक्यज्ञानोपादानादि।

शक्यज्ञानोपादानादि च । न च तथा महीमहीधरमहार्णवादीति कथमिव तत्तत्कार्यत्वम् ? कथन्तरां च तदुपादानोपकरणादेः साक्षात्कारगोचरता ? यादृशं हि कार्यमुपादानाद्यभिज्ञपूर्वकमवगतं घटमणिकादि, तादृशमेव हि तथाविधबुद्धिमद्धेतुकत्वानुमानाय प्रभवति ।

(इति कार्यत्वहेतोः स्वरूपासिद्धिसाधनम्)

अपि चानीश्वरेण परिमितशक्तिज्ञानेन विग्रहवताऽनवाप्तकामेन

---

एवंभूतमेव कार्यं सकर्तृकं भवितुमर्हतीत्यर्थः । चेतनकर्तृकत्वरहितं कार्यं नास्तीति चानुसन्धेयम् । 'नचे'ति । तत्तत्कार्यत्वम्—तस्य तस्य कार्यत्वं क्षित्यादेरशक्यक्रियस्येत्यर्थः । अनेन स्वरूपासिद्धिर्भागासिद्धिर्वोक्ता । 'कथन्तरा'मिति । उपादानोपकरणपरमाण्वदृष्टादेः साक्षात्कर्तुमशक्यतयोपादानादिसाक्षात्कारचिकीर्षाकृतिमत्पुरुषपूर्वकत्वं कथन्तरां घटते क्षितिद्व्यणुकादेरित्यर्थः । क्षित्यादेः कार्यत्वे चेदाग्रहः, इष्यताम् । सकर्तृकत्वं तु अनुपपन्नमेवेति भावः । सोपाधिकत्वमाह 'यादृश'मिति । यादृशं-कृतिसाध्यत्वार्हं ज्ञेयत्वार्होपादानादिकं च । अनेन शक्यक्रियत्वं शक्यज्ञानोपादानादिकत्वं चोपाधिरित्युक्तं भवति । अस्य व्यभिचारोन्नायकत्वं सत्प्रतिपक्षोन्नायकत्वं वा बोध्यम् ।

एवं कार्यत्वहेतोरभिमतकर्तृपूर्वकत्वासाधकत्वमुक्त्वाऽनभिमतापादकत्वं चाह 'अपि चे'ति । सपक्षे हि घटादौ विग्रहवत्त्वस्वार्थापेक्षत्वानीश्वरत्वादिविशिष्टकर्तृपूर्वकत्वेन कार्यत्वस्य व्याप्तिर्गृहीता । विशिष्टसाध्येन गृहीतव्याप्तिकं च शरीरादि विशिष्टमेव कर्तारं साधयेत् पक्षे । ते चाकारा अभिमतविपरीता इति विरुद्धव्याप्यत्वाद्धेतोर्विरुद्धत्वमिति भावः । नन्वेवं सपक्षे महानसादौ कारीषत्वादिमता वह्निना गृहीत-

कृतमवगतं घटादिकार्यमिति तथाविधं बोद्धारमुपस्थापयन् हेतुरभिमतपुरुषसार्वज्ञ्यसवैश्वर्यादिविपर्ययसाधनाद्विरुद्धः स्यात्। न चैवं सति सर्वानुमानव्यवहारोच्छेदप्रसङ्गः शङ्कितव्यः। प्रमाणान्तरगोचरे हि लिङ्गिनि लिङ्गबलादापततो विपरीतविशेषांस्तत्प्रमाणमेव प्रतिरुणद्धि। इह पुनरतिपतितसकलमानान्तरकर्मभावे सर्वनिर्माणनिपुणे सिषाधयिषिते यावन्तोऽन्वयव्यतिरेकावधारिताविनाभावभाजो धर्मास्तानप्यविशेषेणोपस्थापयति।

(इति कार्यत्वहेतोर्विरुद्धताप्रतिपादनम्)

अपि च—स्वार्थकारुण्यभावेन व्याप्ताः प्रेक्षावतः क्रियाः।
ईश्वरस्योभयाभावाज्जगत्सर्गो न युज्यते ॥ ११ ॥

---

व्याप्तिना धूमेन पक्षे पर्वते कारीषादिवह्नेरेव साधनं स्यात्। स च तत्र नास्तीति अप्रामाण्यप्रसङ्गोऽनुमानमात्रस्येत्यत्राह 'नचैव'मिति 'प्रमाणान्तरे'ति। साध्यस्य प्रमाणान्तरग्राह्यत्वे लिङ्गबलात्प्रसक्तानां विरुद्धविशेषाणां प्रत्यक्षादिनाऽपवदनात् वह्निमात्रे प्रामाण्यमनुमानस्य व्यवस्थाप्यं भवेन्नाम। प्रमाणान्तरागोचरे तु साध्ये लिङ्गबलप्रसक्तानां विपरीतविशेषाणामपवादकाभावात्तथैवावस्थानं स्यादित्याशयः। अन्वयव्यतिरेकसहचारग्रहाद्यद्धर्मावच्छिन्नकर्तृपूर्वत्वेन कार्यत्वस्य व्याप्तिर्गृहीता, ते कुलालाद्यनुगता अनीश्वरत्वसंसारित्वादयो भवन्ति व्यापकतावच्छेदकत्वेन गृहीताः। व्यापकतावच्छेदकधर्मप्रकारेण साध्यानुमापकत्वस्वाभाव्याच्च लिङ्गस्यानीश्वरसंसारिकर्तृमात्रपर्यवसायित्वं कार्यत्वहेतुकसकर्तृकत्वानुमानस्येति 'यावन्त' इत्यादिना विवक्षितम्।

ईश्वरस्य जगत्कर्तृत्वासंभवादपि निरुक्तानुमानमनीश्वर एव विश्राम्यतीत्यभिप्रयन्नाह 'अपिचे'ति। 'स्वार्थे'ति। स्वार्थः—स्वप्रयोजनम्।

अवाप्तकामत्वान्न तावदात्मार्थं सृजति; प्रलयसमये प्रलीनसकलकरणकलेवरादिभोगोपकरणतया च चेतनानां दुःखाभावात् दुःखिदर्शनजनितकृपाप्रयुक्तिरपि नास्तीति व्यापकभूतस्वार्थकारुण्यनिवृत्तेर्व्याप्यभूतया प्रेक्षावत्प्रवृत्त्याऽपि निवर्तितव्यम् ।

सुखैकतानं जनयेज्जगत्करुणया सृजन् ।
तत्कर्मानुविधायित्वे हीयेतास्य स्वतन्त्रता ॥ १२ ॥

( इतीश्वरस्य जगत्कर्तृत्वानुपपत्त्युपपादनम् )

---

कारुण्यम्—परप्रयोजनसम्पादनोपयोगिगुणविशेषः परार्थपर्यवसन्नः । स्वार्थेच्छायाः कारुण्यस्य वा सत्तया व्याप्यं बुद्धिमत्प्रवृत्तिसामान्यमिति पूर्वार्धस्यार्थः । सिषाधयिषितस्येश्वरस्य त्ववाप्तकामत्वान्न स्वार्थः साधनीयः कश्चन सम्भवति सृष्टिहेतुः, न वा कारुण्यम्, परदुःखदर्शनाधीनोद्बोधत्वात्तस्य प्रलये च परेषां दुःखस्यैवाभावात् । अतः स्वार्थाभिसन्धिसमुद्बुद्धकारुण्यान्यतररूपव्यापकनिवृत्त्या जगत्करणरूपप्रवृत्तेर्निवृत्तिरित्युत्तरार्धस्यार्थः ॥ ११ ॥

कारिकार्थमेव प्रपञ्चयति 'अवाप्ते'त्यादिना । प्रकारान्तरेण कारुण्यस्यासम्भवमाह 'सुखैके'ति श्लोकार्धेन । प्रत्युतः दुःखालयं जगत्सृजतो न कारुण्यलेशोऽपि घटत इति भावः । नन्वीश्वरः कारुण्येनैव स्रष्टुं प्रवृत्तः । अथापि सृज्यकर्मापेक्षया सर्जनान्न नैर्घृण्यादिप्रसङ्ग इत्यत्राह 'तत्कर्मे'ति । तथा सति कर्मपारतन्त्र्यप्रसङ्गादीश्वरत्वं भज्येतेति भावः । ईश्वरो यदि जगत्कर्ता स्यादनवाप्तकामत्वादिमान् स्यादिति प्रतितर्कोऽत्राऽनुसन्धेयः । प्रतिप्रयोगस्त्वग्रे वक्ष्यत एव ॥ १२ ॥

न चोपादानादिसाक्षात्कारिण एव कर्तृत्वमित्यपि नियमः; उपादानमुपकरणं चाविदुष एवात्मनो ज्ञानादिषु कर्तृत्वात् ।

( इत्युपादानाद्यभिज्ञपूर्वकत्वे कार्यत्वस्यानैकान्त्यप्रकटनम् )

अतः—असिद्धत्वाद्विरुद्धत्वादनैकान्त्याच्च वर्णितात् ।
कार्यत्वहेतोर्जगतो न यथोदितकर्तृता ॥ १३ ॥

---

अथानैकान्त्यमप्याहोपादानाद्यभिज्ञकर्तृपूर्वकत्वसाधने 'न चोपादानादी'ति । ज्ञानादिविशेषगुणोपरागेणैवात्मनः प्रत्यक्षत्वात् ज्ञानार्थप्रवृत्तिवेलायां नात्मनो ज्ञानोपादानभूतस्वात्मसाक्षात्कारित्वं नियमतोऽस्ति । न वा तदुपकरणादृष्टमनआदिसाक्षात्कर्तृत्वम् । ज्ञानार्थं प्रवृत्तेर्ज्ञाने कर्तृत्वं समवायित्वं च परमस्ति । तथा चोपादानाद्यभिज्ञपूर्वकत्वाभाववति ज्ञानादौ कार्यत्वस्य सत्त्वाद्व्यभिचार इत्यर्थः ।

निरुक्तेश्वरानुमानदूषणानि सङ्गृह्णाति 'असिद्धत्वा'दिति । कार्यत्वस्य क्षित्यादावसिद्धिरशक्यक्रियत्वादिनाऽकार्यत्वानुमानात्तस्य । अनीश्वरत्वानवाप्तकामत्वशरीरित्वादिविपरीताकाराक्षेपकत्वात् क्षित्यादौ कर्तुः सिषाधयिषितस्य कार्यत्वस्य विरुद्धत्वम् । अभिमतविपरीताकाराक्षेपकत्वं हेतोर्विरुद्धत्वमिति हि प्राचां परिभाषा । अनैश्वर्याद्यापादकत्वं चानैश्वर्यादिविशिष्टकर्तृकत्वेन व्याप्तेर्घटादौ कार्यत्वहेतोर्गृहीतत्वादेव । किञ्च चेतनजन्यत्वमात्रे साध्येऽदृष्टद्वारा जीवजन्यत्वस्य कार्यमात्रेऽभिमतत्वात्सिद्धसाधनम् । तदुपादानादिसाक्षात्कर्तृकर्तृपूर्वकत्वं साध्यमित्युरीकार्यम् । तत्र चानुपदोक्तमनैकान्त्यं स्थितं ज्ञानाद्यन्तर्भावेन । एवमसिद्ध्यादिदोषदुष्टत्वात्कार्यत्वस्य तेन क्षित्यादौ उपादनोपकरणादिसाक्षात्कर्तृकर्तृपूर्वकत्वं न साधयितुं शक्यत इत्यर्थः ॥ १३ ॥

प्रयोगश्च भवति—महीमहीधरादि कार्यं न भवति, प्रसिद्धकार्यविलक्षणत्वात्, गगनवत्; अशक्यदर्शनोपादानोपकरणत्वाद्वा, व्यतिरेकेण घटादिवत्। परमाणवो न प्रत्यक्षाः निरतिशयसूक्ष्मद्रव्यत्वात्, तथैव घटादिवत्। विमतिविषयः कालो न लोकशून्यः, कालत्वादिदानीन्तनकालवत्। तनुभुवनादीश्वरकर्तृकं न भवति कार्यत्वात्तद्वदेव। ईश्वरः कर्ता न भवति प्रयोजनरहितत्वादशरीरत्वाद्वा मुक्तात्मवदिति।

(इति मीमांसकैरीश्वरसाधकसकर्तृकत्वानुमानेऽपि दूषणोद्भावनम्)

अत्र ब्रूमो न कार्यत्वं क्षित्यादौ शक्यनिह्नवम्।
सभागत्वात् क्रियावत्त्वात् महत्त्वेन विशेषितात्॥ १४॥

---

प्रतिप्रयोगानाह 'प्रयोगश्चे'ति। अशक्यदर्शनोपादानत्वमुपपादयति 'परमाणव'इति। तथैव-व्यतिरेकेणैव। कार्यत्वस्य पक्षे क्षित्यादौ असिद्धिसाधनाय प्रयोग उक्तः। अथ जीवैः सिद्धसाधनत्वसाधनार्थं प्रलयनिरासे प्रयोग उच्यते 'विमती'ति। सति हि प्रलये सर्गारम्भे स्रष्टृत्वं जीवानां करणादिविधुरत्वान्न घटत इति कर्त्रन्तरं मन्तव्यं भवेत्। तत् सर्वकार्यद्रव्यविरहलक्षणः प्रलयो नास्त्येवेति साध्यतेऽत्र। विरुद्धत्वप्रदर्शनार्थः प्रयोगः 'तनुभुवनादी'ति। ईश्वरकर्तृकं न भवतीत्यनीश्वरकर्तृकं भवतीत्यर्थपर्यवसायि। तद्वदेव—अन्वयेन घटादिवदेव। विपरीतपर्यवसायित्वं कार्यत्वानुमानस्योक्तम्। अभिमतपर्यवसायित्वाभावं च स्फोरयति 'ईश्वर'इति। ईश्वरः—ईश्वरत्वाभिमतः। अयं च सत्प्रतिपक्षरूपः।

एवं मीमांसकैर्दूषितमेवेश्वरानुमानं तार्किकप्रक्रियामेवावलम्ब्य प्रायशो व्यवस्थापयितुमुपक्रमते दोषोद्धारमुखेन 'अत्र ब्रूम' इत्या-

तादृशादेव मूर्तत्वाद्बाह्यप्रत्यक्षतान्वितात् ।
ससामान्यविशेषत्वादित्यादिभ्यो घटादिवत् ॥ १५ ॥

न चेदृश एव सन्निवेशः कार्यः, नेतर इत्यवयवसन्निवेशविशेष-

---

दिना । कार्यत्वम्—उत्पत्तिमत्त्वम् । क्षित्यादेः कार्यत्वे हेतवः सभागत्वादयः । सभागत्वं—सावयवत्वम् । 'इत्यादिभ्य' इत्यत्रादिपदेन विनाशिभावत्वादि विवक्षितम् । 'वित्त्यादिभ्य' इति प्राचीनमुद्रितपाठस्तु न समीचीनः । क्रियावत्त्वं, परिच्छिन्नपरिमाणवत्त्वरूपं मूर्तत्वं च नित्यपरमाणुसाधारणमिति सामानाधिकरण्यसम्बन्धेन महत्त्वविशिष्टं तद्धेतूकृतम् । सामान्यविशेषः—द्रव्यत्वादि पृथिवीत्वादि च, तच्च केवलं नित्यपरमाण्वादिसाधारणमिति बाह्यप्रत्यक्षविषयत्वेन विशेषितं तद्धेतूकृतम् । आत्मनो मानसप्रत्यक्षत्वात्सामान्यविशेषवत्त्वाच्च तत्र व्यभिचार इति बाह्यत्वेन प्रत्यक्षं विशेषितम् ॥ १४ ॥ १५ ॥

ननु कार्यत्वमस्तु निरुक्तहेतुभिः । तावता सकर्तृकत्वे किमायातम्? कार्यसामान्ये कर्तुः कारणत्वे मानाभावात्, कर्तारं विनापि कारणान्तरत एव क्षित्यादेरुत्पत्तिसम्भवादित्यत्राह 'न चेदृश'इति । सावयवत्वं ह्यवयवसन्निवेशविशेषरूपाकृतिमत्त्वम् । तच्च पुरुषकृतिसाध्यमेव दृष्टमिति विचित्राकारस्य मह्यादेरपि सकर्तृकत्वमेष्टव्यमेव । कार्यविशेषत्वमेवं सकर्तृकत्वव्याप्यमस्तु । स च विशेषो न क्षोण्यादिव्यावृत्त इति तस्यापि सकर्तृकत्वसिद्धिरप्रतिहता । किञ्च 'यद्विशेषयो'रित्यादिन्यायेन कार्यविशेषे कुलालादेः कारणत्वात् कार्यत्वावच्छिन्नेऽपि कर्तृत्वावच्छिन्नस्य कारणत्वमस्त्येवेति कार्यत्वमेव सकर्तृकत्वव्याप्यं क्षित्यादौ कर्तारं समर्थयतीति भावः । यद्वा क्षित्यादि न कार्यं प्रसिद्धकार्यविलक्षणत्वादित्यत्राप्रयोजकत्वमाह 'न चेदृश'इति । कार्यः-कृतिजन्यः, उत्पत्ति-

प्रतिनियतं रूपभेदमुदीक्षामहे । यत्तु शक्यक्रियं शक्यज्ञानोपादानोपकरणं च क्रियत इति, तदस्तु नाम । किन्तु ते क्रियाज्ञानशक्ती क्रियाज्ञानाभ्यामेव समधिगमनीये । ते च क्षित्यादिषु यथोक्तसाधनबलसमुपस्थापिते इति न विशेषः प्रसिद्धप्राकारगोपुरादिकार्येभ्यस्तनुभुवनादेः । नचैतावानेव क्रियागोचर इति विषयनियमः कश्चित् क्रियाया दृष्टः; येनेदमशक्यक्रियमध्यवस्येम । सिद्धे च कार्यत्वे तदुपादानादिसाक्षात्करणतदधिष्ठानतत्प्रेरणनिपुणः पुरुषविशेषः सिध्यत्येव ।

( इति क्षित्यादौ सकर्तृकत्वसाधककार्यत्वहेतोरसिद्धिपरिहारः )

---

मान् वा । कृतिजन्यत्वे उत्पत्तिमत्त्वे वा प्रयोजकं क्षोण्याद्याकारव्यावृत्तं घटाद्याकारमात्रवृत्तिधर्मविशेषं न पश्याम इत्यर्थः । सति हि तस्मिन् विशेषे प्रसिद्धकार्यवैलक्षण्यस्याकर्तृकत्वव्याप्तिः प्रसिध्येत् । अन्यथा त्वप्रयोजकत्वमेव अदृष्टकर्तृको राजप्रासादो न कार्यो दृष्टकर्तृकघटादिकार्यविलक्षणत्वादित्यादिवदिति भावः । ननु शक्यक्रियत्वादिरेव तादृशो विशेषः क्षित्याद्याकृतिव्यावृत्त इति चेत्तत्राह 'यत्तु'इति । 'तदस्तु नामे'ति । क्षित्यादौ तादृशविशेषाभावोऽसिद्ध इति हार्दम् । ते—क्रियाज्ञाने । 'यथोक्ते'ति । कार्यत्वहेतुकसकर्तृकत्वानुमानलक्षणेति यावत् । अयं भावः—उपादानादिगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यत्वं हि साध्यते मह्यादौ । तत्र च तद्विधेयककृतिः, तदुपादानाद्यपरोक्षज्ञानं च घटकमस्त्येव । ज्ञानक्रिययोरेवं प्रामाणिकत्वे तदनुगुणसामर्थ्यमपि कल्पनीयमेव जगत्कर्तुरित्यशक्यक्रियत्वादेरसिद्धिरिति भावः । क्रियागोचरः—कृतिविधेयः । 'सिद्धे'इति । प्रामाणिके च कार्यत्वे सति कार्यत्वस्य विशिष्टकर्तृपूर्वकत्वव्याप्तिबलात् क्षित्यादौ कर्तृविशेषसिद्धिरप्रत्यूहैवेति

अधिष्ठानं च तत्प्रवृत्त्यनुगुणसङ्कल्पवदीश्वरसन्निकर्षः, क्षेत्रज्ञेनेव स्वशरीरादौ। स च द्रव्यैः संयोगलक्षणः, तद्गुणैस्तु संयुक्तसमवायरूपः। प्रवृत्तिश्च परमाणूनां परिस्पन्दलक्षणा; धर्माधर्मयोस्तु फलोदयानुकूलतादृशदेशकालादिसहकारिसहितता। ताभ्यां धर्मा-

---

भावः। 'तदधिष्ठानतत्प्रेरणे'ति कर्मधारयः। यद्वा परप्रवृत्त्यनुगुणव्यापारः प्रेरणम्। तादृशव्यापारवतः प्रेर्येण सन्निकर्षोऽधिष्ठानमिति भिदा। एवं कार्यत्वं क्षित्यादेस्ततः सकर्तृकत्वं च साधितम्।

अथ सकर्तृकत्वानुमानस्य जीवैः सिद्धसाधनतां परिहर्तुं कर्तृत्वस्वरूपानुप्रविष्टमधिष्ठानादि विवृणोति **'अधिष्ठान'**मित्यादिना। यथा जीवस्य शरीरावयवाद्यधिष्ठानं तत्प्रवृत्त्यनुकूलसङ्कल्पेन, एवं परमाण्वदृष्टाद्यधिष्ठानं जगत्कर्तुरीश्वरस्य तत्प्रवृत्त्युनुकूलसङ्कल्पेनेति मन्तव्यमित्यर्थः। **'स चे'**ति। ईश्वरसन्निकर्षः परमाण्वादौ संयोगरूपः अदृष्टे च संयुक्तसमवायरूपो विभुद्वयसंयोगस्योपगमे। तदनुपगमे संयुक्तसंयोगिसमवायलक्षणो बोध्यः। इदं च तार्किकप्रक्रियया। **'प्रवृत्ति'**रिति। आरम्भकसंयोगानुकूलक्रियारूपा च परमाणूनां प्रवृत्तिरित्यर्थः। अदृष्टस्य प्रवृत्तिं निर्वक्ति **'धर्माधर्मयो'**रिति। इदं पुण्यं पापं वाऽस्मिन् देशे काले च फलं जनयत्वितीश्वरसङ्कल्पमूलाऽदृष्टस्य प्रवृत्तिः फलोदयानुकूलतादृशदेशकालादिसहकारिसमासादनलक्षणा भवतीत्यर्थः। **'ताभ्या'**मिति। एवकारो भिन्नक्रमः। ताभ्यां—चेतनाधिष्ठिताभ्यामेव धर्माधर्माभ्यां फलमित्यन्वयः। ननु कर्तारमन्तरैव कारणान्तरतः क्षित्यादि

---

टिप्प०—१ कारकचक्रप्रयोक्तृत्वं कर्तृत्वम्। तच्चाधिष्ठातृत्वरूपम्। उपादानादिगोचरापरोक्षज्ञानाद्यप्येतदुपयोगित्वादत्रैव पर्यवस्यतीति बोध्यम्। अधिकं व्याख्यान एव स्फुटीकरिष्यते।

धर्माभ्यामेव फलम्, चेतनानधिष्ठितानां सर्वेषामेतेषामचैतन्येनाकिञ्चित्करत्वात् । न हि चेतनेन वर्धकिनाऽनधिष्ठिता वासी देशकालादिसहकारिशतसमधिगमेऽपि यूपादीन्यापादयितुमलम् । बीजाङ्कुरादयस्तु पक्षान्तर्भूता इति तैर्व्यभिचारवचनमनभिज्ञतयैव

---

भवेदिति शङ्कामन्तर्निधाय तत्परिहारमाह 'चेतने'ति । अकिञ्चित्करत्वमेवोपपादयति 'नही'ति । तथा चाधिष्ठातुः कारकचक्रप्रयोक्तुः कर्तुश्चेतनस्यापेक्षा कार्यसामान्येऽस्त्येवेति क्षित्यादौ सकर्तृकत्वं नापह्नवार्हम् । अचेतनस्य कारणग्रामस्य चेतनाधिष्ठानमन्तरा प्रवृत्त्यनुपपत्तेरिति भावः । उपादानादिगोचरापरोक्षज्ञानमन्तरा च तदधिष्ठानलक्षणस्य कर्तृत्वस्यासम्भवात् क्षित्यादिकर्तुः परमाण्वादिसाक्षात्कारोऽप्यावश्यकः । चिकीर्षापूर्वकारकचक्रप्रवृत्तिहेतुकृतिनिरूप्यं च प्रेरणमिति कारकचक्रप्रयोक्तृत्वरूपाधिष्ठातृत्वलक्षणस्योपादानादिगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वलक्षणस्य च कर्तृत्वस्य नात्यन्तभेदः । ततश्च पूर्वत्रोपादानादिगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वं कर्तृत्वमुक्तम् । अत्राधिष्ठातृत्वरूपं तत् समर्थ्यत इति प्रकृतासाङ्गत्यमिति शङ्काया नावसर इत्यवधेयम् । एवंभूतस्य क्षित्यादिकर्तृत्वस्य सदा सर्वदर्शिनं सर्वसमर्थं चेश्वरं विनाऽन्यत्र जीवेष्वसम्भवान्न तैः सिद्धसाधनमिति चात्र विवक्षितम् । 'न चोभयवादी'त्यग्रिमग्रन्थे चैतद्वक्ष्यते । मध्येऽनैकान्त्यं परिहरति प्रसङ्गतः 'बीजे'ति । यत्र यत्र कार्ये न दृष्टः कर्ता, तत्सर्वमपि कार्यं प्रकृते पक्षीकृतम् । पक्षे च व्यभिचारशङ्का न दोषाय, अन्यथाऽनुमान-

---

टिप्प०—१ अचेतनकरणानां कर्त्रधिष्ठाननैयत्यनिरूपणसमयेऽदृष्टकर्तृकेषु गृहप्राङ्गणप्ररूढाङ्कुरादिषु व्यभिचारः स्मृतः । तस्योपेक्षानर्हत्वात् झटित्येव प्रतिक्षेपः क्रियत इत्याशयः ।

श्रोत्रियाणाम् । एतेन सुखादिभिर्व्यभिचारोऽपि प्रत्युक्तः । न चोभयवादिसिद्धतामात्रेण क्षेत्रज्ञानामेवेदृशाधिष्ठातृत्वकल्पनमुचितम्; तेषां सूक्ष्मव्यवहितादिदर्शनाशक्तेर्निश्चितत्वात् । दृष्टानु-

---

कथाया एव विलोपप्रसङ्गादिति भावः । 'एतेने'ति । पक्षान्तर्भूतत्वेनैवेत्यर्थः । आदिपदेन ज्ञानादि ग्राह्यम् । न हि स्वसुखज्ञानाद्यर्थप्रवृत्तिमान् जीवस्तदोपकरणोपादानादृष्टस्वात्मसाक्षात्कर्ता । तत् उपादानादिसाक्षात्कर्तृपूर्वकत्वरूपसाध्याभाववति सुखज्ञानादौ कार्यत्वस्य सत्त्वाद्व्यभिचार इत्यपि सुखादेरपि पक्षान्तर्भावत एव निरस्तमित्यर्थः। तत्राप्युपादानादिसाक्षात्कर्तृपूर्वकत्वमीश्वरेणैव निरूह्यतेऽस्माभिरिति हृदयम् । ननु तर्हि जीवस्य स्वसुखादौ कर्तृत्वं न स्यादिति वाच्यम् । सुखादिसम्पादनार्थतत्साधनदर्शनोपादानप्रवृत्तिमत्त्वादेवोपपत्तेः, कुलालादेरिव दृष्टोपकरणादिदर्शनोपादानादिना घटादौ । अदृष्टकारणाधिष्ठानं तु सर्वत्र कार्ये परमात्मन एवेति ध्येयम् । नन्वेवमपि स्वज्ञानाद्यर्थप्रवृत्तिपूर्वकाले नियमेन स्वस्य साक्षात्काराभावात् स्वज्ञानाद्युपादानभूतस्वात्मसाक्षात्कर्तृत्वं तदा तस्य नास्तीति चेत्, न, आत्मनः स्वप्रकाशत्वनयेन तदा स्वात्मसाक्षात्कारस्यापि संमानयितव्यत्वात् । स्वज्ञानादा स्वस्य कर्तृत्वस्य स्वस्मृतिमात्रेणापि अभ्युपगन्तव्यत्वाद्वा न दोषः । उपादानादिसाक्षात्कर्तृपूर्वकत्वमिति नियमस्तु ईश्वरेणैव तत्र तत्र निर्वाह्येति च न विस्मर्तव्यम् । तदर्थमेव सुखाद्यपि पक्षीकृतमिति बोध्यम् । व्यभिचारं परिहृत्य सिद्धसाधनतां परिहरति 'न चोभये'ति । 'ईदृशे'ति । परमाण्वदृष्टादिप्रवृत्त्यनुगुणाधिष्ठातृत्वकल्पनमित्यर्थः। अयुक्तत्वे हेतुमाह 'तेषा'मिति । द्रष्टुमेव तदशक्तानां तदधिष्ठानकथा केति भावः । नन्वीश्वर-

सारिणी हि सर्वत्र कल्पना; न दृष्टविरोधिनी। न चैवमीश्वरस्याशक्तिर्निश्चिता; प्रमाणान्तरतस्त(द)त्सिद्धेः । यथोदितप्रमाणबलेन सिध्यन् सांसिद्धिकसर्वार्थदर्शनतत्प्रेरणशक्तिसम्पन्न एव सिध्यति; कार्यत्वस्य समर्थकर्तृपूर्वकत्वेन प्रतिबन्धात् ।

( इति सकर्तृकत्वानुमाने व्यभिचारसिद्धसाधनदूषणयोरुद्धारः )

यत्तु परिमितशक्तिज्ञानानैश्वर्याद्यापादनाद्धर्मविशेषविपरीतसा-

---

स्यापि अधिष्ठानसामर्थ्यमदृष्टं कथं कल्प्यते ? तत्राह 'न चैव'मिति। अदृष्टमपि न दृष्टविरोधीति भावः । कुतो न दृष्टविरोधः ? अत्राह 'प्रमाणान्तरत' इति। अत्र 'तदसिद्धे'रिति पाठः स्याद्वेति सन्दिह्यते । प्रत्यक्षादिनेश्वरस्यासिद्धेरसामर्थ्यस्य तस्मिन्नदृष्टत्वादित्यर्थः । नन्वनेनैवानुमानेन तस्यासामर्थ्यं सेत्स्यतीत्यत्राह 'यथोदिते'ति । 'तत्सिद्धे' रिति पाठे तु शक्तिमदीश्वरस्यैव विलक्षणप्रमाणेन सिद्धेरित्यर्थः । किन्तत् ? तदाह 'यथोदिते'ति। सिध्यन्नित्यस्याग्रे 'हि' इति योज्यम्। 'सांसिद्धिके'ति । सर्वस्यार्थस्य क्रियाकारकफलवर्गान्तःपातितया सर्वाधिष्ठानं तदर्थं सर्वसाक्षात्करणमपीश्वरस्य प्राप्ते। ते चाकरणकत्वान्नित्ये एवेति भावः । 'कार्यत्वस्ये'ति । यत्र यत्र कार्यत्वं तत्र तत्र समर्थकर्तृजन्यत्वमिति व्याप्तेरित्यर्थः ।

कुलालादेः किञ्चिद्विषयाज्ञानाशक्ती अपि विद्येते । तदल्पज्ञाल्पशक्तिकर्त्रा व्याप्तिः कार्यत्वस्य गृह्यते भूयःसहचारदर्शनबलात् । तदभिमतविपरीतापादकत्वाद्विरुद्धत्वमिति शङ्कां 'यत्तु'इत्यादिनानूद्य परिहरति 'त'दिति। अप्रयोजकत्वात्—कार्यकरणोपयुक्तत्वाभावात्किञ्चिद्विषयाज्ञानादेः । अयं भावः—येनाकारेण कर्तुः कारणत्वं तद्रूपाव-

धनत्वमुद्भावितम्, तदतिस्थवीयः, अप्रयोजकत्वात्तेषाम्। न हि किञ्चित् क्रियमाणं कर्तुरर्थान्तरविषयमसामर्थ्यमज्ञानं वा स्वोत्पत्तयेऽपेक्षते; स्वसम्पादनसमर्थकर्तृमात्राक्षेपात् केवलव्यतिरेकासिद्धेः। तावतैवोपपद्यमाने कार्योदये सम्बन्धिनोऽकिञ्चित्करस्यार्था-

---

च्छिन्नकर्तृपूर्वकत्वेनैव कार्यत्वस्य घटादौ व्याप्तिर्गृहीता। किञ्चिद्विषयाज्ञानादिमत्त्वेन च न घटादौ कारणत्वं कुलालादेः। किन्तु तदुपादानादिसाक्षात्काराधिष्ठानक्षमत्वविशिष्टत्वेनैव। अन्यविषये ज्ञानाज्ञाने शक्त्यशक्ती वा अप्रयोजके प्रकृतकार्योत्पादे। तत्समर्थकर्तृकत्वेनैव व्याप्तिः कार्यत्वस्य। यथा धूमस्यार्द्रेन्धनसंयोगविशिष्टवह्नित्वावच्छिन्नेनैव संबन्धनियमः, न तु रक्तत्वकारीषत्वाद्यनुपयुक्तधर्मावच्छिन्नेन, तद्वदिति। अप्रयोजकत्वमेवोपपादयति 'नही'ति। अज्ञानम्—अर्थान्तरोपकरणाद्यज्ञानम्। 'स्वे'ति। स्वकारणत्वेनानुमीयमानस्य कर्तुः स्वनिष्पत्त्युपयोगिसामर्थ्याद्येवाक्षिप्यते कार्यत्वस्य समर्थकर्तृकत्वव्याप्तेरिति केवलव्यतिरेकस्य—केवलस्य पूर्ववर्तिमात्रस्यानुपयोगिनो व्यतिरेकस्य—अर्थान्तरगोचरशक्त्याद्यभावस्य प्रकृतकार्ये प्रयोजकतयाऽसिद्धेरित्यर्थः। अर्थान्तरविषयशक्त्याद्यभावस्य व्यतिरेके प्रकृतकार्यस्य व्यतिरेक इति व्यतिरेकसहचारस्यासिद्धेरिति वाऽर्थः। मूलपाठोऽत्रान्यथा स्याद्वा। तावतैव-स्वनिष्पादनोपयोगिज्ञानशक्तित एव। अर्थान्तरो विषयो यस्येति बहुव्रीहिः। अन्यपदार्थो ज्ञानादिरर्थसिद्धः। तस्य प्रतियोगितयाऽभावेऽन्वयः। सम्बन्धिनः—कार्यनियतपूर्ववर्तिनः। अकिञ्चित्करस्य-प्रकृतकार्यानुपयोगिनः। अन्यथासिद्धस्येति यावत्। अथ विकल्पमुखेनार्थान्तरविषयकाज्ञानादेः नियतपूर्ववृत्तित्वमपि प्रतिक्षिपति

न्तरविषयस्याभावस्य हेतुत्वकल्पनानुपपत्तेः । अपि च किं तदितरसमस्तवस्तुविषयमज्ञानादि व्यापकम्, उत कतिपयगोचरमिति विवेचनीयम् । न तावदशेषविषयम्, अनुपलब्धेः । न खलु कुम्भकारः कुम्भातिरेकि किमपि न विजानाति । अथ कतिपयविषयम्? तदपि न, अनियतविषयतया तस्य तस्य व्यभिचारदर्शनात् । न चास्ति किञ्चिद्व्यवस्थितम्, यदविद्यादिमानेव कर्तृतामनुभवति ।

---

'अपि चे'ति । व्यापकं—कार्यस्य नियतपूर्ववृत्ति । 'न ताव'दिति । प्रकृतकार्यातिरिक्तसकलकार्योपयोगिज्ञानसामर्थ्यविरहः कर्तरि कुत्राप्यसिद्ध एवेति भावः । ननु प्रकृतकार्यातिरिक्तकतिपयविषयाज्ञानादि कर्तुरिष्टं दृष्टं चेत्यत्राह 'अथे'ति । अर्थान्तरयत्किञ्चिदज्ञानादि न व्यवस्थितम् । यथा कश्चित्पटकारः घटं न जानाति कश्चित्तु जानाति, कश्चित्त्वन्यन्न जानाति अन्यस्तु तज्जानातीति प्रकृतकर्तुरन्यान्यविषयं ज्ञानमज्ञानं चाव्यवस्थितं दृश्यते । पटाद्यज्ञानं घटाद्यज्ञानं वा नियतं कर्तुर्दुर्वचमिति तत्तदज्ञानस्य तत्र तत्रानैकान्त्यान्न हेतुत्वमिति भावः । सर्वस्यापि कर्तुः किञ्चिद्वस्तु नियमेन न ज्ञायते इति तु दुर्वचमेवेत्याह 'न चास्ती'ति । ननु स्वविशिष्टज्ञानाभावत्वेनाज्ञानस्य हेतुत्वमुपेयते । स्वपदं प्रकृतकार्यपरम् । वैशिष्ट्यं च ज्ञाने स्वनिष्ठविषयत्वानिरूपकत्वस्वान्यनिष्ठविषयतानिरूपकत्वोभयसम्बन्धेन । तथा च तत्तदज्ञानस्य तत्र तत्र व्यभिचारेऽपि निरुक्तरूपावच्छिन्नज्ञानाभावस्य नियतपूर्ववृत्तित्वसम्भव एवेति चेत्, एवमपि पूर्वोक्तमन्यथासिद्धत्वं दुर्वारमेवेति ध्येयम् । कार्यत्वस्याज्ञत्वादिविरुद्धाकाराक्षेपकत्वं क्षित्यादिकर्तरि परिहृतमेतावता ।

न च शरीरिणैव कर्त्रा भाव्यम्, शरीरग्रहणेऽत्रानैकान्त्यात्। न खलु शरीरविशिष्टस्सन्नेवायमात्मा शरीरमुपादत्ते, अयोगिनो युगपदनेकशरीरग्रहणायोगात्। पूर्वदेहपरित्यागेन देहान्तरप्रापककर्मप्रेरितप्राणसहाय एव देहान्तरं प्रविशतीत्युपपादितमात्मचिन्तायाम्।

किञ्चात्मनः शरीरमधितिष्ठतोऽधिष्ठानक्रियाकर्मभूतस्य देह-

---

अथ शरीरित्वलक्षणविपरीताकाराक्षेपकत्वं परिहरति 'न चे'ति। कर्तुः शरीरवत्त्वमेवेति न नियमः। एकं देहं परित्यज्य देहान्तरपरिग्रहणं कुर्वतो जीवस्य तदाऽशरीरित्वादिति भावः। योगिनो योगवलाज्जीवतो देहान्तरग्रहणं सशरीरस्यैव दृष्टमित्ययोगिन इत्युक्तम्। ननु अयोगिनोऽपि सूक्ष्मशरीरवत एव स्थूलदेहान्तरग्रहणं प्रेत्येति न व्यभिचार इत्यत्राह 'पूर्वेति'। ननु श्रुतिवलाद्भूतसूक्ष्मैः परिष्वक्तस्यैव जीवस्य गत्यादिरेष्टव्या। तान्येवेन्द्रियप्राणसंसृष्टानि सूक्ष्मदेह उच्यते। तथा च कर्तुः शरीरित्वनियमे न व्यभिचार इति चेत्; अत्र ब्रूमः। एवमपि स्थूलशरीरवत्त्वनियमेऽनैकान्त्यं स्थितमेव। सूक्ष्मस्य तु न मुख्यं शरीरत्वम्। अमुख्यं च तदीश्वरं प्रति परमाणूनामप्यक्षुण्णमेव। तथाहि न्यायाचार्योदयनः परमाणूनामीश्वरशरीरत्वमुशतीति।

एवं शरीरोपादाने कर्तृत्वं जीवस्याशरीरस्यैवेति समर्थ्य शरीरप्रेरणे कर्तृत्वमप्यशरीरस्यैवेत्याह 'किंचे'ति। अधितिष्ठतः—प्रवर्तयतः। अधिष्ठातृदेहानुप्रवेशः-अधिष्ठातृतावच्छेदकघटकता। शरीरमधितिष्ठतोऽधिष्ठातृतावच्छेदकं सङ्कल्पादिरेव, न तु तच्छरीरमपि। अधिष्ठानकर्मीभूतस्य तस्य तदैव तदधिष्ठानकर्तृतावच्छेदकत्वं न संभवति, छेदनकर्मीभूतस्य काष्ठादेस्तच्छेत्तृतावच्छेदकत्वं यथा न तद्वदिति भावः।

स्याधिष्ठातृदशा(देहा)नुप्रवेशोऽनुपपन्नः, युगपदेकक्रियायामेकस्य कर्मकर्तृत्वविरोधात् । अधितिष्ठासितदेहसंयोगवत एव तत्प्रवृत्त्यनुगुणप्रयत्नयोगलक्षणमधिष्ठानं दृष्टमिति चेत्; अस्त्वेकतत्त्व(स्त्व)सम्बद्धस्याधिष्ठानानुपपत्तेः प्रेर्यवस्तुसम्बन्धिना प्रेरकेण भवितव्यमिति; न पुनर्देहसम्बन्धेन(न्धिना)भाव्यमिति । कुतो निर्णयः? इत एव, यतोऽन्यदप्यधिष्ठीयमानं मानदण्डादि स्वसम्बन्धिनैवाधिष्ठीयते । तेनाधिष्ठानक्रियापेक्षिताधिष्ठेयपदार्थसम्बन्धमात्रातिरेकेण देहसम्बन्धो नामापरो नादर्तव्यः । अस्ति चेश्वरस्यापि जगदुपादानोपकरणैस्सम्बन्ध इत्युक्तमेव ।

अथ स्वदेहव्यतिरिक्ते वस्तुनि प्रवृत्तिविशेषकरत्वं देहद्वारेणैव ।

---

ननु स्वाधिष्ठातृसम्बद्धस्य देहस्य कथं नाधिष्ठातृतावच्छेदकता? इति शङ्कते 'अधितिष्ठासिते'ति । परिहरति 'अस्त्वेके'ति । 'एकतत्त्वे'ति प्राचीनमुद्रितपाठो न संशुद्धः । 'एकतस्त्वसंबद्धस्ये'ति वाऽन्यथा वा पाठः संभाव्यते । अत्यन्ततोऽसम्बद्धस्याधिष्ठेयेन तदधिष्ठातृत्वस्य काष्ठासंबद्धस्य कुठारस्य च्छेत्तृत्वस्येवासंभवादधिष्ठेयसम्बन्धिनाऽधिष्ठात्रा भवितव्यमित्येव नियमः, न तु देहसंबन्धिना भाव्यमितीति भावः । प्रेरणं प्रति प्रेर्यसम्बन्ध एव हेतुः न देहसम्बन्ध इत्यत्र नियामकं पृच्छति 'कुत' इति । तद्वदति 'यत' इति । अधिष्ठीयमानं—प्रवर्त्यमानम् । स्वसंबन्धिना—प्रेर्यसंयोगिना । हस्तादि विशेष्यमत्र । अयमाशयः—शरीरिण एव प्रवर्तकत्वमिति न नियमः । हस्तादेरपि मानदण्डादिप्रवर्तकत्वात् । प्रेर्यसंबन्धिन एव प्रेरकत्वमिति तु संभवति, हस्तादेरपि प्रेर्यसम्बन्धादिति ।

शङ्कते 'अथे'ति । प्रवर्तनं नाम परव्यापारप्रयोजकप्रयत्नवत्त्वम् । तच्च

दृष्टं हि दण्डचक्रादिषु करसंयोगादिना कुलालादेः प्रवर्तयितृत्व-मित्युच्येत; तदपि न; अभिध्यानमात्रेणैव परशरीरगतगरनिरसन-विसारणदर्शनात्। कथमसति शरीरे परप्रेरणात्मकः सङ्कल्प इति चेत्; किं शरीरं सङ्कल्पयति, येन तदभावे न भवेत्?। करणमिति

---

पुरुषस्यैव। स च स्वहस्तव्यापारेण मानदण्डादि प्रवर्तयति। तथा च देहतदवयवभिन्नवस्तुप्रवर्तने देहहस्तादिव्यापारापेक्षाऽस्त्येवेति नेश्वर-स्यानाकृतेः परमाण्वाद्यधिष्ठातृत्वं संभवतीत्याशयः शङ्कितुः। इममपि नियममनैकान्त्येनैव दूषयति 'तदपि ने'ति। सङ्कल्पगरुडध्यानादिमान-सव्यापारमात्रेण हस्तादिव्यापारं विनापि परशरीरस्थविषनिवर्तनादिदर्श-नाद्देहतदवयवव्यतिरिक्ताधिष्ठाने देहादिव्यापारापेक्षानियमो नास्ती-त्यर्थः। प्रेर्यसंबन्धोऽप्यत्र प्रेरकस्य ज्ञानद्वारक एवेति च बोध्यम्। पुनः शङ्कते 'कथ'मिति। जन्यज्ञानादौ देहस्य हेतुत्वादिति भावः। अन्तर्नि-हितोत्तर आक्षिपति 'किं'मिति। देहस्य किं सङ्कल्पे कर्तृत्वम्? येन येन तदभावे सङ्कल्पो न घटेतेत्यर्थः। शङ्कते 'करण'मिति। तत्र करणं शरीरमिति चेन्न, मनस एव करणत्वादित्यर्थः। तथा च शरीराभावेऽपि स्वहेतोरेव सङ्कल्पो भविष्यतीति भावः। ननु मनसः करणत्वेऽपि जन्यज्ञानादौ देहस्याप्यस्त्येवापेक्षाऽवच्छेदकतयेति चेदत्र ब्रूमः—बद्ध-ज्ञानादावेव देहापेक्षा, नान्यत्र। 'मनसैवैतान् कामान् पश्यन् रमते य एते ब्रह्मलोके' 'तन्मनोऽकुरुत स्यामिति' 'मनसैव जगत्सृष्टि'-मित्यादिना मुक्तस्येश्वरस्य च मनोवत्त्वं, तत एव ज्ञानसङ्कल्पादिकं च प्रतीयते। तद्देहविगमेऽपि मनसो नित्येन्द्रियत्वोपगमादेव शरीरानपेक्ष-सङ्कल्पाद्युपपत्तिरिति। ईश्वरे नित्यज्ञानचिकीर्षाप्रयत्नवादिनां तार्किकाणां मते तु न तरां शरीराद्यपेक्षा। अत्र मनोवत्त्वागन्तुकसङ्कल्पादिसमर्थनं

चेन्न; मनसः करणत्वात् । किमस्तीश्वरस्य मनः ? बाढम् । नन्वेवं विग्रहधर्माधर्मानैश्वर्यादयः साधारणधर्माः प्रादुःष्युः । मैवम्; कार्यत्वाक्षिप्तसमर्थकर्तृमत्त्वात्(त्त्वार्थ)द्रढिम्नैवापास्तत्वात् । मनसो नित्येन्द्रियतया देहापगमेऽपि सम्बन्धाभ्युपगमादनैकान्तिकश्च । यावद्धि दृष्टानुगुणं व्याप्त्युपयोगि, तावदनुज्ञायते । नचास्मदादे-

---

तु तदेकदेशिमतेन वा सिद्धान्तच्छायया वेति बोध्यम् । मनोवत्त्वेऽनिष्ट-प्रसङ्गं शङ्कते 'नन्वेव'मिति । मनोवत्त्वस्य शरीरित्वादिव्याप्यतया शरीरित्वाद्यापद्येतेश्वरस्येत्यर्थः । परिहरति 'मैव'मिति । समर्थकर्तृपूर्वकत्वेन कार्यत्वस्य व्याप्तेर्गृहीतत्वात् ततः क्षित्यादौ सिध्यतः कर्तुरीश्वरस्याशरीरित्वैश्वर्याद्येव सेत्स्यति 'यक्षानुरूपो बलि'रिति न्यायात् । शरीरित्वाद्युपगमे चासामर्थ्यप्रसङ्गात् । यथाचैतत्तथा 'नचास्मदादे'रित्यनन्तरवाक्ये वक्ष्यते । तथा चेश्वरे शरीरित्वानैश्वर्याद्यापादनं धर्मिग्राहकमानबाधितमित्यर्थः । द्रढिम्नैव-दृढतयैव । 'समर्थकर्तृकत्वार्थद्रढिम्नैवे'ति समस्तपाठः साधीयान् । मनसः शरीरित्वादिव्याप्यत्वमपि निराकरोति 'मनस' इति । शरीराभावेऽपि प्रायणावान्तरलयादौ नित्येन्द्रियतया मनसः सत्त्वात्कालावच्छेदेन शरीरव्याप्यत्वं मनसो नास्तीत्यर्थः । नन्वेवमपि सशरीरस्यैव कर्तृत्वं तत्र तत्र दृष्टमिति शरीरिकर्तृकत्वेन व्याप्तिः कार्यत्वस्य कुतो न गृह्यत इत्यत्राह 'यावद्धी'ति । दृष्टानुगुणं कार्यानुगुणत्वेन दृष्टमत एव व्याप्त्युपयोगि यद्रूपं तदवच्छिन्नेनैव व्याप्तिरेष्टव्या । ज्ञानशक्त्योरेव च कार्यानुगुणता । ते यद्यपि कर्मपरवशे कुलालादौ शरीराधीने; नैतावता शरीरादेर्व्यापकतावच्छेदककोटिनिवेश इति भावः । एवमनभिमतापादकत्वं परिहृतम् । अथाभिमतविशेषसिद्धिप्रकारं प्रपञ्चयति 'न चास्मदादे'रिति । अपर्यन्त-

मनसाऽप्यचिन्त्यरचनस्यापर्यन्तविस्तारस्य महाभूतभौतिकप्रपञ्चस्य प्रादेशिकशरीरकः किञ्चिज्ज्ञः पुण्यपापपरवशगतिरलं निर्माणायेत्यपरिमितज्ञानैश्वर्यशक्तिः शरीराद्यनपेक्षः सङ्कल्पादेव सकलभुवननिर्माणक्षमः कर्ता सिद्धः ।

(इति विरुद्धत्वदोषपरिहरणम्)

ईदृशेन कर्त्रा घटादिषु कार्यत्वस्य सम्बन्धो न दृष्ट इति चेत्; अतिगहनगिरितटाधिष्ठानेनातिप्रकृष्टादृष्टचरेन्धननिवहसम्बन्धिना हुतवहविशेषेण महानसादौ धूमस्य वा किं सम्बन्धो दृष्टः? येन धूमविशेषदर्शनात् गिरिशिखरे तथाविधाग्निरनुमीयते । यादृशो धूमो यत्रावगतः तत्रैव तादृशस्तत्सम्पादनसमर्थो दृष्टान्तभूमावपरिदृष्टोऽपि सामान्यव्याप्तिबलेन पक्षधर्मतावशात् सिध्यतीति चेत्; तदिदमस्माभिरभिधीयमानं किमिति न हृदयमधि-

विस्तारस्य—अनवधिकायामवतोऽपरिच्छिन्नस्य । प्रादेशिकशरीरकः—परिमितदेशवर्तिपरिच्छिन्नमूर्तिमान् । अलं—समर्थः । शिष्टं स्पष्टम् ।

शङ्कते 'ईदृशेने'ति । अकर्मवश्यत्वाशरीरित्वसर्वज्ञत्वादिविशिष्टकर्त्रा कार्यत्वस्याविनाभावो घटादौ न दृष्ट इति शङ्कितुर्भावः । सामान्यधर्मावच्छिन्नव्याप्तिग्रहादेव पक्षधर्मताबलसहकारात्पक्षीयसाध्यविशेषसिद्धिरिति हार्देन प्रतिबन्दीमाह 'अतिगहने'ति । शङ्कितुर्मुखेनैव परिहारं वाचयति 'यादृश'इति । यादृशः—अतिजडिलगगनतलनिचुम्बिसन्ततसन्तन्यमानधारारूपः । तादृशः—महावह्निः । 'त'दिति । निरुक्तविधमहाधूमजननसमर्थ इत्यर्थः । अत्र 'तादृशतत्संपादनसमर्थ' इति समस्तपाठः स्याद्वा । उत्तरतौल्यमाह 'तदिद'मिति । यथा देशकालपरिमाणादिविशेषो वह्नेरनैकान्त्याद्धूमव्यापकतावच्छेदकघटको न भवति, किन्त्वार्द्रेन्धनयुग्वह्नित्वमात्रं तथा, एवं मनुष्य-

रोहति भवताम् । इहापि कार्यत्वं समर्थकर्तृपूर्वकत्वेन घटादिषु विदितसम्बन्धनियमं क्षित्यादिषु दृश्यमानं स्वसम्पादनसमर्थमदृष्टपूर्वमेव बुद्धिमत्कर्तारमुपस्थापयति । यथैव हि देशकालेन्धनपरिमाणादिविशेषानादरेण धूमस्य स्वोदयानुगुणहुतवहमात्रेण सम्बन्धनियमः, तथैवानीश्वरत्वाकिञ्चिज्ज्ञत्वशरीरित्वपुण्यपापपरवशत्वमनुष्यत्वादिविशेषप्रहाणेन कार्यस्य स्वनिर्माणसमर्थबुद्धिमत्कर्तृमात्रेण सम्बन्धनियमनिश्चय इति न कश्चिद्विशेषः ।

अपि च विभुद्रव्यसंयोगिनः परिस्पन्दवतश्च सर्वत्र स्पर्शवत्त्वाव्यभिचारेऽपि ज्ञानसुखादिनित्यद्रव्यविशेषगुणानुमितात्मसंयोगिनो मनसः कथमिव स्पर्शरहितत्वम्? कथं च वायवीयद्रव्यस्य

---

त्वादि सहचरितमपि न कर्तृतावच्छेदककोटिघटकम् । अन्यत्रापि कर्तृत्वदर्शनात् । किन्तु सामर्थ्यमात्रं तथेत्याह 'यथैवे'ति । धूमात्पर्वते वह्निविशेषानुमानात् कार्यत्वात् क्षित्यादौ कर्तृविशेषानुमानस्य न वैलक्षण्यम् । यथा तत्राभिमतविशेषसिद्धिस्तथा प्रकृतेऽपीति भावः ।

अथ सपक्षदर्शनमात्रेण सर्वधर्मापादने प्रतिबन्दीं विवक्षुराह 'अपि चे'ति । विभुद्रव्यसंयोगिन इत्यनेनाविभुत्वं मनसो विवक्षितम् । विभुद्वयसंयोगस्य तार्किकैरनुपगमात् । ज्ञानाद्यसमवायिकारणसंयोगाश्रयतया मनःसिद्धिरिति ज्ञानेत्यादिविशेषणम् । आत्ममनःसंयोगस्यैव हि ज्ञानादावसमवायिहेतुत्वं तन्मतम् । ज्ञानायौगपद्याच्च तस्याणुत्वं मतम्, निःस्पर्शत्वं च । स्पर्शवत्त्वे भूतत्वप्रसङ्गात् । भूतत्वे चाभूतविशेषगुणग्राहकत्वासंभवात् । अत्रायं प्रतितर्को विवक्षितः—मनो यदि परिच्छिन्नपरिमाणवत् स्यात् क्रियावद्वा तर्हि स्पर्शवद्भवेदिति । भूयः सहचारदृष्टस्यापि क्वचिद्व्यभिचार इत्यस्येदमेकं निदर्शनम् । अथ निदर्शनमन्यत्प्रदर्शयति 'कथं चे'ति । अनियताधिष्ठानेति पदच्छेदः । यद्यपि महतो

महिमगुणशालिनो नियताधिष्ठानस्पार्शनत्वनियमदर्शनेऽपि त्वगिन्द्रिये तद्विपर्ययः ? तैजसस्य वा रूपस्पर्शयोरन्यतरस्य वा प्राकट्यनियमेऽपि रूपोपलम्भसाधनताऽनुमिततैजसभावस्य चक्षुषो नियमेन तदुभयानुद्भवाभ्युपगमः ? । अथ कार्यदर्शनानुमितसद्भावानां तैजसादिभावेऽपि तत्तद्विशेषाणां योग्यानुपलब्धिबाधितत्वात् तदभ्युपगमेऽनेकनियमभङ्गप्रसङ्गाच्च तथाऽभ्युपगमः, हन्त तर्हि प्रकृत-

---

वायोर्गतिशीलस्यानियताधिष्ठानत्वमुद्भूतस्पर्शवत्त्वात् स्पार्शनप्रत्यक्षत्वं च भूयो दृष्टम् । अथापि वायवीयत्वेनानुमितस्य देहव्यापिनस्त्वगिन्द्रियस्य नियताधिष्ठानत्वमस्पार्शनत्वं चाभिमतम् । अत्र प्रतितर्कः—त्वचो वायवीयमहत्कार्यत्वे उद्भूतस्पर्शवत्त्वादि भवेदिति । निदर्शनान्तरं 'तैजसस्ये'ति । कार्यतेजसो महिमगुणवतो रूपस्पर्शयोरुद्भूतत्वं ज्वलनादौ । स्पर्शमात्रस्योद्भूतत्वं भर्जितकपालवह्नयादौ । रूपमात्रस्योद्भूतत्वं प्रभादौ । एवं रूपस्पर्शोभयतदन्यतरोद्भवस्य भूयो दृष्टत्वेऽपि चक्षुषो रूपादिषु रूपमात्रव्यञ्जकत्वेनानुमिततैजसभावस्य तदुभयानुद्भवः कथमित्यर्थः । चक्षुषः तैजसमहत्कार्यत्वे रूपस्पर्शान्यतरोद्भवः स्यादिति प्रसङ्गोऽत्र बोध्यः । प्रतितर्काणामाभासत्वमित्याशयेन प्रतिवक्ति परः 'अथे'ति । तत्तद्विशेषाणाम्—उद्भूतरूपस्पर्शान्यतरस्पार्शनत्वस्पर्शवत्त्वादीनां भूयः सहचारदर्शनमात्रेण चक्षुरादावापाद्यमानानां योग्यानुपलम्भबाधितत्वमिति नापादकव्यापकत्वमापाद्यस्येति भावः । यद्यपि मनसोऽणुत्वात्तत्र स्पर्शवत्त्वस्य योग्यानुपलम्भबाधो दुर्वचः । तथापि तत्र तदुपगमेऽनेकनियमभङ्गप्रसङ्गोऽस्त्येव । तदाह 'तदभ्युपगम'इति । यथा—मनसः स्पर्शवत्त्वे भूतत्वप्रसङ्गः । भूतत्वानुपगमे स्पर्शवतो भूतत्वमेवेति नियमभङ्गः । भूतत्वोपगमे चेन्द्रियान्तरवदभूतात्मविशेषगुणाग्राहकत्वापत्तिः ।

विषयेऽपि प्रसञ्जितधर्मविशेषाणामनुपलम्भबाधाविशेषात् अनेकनियमदर्शनविघातप्रसङ्गाच्च तथाऽभ्युपगम इति सर्वं समानमन्यत्राभिनिवेशात् ।

( इतीश्वरे सामान्यतोदृष्टानुमानस्य प्रामाण्यव्यवस्थापनम् )

दृश्यन्ते हि नीतयः । यथा—विवादास्पदं परमाण्वादि प्रेक्षाव-

---

तद्ग्राहकत्वोपगमे चाभूतविशेषगुणाग्राहकत्वनियमस्यापि भङ्गः । इति । एवं चक्षुरादावपि उद्भूतरूपवत्त्वादिस्वीकारे नानानियमभङ्गप्रसङ्गोऽनुसन्धेयः । विपक्षे बाधकविरहेणापाद्यापादकयोर्व्याप्यव्यापकभावासिद्धिः । तथा च प्रतितर्काणां छिन्नमूलत्वं च विवक्षितम् । 'तथाऽभ्युपगम' इति । मनःप्रभृतेर्निःस्पर्शत्वाद्यभ्युपगम इत्यर्थः । तुल्यनयेन कर्तृत्वे सशरीरत्वमिति नियमोऽपि नास्तीत्याशयवानाहेश्वरवादी 'हन्त तर्हीति' । स्वस्मिन् प्रसञ्जितप्रतितर्कनिराकरणयुक्तेः परमुखेनैवानुवाचनजनितहर्षद्योतकोऽयं हन्तशब्दः । सशरीरत्वे शरीरद्वारोपलम्भप्रसङ्ग ईश्वरस्य । कर्मवत्त्वे चासार्वज्ञ्यादिप्रसङ्गः । प्रकृष्टधर्मवत्त्वात् सार्वज्ञ्याद्युपगमश्च न संभवति । साधनानुष्ठानराहित्यात्प्रकृष्टधर्मस्यानुपपत्तेः । ईश्वरस्य स धर्मो नित्य एवोपेयत इति पक्षे च धर्मसामान्यस्य विहितक्रियाजन्यत्वनियमभङ्गः । अकर्मत्वे चेश्वरस्य सशरीरत्वायोगः । तच्छरीरस्य नित्यत्वोपगमे च सावयवत्वस्य कार्यत्वव्याप्यत्वनियमभङ्गः । तथा च क्षित्यादेरपि कार्यत्वासिद्धेस्तत्कर्तृत्वेनेश्वरानुमानायोग इति बहुतरमूहनीयम् । सहचारमात्रेण कर्तृत्वस्य न सशरीरत्वादिव्याप्तिः, विपक्षे बाधकविरहादिति च हार्दम् ।

ननु चक्षुरादेस्तैजसादिभावेऽपि तत्तद्विशेषस्य प्रमाणसिद्धत्वान्न तद्विरुद्धापादानसम्भवः । नैवं त्वीश्वरीयविशेषाणां मानसिद्धत्वमिति चेत्तत्राह 'दृश्यन्त' इति । नीतयः-न्यायाः, अनुमानानि । ईश्वरेऽप्यभि-

त्प्रेरितं चेष्टते, अचेतनत्वात्; यदचेतनं तत्तथा, यथा तथाविधं कन्दुकादि। तथा विवादाध्यासिता बाह्याभ्यन्तरप्रवृत्तयः प्रकृत्युपकरणप्रत्यक्षपूर्विकाः कार्यत्वात्तद्वदेव।

प्रत्यक्षं तत् प्रमेयत्वात्पदार्थत्वाद्धटादिवत्।
एकेच्छानुविधायीदमचैतन्यात् स्वदेहवत् ॥ १६ ॥

---

मतविशेषेषु सन्ति प्रमाणानीत्यर्थः। तान्येव प्रपञ्चयति 'यथा' इति। 'तथे'ति पाठे तु तथा हि नीतयो दृश्यन्त इत्यन्वयः। तथा—ईश्वरीयाभिमतविशेषसाधकाः। ईश्वरस्य स्रष्टृत्वे तावदनुमानमुक्तं पूर्वम्। तस्य प्रवर्तयितृत्वे तदाह 'परमाण्वादी'ति। विवादास्पदमिति पक्षतासम्भवद्योतकं विशेषणम्। साध्यतदभावान्यतरनिर्णये हि पक्षताऽतिवर्तते। साध्यतदभाववत्त्वविप्रतिपत्तिविषयीभूतमिति तदर्थः। साध्यवत्त्वेन सन्दिह्यमानमिति फलितम्। साध्यसन्देहस्य पक्षतात्वं प्राचां मतम्। सिद्धिस्थलेऽप्याहार्यसंशयादेवानुमित्सया भवत्यनुमानमिति बोध्यम्। प्रेरणं च परप्रवृत्त्यनुगुणसङ्कल्पप्रयत्नवत्त्वलक्षणम्। परमाण्वादिगोचरावीश्वरस्य सङ्कल्पप्रयत्नौ प्रसाध्य साक्षात्कारमपि तादृशं साधयति 'तथे'ति। तद्वदेव-कन्दुकादिप्रवृत्तिवदेव। कन्दुकादिप्रवृत्तावुपादानं कन्दुकादि,उपकरणं दण्डादि। तत्साक्षात्कारी दण्डेन कन्दुकादि प्रवर्तयति। ततश्च तत्र प्रवृत्तिरुत्पद्यते। एवं परमाण्वादिप्रवृत्तेर्ज्ञानाद्यर्थान्तरात्मप्रवृत्तेरप्युपादानोपकरणपरमाण्वाद्यदृष्टादिसाक्षात्कर्ताऽत्र साध्यते। न चैतत्साक्षात्कर्तृत्वं जीवानामिति न तैः सिद्धसाधनम्। अतीन्द्रियार्थानामपि साक्षात्कारः फलितोऽत्रानुमाने।

अथ साक्षादेवातीन्द्रियार्थान् पक्षीकृत्य प्रत्यक्षविषयत्वं साधयति 'प्रत्यक्षं'मिति। तत्—परमाण्वादि। अतीन्द्रियार्थसाक्षात्कर्ता कश्चित् संभवतीत्यत्रैव तात्पर्यमेवंविधानुमानप्रतिपादकानां परमाचार्याणाम्।

एकेनाधिष्ठिताः कार्यं-कुर्वते सर्वचेतनाः ।
देहसम्बन्धसापेक्षकार्यकृत्त्वात् त्वगादिवत् ॥ १७ ॥
एकप्रधानपुरुषं विवादाध्यासितं जगत् ।
चेतनाचेतनात्मत्वादेकराजकदेशवत् ॥ १८ ॥

( इतीश्वरीयविशेषेष्वनुमानोपन्यासः )

[ एतावानेवेश्वरसिद्धिभाग उपलभ्यते ]

इति श्रीमद्विशिष्टाद्वैतसिद्धान्तप्रवर्तनधुरन्धरपरमाचार्य-श्रीभगवद्यामुनमुनिसमनुगृहीते सिद्धित्रये ईश्वरसिद्धिः ॥

---

क्षित्यादिकर्तुरभिमत एकत्वे प्रयोगमाह 'एकेच्छे'ति । इदमचेतन-प्रपञ्चजातम्, अचैतन्यात् अचेतनत्वात्, एकेच्छानुविधायि एक-चेतनसङ्कल्पनुसारि । अत्रान्वय्युदाहरणं स्वदेहः ॥ १६ ॥ अचेतन-प्रपञ्चस्येश्वरेच्छानुविधायिप्रवृत्तित्वं प्रसाध्य चेतनप्रपञ्चस्यापि तत्सा-धयति 'एकेने'ति । त्वगादिवत्-त्वगादीन्द्रियवत् ॥ १७ ॥ सर्वजग-त्स्वामित्वसर्वेश्वरत्वरूपविशेषसाधकमनुमानमाह 'एके'ति । एकः प्रधानपुरुषो यस्य तदेकप्रधानपुरुषम् । एकप्रधानपुरुषविशिष्ट-मित्यर्थः । पुरुषस्यैकस्य प्राधान्यं नियन्तृत्वस्वामित्वलक्षणम् । वैशिष्ट्यं नियाम्यत्वशेषत्वादिना ॥ १८ ॥

---

टिप्प०—१–यद्यपि समुपलभ्यमानेऽस्मिन्नीश्वरसिद्धिभागेऽनुमानेनैवेश्वर-साधनं दरीदृश्यते । शास्त्रयोनित्वं तु तस्य संमतं त्रय्यन्तविदाम् । अत्रेदं प्रति-भाति–आनुमानिकीमीश्वरसिद्धिमग्रे निरस्य शास्त्रप्रमाणकत्वमपि समाक्षिप्तं भवे-न्मीमांसकैः । तदुपरि च निरुक्तानुमानानां शास्त्रप्रमाणानुग्राहकतर्करूपत्वमुररी-कृत्य शास्त्रप्रमाणकत्वमीश्वरस्य व्यवस्थापितं भवेत् । श्रीभाष्ये शास्त्रयोनित्वाधि-करणपूर्वपक्षस्यैतद्ग्रन्थसंवादित्वात्तत्रत्यसिद्धान्तभागस्यापि एतदुपरितनभागसंवा-दित्वं संभाव्यते । यद्वा स्वप्रौढिप्रकाशनाय तार्किकप्रक्रिययाऽनुमानेनैवेश्वरसिद्धिर-त्रोपवर्णिता स्यात्परमाचार्यैरिति ॥

(व्या०) निष्प्रयोजनत्वात्कर्तृत्वमीश्वरस्य न संभवतीत्यादेरपि परासोऽत्र विभाव्यः। यथा—जीवरक्षार्थमेव तावदीश्वरस्य जगद्व्यापारः। ननु तर्हि सुखोत्तरमेव जगत् सृजेत्। मैवम्। जीवीयकर्मापेक्षया तथा तथा सर्जनात्। ननु कर्मापेक्षित्वेऽनैश्वर्यं तस्य प्रसज्येत। न। अपराधानुगुणदण्डधरस्येव राज्ञः तत्तत्कर्मफलनिष्पादकस्येश्वरस्यापि ऐश्वर्यातिशयस्यैव प्रसिद्धेः। अदृष्टादीनामधिष्ठातृत्वादि हि तस्य महते वैभवाय। यथाकर्म फलप्रदत्वात् स्वामित्वमपि सर्वस्य तस्मिन् प्रतितिष्ठत्येव। सर्वप्रधानत्वादृष्टाधिष्ठातृत्वादिसाधनप्रमाणोपन्यासकानां चाचार्यचरणानामेतद्धार्दमित्युन्नयाम इति दिक् ॥

ग्रन्थभागोऽग्रिमः क्वापि नेतः समुपलभ्यते।
यावल्लब्धस्य विहिता व्याख्येयं सरला मया ॥

इति श्रीनागपुरी (तिरुनाङ्गूर)दिव्यदेशाभिजनेन प्रतिवादिभयङ्कराचार्यान्वयभूषणविद्वद्वर्य श्रीकृष्णमाचार्याख्याचार्यवर्यपुत्ररत्नेन चतुस्त्रीपारावारपारीणदिगन्तविश्रान्तकीर्ति-दयामूर्ति-श्रीमद्भाष्यकारदिव्यवंशावतीर्ण-श्रीभूतपुरीनिवासरसिक-विद्वत्सार्वभौम-हारीत-श्रीमदासूरिरामानुजाचार्यदेशिकेन्द्रचरणकमलवरिवस्यासमधिगतपदवाक्यप्रमाणतन्त्रहृदयेन श्रीवैष्णवदासेन प्र. भ. अण्णङ्गराचार्येण न्यायव्याकरणशिरोमणिनोभयवेदान्तविदुषा प्रणीतमीश्वरसिद्धेर्व्याख्यानं सिद्धाञ्जनं विजयतांतराम्।



श्रीः।

श्रीहरिर्जयति।

श्रीमद्भगवद्यामुनमुनये नमः।

श्रीमते रामानुजाय नमः।

परमाचार्यश्रीमद्यामुनमुनिसमनुगृहीते सिद्धित्रये—

# संवित्सिद्धिः।

## सिद्धाञ्जननामकव्याख्योपेता।

---

एकमेवाद्वितीयं तद्ब्रह्मेत्युपनिषद्वचः। ब्रह्मणोऽन्यस्य सद्भावं

---

( व्याख्या ) ईष्टे विश्वस्य नित्यं
व्यपगततुलनायोग्यवस्त्वन्तरो यो
विद्ये यस्याधिगत्यै
विदुरुपनिषदो द्वे परां चापरां च।
यो विश्वस्यान्तवासी
प्रथयति च धियं तस्य तस्यानुरूपां
देवः श्रीमान् स मह्यं
प्रदिशतु दयया धीविकासं समन्तात्॥ १॥

यामुनाशयविज्ञं तं ध्यात्वा लक्ष्मणयोगिनम्।
यामुनार्यकृतिं संवित्सिद्धिं व्याकरवाण्यहम्॥ २॥

प्रमाणफलरूपायाः संविदः प्रमेयतत्त्वव्यवस्थापिकायाः स्वरूपादि विशोध्यतेऽत्र संवित्सिद्धौ। इयमादिमा सिद्धित्रये श्लोकवार्तिकवच्छ्लोकमालिकारूपा। तन्त्रवार्तिकवच्चात्मेश्वरसिद्धी। अत्र चोपक्रममध्यावसानेषु भूयान् ग्रन्थभागो लुप्तः। उपलभ्यमानसंवित्सिद्धिभागे च बहुलमद्वैतिमतनिरासो दृश्यते।

ननु तत्प्रतिषेधति ॥ १ ॥ अत्र ब्रूमोऽद्वितीयोक्तौ समासः को
विवक्षितः। किंस्वित्तत्पुरुषः किं वा बहुव्रीहिरथोच्यताम् ॥ २ ॥
पूर्वस्मिन्नुत्तरस्तावत्प्राधान्येन विवक्ष्यते। पदार्थस्तत्र तद्ब्रह्म ततो-
ऽन्यत्सदृशं तु वा ॥ ३ ॥ तद्विरुद्धमथो वा स्यात्रिष्वप्यन्यन्न

---

अद्वैतिनो हि 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीय'मिति कारणीभूतस्य सच्छब्दितस्य परब्रह्मणोऽद्वितीयत्वश्रवणात् 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति ज्ञानमात्रत्वश्रवणाच्च सजातीयविजातीयस्वगतभेदसामान्यशून्यं ब्रह्मैव चिन्मात्रं सत् परमार्थः, अन्यत्सर्वं तत्रैवाविद्यया परिकल्पितं मिथ्याभूतमित्यामनन्ति। तत्राद्वितीयश्रुतेस्तदभिमतार्थप्रतिपादकत्वासम्भवं वर्णयितुमादौ तन्मतमनुवदति 'एकमेवे'ति। यत्तदोर्नित्यसंबन्धात्पूर्वार्धे यदित्यनुषज्यते। यत् उपनिषद्वचः, तदित्यन्वयः। यद्वा उत्तरार्धे तच्छब्दः प्रसिद्धपरामर्शी न तु यच्छब्दनिर्दिष्टप्रतिनिर्देशरूपः। 'तद्ब्रह्मे'त्यत्र 'सद्ब्रह्मे'ति पाठः संभाव्यते। ब्रह्मवाचिसत्पदविशेषणमद्वितीयपदं ब्रह्मणोऽन्यस्यासत्त्वपरमिति पूर्वपक्षिणामाशयः॥ १ ॥
तमिमं दूषयितुमद्वितीयपदे वृत्तिं विकल्पयति सिद्धान्ती 'अत्रे'ति। अद्वितीयोक्तौ–अद्वितीयपदे। अथवा किं बहुव्रीहिरित्यन्वयः ॥ २ ॥
अद्वितीयपदस्य तत्पुरुषवृत्तत्वे न द्वितीयस्य बाध इत्याह 'पूर्वस्मिन्' इत्यादिना श्लोकचतुष्टयेन। तत्पुरुष इति प्रथमकल्पे तावदुत्तरपदार्थः प्राधान्येन विवक्ष्यते, उत्तरपदार्थप्रधानत्वात्तत्पुरुषस्येत्यर्थः। 'तत्रे'ति। न द्वितीयमद्वितीयम्। नञ्तत्पुरुषे चारोपितत्वस्य पूर्वपदार्थत्वं

---

टि०—१ अत्र मूले श्लोकेष्वङ्कविन्यासोऽस्माभिरेव कल्पितः, मूलव्याख्यानसमनुसन्धानसौकर्याय। तथा तत्र तत्रैकान्वयात्सार्धश्लोकस्यैक एवाङ्को दत्त इति च ध्येयम्।

बाधते। अन्यत्वे सदृशत्वे वा द्वितीयं सिध्यति ध्रुवम् ॥ ४ ॥ विरुद्धत्वे द्वितीयेन तृतीयं प्रथमं तु वा। ब्रह्म प्राप्नोति यस्मात्तत् द्वितीयेन विरुध्यते ॥ ५ ॥ अतः सप्रथमाः सर्वे तृतीयाद्यर्थराशयः। द्वितीयेन तथा स्पृष्ठा स्वस्थास्तिष्ठन्त्यबाधिताः ॥ ६ ॥ ननु नञ् ब्रह्मणोऽन्यस्य सर्वस्यैव निषेधकम्। द्वितीयग्रहणं यस्मात्सर्वस्यैवोप-

---

तस्य चोत्तरपदार्थविशेषणत्वमिष्यते शाब्दिकैः। आरोपश्च सदृशादौ। तत्फलितकथनं तदन्याद्यर्थे नञ् इति। 'नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगति'रिति च शाब्दिकानां परिभाषा। तथा चाद्वितीय-पदेनारोपितद्वितीयत्ववद्ब्रह्मेति बोधे तत्र द्वितीयान्यत्वस्य द्वितीयसदृश-त्वस्य द्वितीयविरुद्धत्वस्य वा प्रतीतिः फलति। अर्थत्रयेऽपि ब्रह्मभिन्नस्य द्वितीयपदार्थस्य न बाधः। द्वितीयप्रतियोगिकस्य भेदस्य सादृश्यस्य वा प्रतिबोधने प्रतियोगितया द्वितीयसिद्धेर्निष्प्रत्यूहत्वादिति भावः ॥३॥४॥ नन्वेवमपि द्वितीयविरुद्धत्वे ब्रह्मणो बोधिते कथं न द्वितीयस्य बाध इत्यत्राह 'विरुद्धत्व'इति। अयमाशयः—द्वितीयत्वं अत्र द्वित्वसङ्ख्या-पूरकत्वरूपम्। द्वितीयविरुद्धत्वं च द्वितीयत्वविरुद्धधर्मवत्त्वात्। स च धर्मः प्रथमत्वं नियमतः तृतीयत्वादि वा। नैतावता द्वितीयस्य कस्य-चिद्बाध इति ॥ ५ ॥ तदाह 'अत'इति। द्वितीयेन—द्वित्वसङ्ख्यापूरकेण, तथा स्पृष्ठा—विरोधसंवन्धेन सम्बध्य, स्वस्थाः—स्वस्वप्रमाणाधीन-सिद्धिकाः सन्तः, अद्वितीयोक्त्याऽबाधिताः प्रथमतृतीयाद्यर्थराशयो वर्तन्त एवेत्यर्थः। 'स्पृष्टा'इति पाठः संभाव्यते ॥ ६ ॥ अत्र शङ्कते पूर्वपक्षी 'ननु न'ञिति। अयमाशयः—द्वितीयपदं न मुख्यार्थकम्। किन्तु भेदप्रपञ्चमात्रलक्षकम्। नञ्पदं चात्यन्ताभावार्थकम्। द्वितीय-स्याभावोऽद्वितीयम्। अर्थाभावेऽव्ययीभावः। तथा च भेदप्रपञ्चबाधः

लक्षणम् ॥ ७ ॥ नैवं निषेधो न ह्यस्माद्द्वितीयस्यावगम्यते । ततोऽन्यत्तद्विरुद्धं वा सदृशं वाऽत्र वक्ति सः ॥ ८ ॥ द्वितीयं यस्य नैवास्ति तद्ब्रह्मेति विवक्षिते । सत्यादिलक्षणोक्तीनामपलक्षणता भवेत् ॥ ९ ॥ अद्वितीये द्वितीयार्थनास्तितामात्रगोचरे । स्वनिष्ठत्वान्नअर्थस्य न स्याद्ब्रह्मपदान्वयः ॥ १० ॥ द्वितीयशून्यता तत्र ब्रह्मणो न विशेषणम् । विशेषणे वा तद्ब्रह्म तृतीयं प्रथमं तु वा

---

सिध्यत्यद्वितीयश्रुत्येति ॥ ७ ॥ परिहरति 'नैव'मिति । हिर्हेतौ । यतोऽस्माद द्वितीयपदाद्ब्रह्मपदसमानाधिकरणात् द्वितीयतो भिन्नत्वादिरेव बोध्यते ब्रह्मणः । न तु प्रपञ्चनिषेधमात्रम् । अतो नात्राव्ययीभावो युक्त इति भावः । अविकल्पितोऽप्ययं प्रसङ्गात्प्रतिक्षिप्यतेऽत्र । सः—अद्वितीयशब्दः ॥ ८ ॥ अनुपपन्नश्च ब्रह्मभिन्नस्य सर्वस्य निषेधः । तथा सति ब्रह्मलक्षणवाक्यानामसङ्गतिप्रसङ्गादित्याह 'द्वितीय'मिति । यत्संबन्धिनोऽन्यस्य—यतो भिन्नस्य सर्वस्याभावः, तद्ब्रह्मेत्यर्थकथने लक्ष्यवृत्त्यसाधारणधर्मरूपस्य लक्षणस्याप्यसत्त्वात्सत्यज्ञानादिलक्षणवाक्यमपलक्षणं भवेदिति भावः ॥ ९ ॥ अव्ययीभावस्य सत्पदेनानन्वयमप्याह 'अद्वितीय'इति । अद्वितीये—अद्वितीयपदे । स्वनिष्ठत्वात्—स्वप्रधानत्वात् । इतरपदार्थाविशेषणत्वादिति यावत् । ब्रह्मवाचिसत्पदे विशेषणतयाऽन्वयो न स्यात् । तत्समानाधिकरणं तद्विशेषणं हीदम् । तन्नेष्टापत्तिः कर्तुं शक्या । वाक्यभेदप्रसङ्गश्च तथासतीति भावः ॥ १० ॥ ननु द्वितीयाभावो ब्रह्मस्वरूपमेव । तद्ब्रह्मपदसामानाधिकरण्यं घटत इति चेत्तत्राह 'द्वितीये'ति । द्वितीयाभावोऽभेदेन ब्रह्मणो न विशेषणं भवितुमर्हति । अभावस्य तुच्छत्वाद्ब्रह्मणः सत्यत्वात् सत्यतुच्छयोरैक्यायोगादिति पूर्वार्धस्यार्थः । ब्रह्मविशेषणत्वेऽपि वदामः—

॥ ११ ॥ प्रसक्तं पूर्ववत्सर्वं बहुव्रीहौ समस्यति । ब्रह्मणः प्रथमाद्ये च तृतीयाद्या जगत्त्रये ॥ १२ ॥ ब्रह्म प्रत्यद्वितीयत्वात्स्वस्थास्तिष्ठन्त्यबाधिताः । किञ्च तत्र बहुव्रीहौ समासे संश्रिते सति ॥ १३ ॥

---

द्वितीयं प्रतियोगि प्रथमम् । तदभावत्वं द्वितीयम् । तृतीयं च विशेष्यं ब्रह्म । यद्वा ब्रह्म प्रथमम् । द्वितीयं प्रतियोगि द्वितीयम् । तृतीयं तदभावत्वविशेषणमिति प्रथमत्वं तृतीयत्वं वा ब्रह्मणोऽवर्जनीयमित्युक्तार्थार्थः । एवमव्ययीभावपक्षेऽप्यनुपपत्तिरुक्ता ॥ ११ ॥ अथ बहुव्रीहिपक्षे दूषणमाह 'प्रसक्त'मिति । बहुव्रीहिवृत्तेऽप्यद्वितीयपदे तत्पुरुष इव प्रथमतृतीयादिसर्वसद्भावोऽनिवार्यः प्रसक्त एवेत्यर्थः । तदेवोपपादयत्यर्धाभ्यां 'ब्रह्मण' इति, 'ब्रह्मे'ति च । नास्ति द्वितीयं यस्य तद्ब्रह्मेत्यत्र पक्षे विग्रहः । ब्रह्मनिष्ठद्वित्वसङ्ख्यापूरकं नास्तीत्यर्थः । तथा च ब्रह्मण एव द्वितीयत्वं लभ्येत । ततश्च ब्रह्मापेक्षया प्रथमस्य तृतीयादेश्च न बाधोऽद्वितीयश्रुत्येत्यर्थः । आद्यसङ्ख्यापूरकत्वं प्रथमत्वम्, त्रित्वादिसङ्ख्यापूरकत्वं च तृतीयत्वादीति बोध्यम् । ब्रह्म प्रत्यद्वितीयत्वात्—ब्रह्मापेक्षया द्वितीयत्वाभावात् । तच्च ब्रह्मापेक्षया प्रथमत्वात्तृतीयादित्वाद्वा । स्वस्था इत्यादि पूर्ववद्व्याख्येयम् । ननु बहुव्रीहिघटकस्य द्वितीयपदस्य द्वित्वसङ्ख्यापूरकार्थत्वं, द्वित्वे च यच्छब्दार्थस्य ब्रह्मणो निष्ठत्वसंबन्धेनान्वयो नोपेयते; येन प्रथमतृतीयादिप्रसक्तिः । किन्तु द्वितीयपदं भिन्नपरम् । भेदे च ब्रह्मप्रतियोगिकत्वस्यान्वयः । यतो ब्रह्मणो भिन्नं नास्ति तद्ब्रह्माद्वितीयमिति द्वितीयबाधोऽद्वितीयश्रुत्या लभ्यत एवेत्यत्राह 'किञ्चे'ति । अन्यपदार्थप्रधानो हि बहुव्रीहिः । तथा च बहुव्रीहिवृत्तपदोपस्थाप्यद्वितीयाभावस्यान्यपदार्थब्रह्मविशेषणत्वं वक्तव्यम् । तन्न घटते । ब्रह्मभिन्नसर्वशून्यवादे द्वितीयाभावस्यापि

वृत्त्यर्थस्य नञर्थस्य न पदार्थान्तरान्वयः। सत्या(त्य)र्थान्तरसम्बन्धे षष्ठी यस्येति युज्यते ॥ १४ ॥ द्वितीयवस्तुनास्तित्वं न ब्रह्म न विशेषणम्। असत्त्वान्न ह्यसद्ब्रह्म भवेन्नापि विशेषणम् ॥ १५ ॥ तस्मात्प्रपञ्चसद्भावो नाद्वैतश्रुतिबाधितः। स्वप्रमाणबलात्सिद्धः श्रुत्या चाप्यनुमोदितः ॥ १६ ॥

(इत्यद्वितीयश्रुतेः पराभिमतार्थे दूषणनिरूपणम्)

तेनाद्वितीयं ब्रह्मेति श्रुतेरर्थोऽयमुच्यते। द्वितीयगणनायोग्यो

---

शून्यतया ब्रह्मपदार्थविशेषणत्वायोगादित्यर्थः। वृत्त्यर्थस्य बहुव्रीह्यर्थस्य, नञर्थस्य द्वितीयाभावस्य। कुतो न पदार्थान्तरान्वयासम्भवः? तत्राह 'सत्ये'ति। यस्येति षष्ठी प्रकृत्यर्थान्वितेऽर्थान्तरसंबन्धे प्रामाणिके सति सङ्गच्छते। निर्विशेषे च ब्रह्मणि प्रकृत्यर्थे पदार्थान्तरसंबन्धस्यासत्यत्वात् षष्ठीबहुव्रीहिश्च प्रकृते न घटत इत्यर्थः॥ १२ ॥ १३ ॥ १४ ॥ राहोः शिर इत्यादावभेदेऽपि षष्ठ्या दृष्टेर्यद्भिन्नो द्वितीयाभावस्तदद्वितीयं ब्रह्मेति विवक्षां प्रतिक्षेपति, 'द्वितीये'ति। असतः सत्पदार्थाभेदस्तद्विशेषणत्वमपि न युज्यते इति भावः ॥ १५ ॥ पराभिमताद्वितीयश्रुत्यर्थानुपपत्तिनिरूपणं निगमयति 'तस्मा'दिति। निर्दोषप्रत्यक्षादिप्रमाणसिद्धः श्रुत्याऽपि परमार्थत्वेनानुवर्णितो भेदप्रपञ्चसद्भावो नाद्वितीयश्रुतिबाध्यः, उपपादितप्रकारेणाद्वितीयश्रुतेः ब्रह्मभिन्ननास्तिताप्रतिपादनासामर्थ्यादित्यर्थः ॥ १६ ॥

कस्तर्ह्यद्वितीयश्रुत्यर्थः? तत्राह 'तेने'ति। पराभिमतार्थस्यानुपपत्त्याऽन्यादृशोऽर्थः सुसङ्गत उपन्यस्यतेऽस्माभिरित्यर्थः। उच्यत इति प्रतिज्ञानमुच्यमानार्थस्यापूर्ववदाश्चर्यावहत्वद्योतनार्थमवधेयत्वार्थं च। तमेवार्थमाह 'द्वितीये'ति। प्रथमतो ब्रह्मणो गणने कृते तेन सह गणनार्हो

नासीदस्ति भविष्यति ॥ १७ ॥ समो वाऽभ्यधिको वाऽस्य यो द्वितीयस्तु गण्यते । यतोऽस्य विभवव्यूहकलामात्रमिदं जगत् ॥१८॥

द्वितीयः समो वाऽधिको वा पदार्थः कालत्रयेऽपि नास्तीत्यर्थः । ननु विविधविचित्रानन्तचिदचित्प्रपञ्चे कथं कस्यचिदपि ब्रह्मसमस्याभावः ? तत्राह 'यत' इति । अस्य परमात्मनोऽनन्तमहाविभूतेर्विभूत्येकदेशांशमात्रत्वाच्चतुर्दशभुवनात्मकब्रह्माण्डकोटेरपि तदन्तर्गतस्योदुम्बरमशकवत्परिच्छिन्नस्वरूपस्वभावादेर्भवब्रह्मादेरपि न तेन साम्यगन्धप्रसङ्ग इति द्वितीयवागास्पदतां-द्वितीयपदवाच्यतां, ब्रह्मणा सह गणनायोग्यत्वम्, कथं तत्-जगत् प्रतिपद्येत-प्राप्नुयादित्यर्थः । सिद्धान्तेऽद्वितीयपदस्य वृत्तिद्वयमपि संभवतीत्यभिप्रेतम् । तथा चानुगृहीतं शतदूषण्यां श्रीमद्वेदान्तदेशिकचरणैः "अस्मत्पक्षे तु वृत्तिद्वयमपि सम्यक् । द्वितीयव्यतिरेकोक्त्या सतः स्यादग्रगण्यता । द्वितीयशून्यतोक्त्या च तत्समाननिषेधनम् ॥" इति । एतद्व्याकुर्महे-अतिशयितवस्तुगणनाप्रस्तावे ब्रह्मण एव प्रथमपरिगणनं न्याय्यम् । तस्यैव मुख्यातिशयवत्त्वात् । मुख्यस्यैव प्रथमपरिगणनस्य लोके शास्त्रे च दृष्टेः । कविकुलगणनाप्रसङ्गे कालिदासस्यैव हि प्राथम्येन गणनं कविलोकप्रसिद्धम् । यथोच्यते 'पुरा कवीनां गणनाप्रसङ्गे कनिष्ठिकाऽधिष्ठितकालिदासा' इति । शास्त्रकृतो जैमिनेराचार्यस्यापि संमतं मुख्यस्य प्रथमपरिगणनम् । तथा हि सूत्रयामास 'मुख्यं वा पूर्वचोदनाल्लोकव' दिति । एवं नञ्तत्पुरुषे ब्रह्मण एवाग्रगण्यता स्थिता । ततः सर्वाधिकत्वसिद्धिः । ततश्चाधिकनिषेधः फलति । समस्यैव द्वितीयगणनायोग्यत्वमित्याशयमूलकं च 'पुरा कवीना'-मितिश्लोकस्योत्तरार्धं परिपठ्यते 'अद्यापि तत्तुल्यकवेरभावादनामिका साऽर्थवती बभूव' इति । तथा च बहुव्रीहिवृत्त्या समनिषेधः फलति

द्वितीयवागास्पदतां प्रतिपद्येत तत्कथम् । यथा चोलनृपः सम्राड-द्वितीयोऽद्य भूतले ॥ १९ ॥ इति तत्तुल्यनृपतिनिवारणपरं वचः । न तु तद्भृत्यतत्पुत्रकलत्रादिनिषेधकम् ॥ २० ॥ तथा सुरासुरनर-ब्रह्मब्रह्माण्डकोटयः । क्लेशकर्मविपाकाद्यैरस्पृष्टस्याखिलेशितुः ॥२१॥ ज्ञानादिषाड्गुण्यनिधेरचिन्त्यविभवस्य ताः । विष्णोर्विभूतिमहिम-समुद्रद्रप्सविप्रुषः ॥ २२ ॥ कः खल्वङ्गुलिभङ्गेन समुद्रान् सप्त-

---

ब्रह्मण इति । मुक्तानामपि भोगमात्रसाम्यमिति न ब्रह्मणा सह गणनं मुख्यपरिगणनप्रस्तावे युक्तम् । तन्मुख्यं वस्तु वस्तुतो ब्रह्मैकमेवेति अद्वितीयत्वं तस्य प्रतितिष्ठतीति च बोध्यम् । एवमद्वितीयश्रुतेः ब्रह्मणः समाभ्यधिकराहित्यप्रतिपादनपरत्वं व्यवस्थापितम् । 'न तत्समश्चाभ्य-धिकश्च दृश्यते' इति श्रुत्यन्तरानुसारात् 'न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभाव' इत्युपबृंहणानुसाराच्चैदमर्थ्यमेव तस्या न्याय्यमिति हार्दम् । अथाद्वितीयपदस्य समान्तरनिषेधपरत्वे लौकिकप्रयोगं च निदर्शयति 'यथे'ति । चोलनृपस्यास्थानपण्डितं विजित्य वादाहवे राजासनं राज्यार्धं च तत्समर्पितमधिगतवन्त इमे परमाचार्याः पूर्वाश्रमे । तत्प्रसङ्गस्मारकश्चायं चोलनृपप्रस्तावोऽत्र । यथा राज्ञो-ऽद्वितीयत्ववर्णनं राजविभूत्यादेर्निषेधकं न, किन्तु तत्समनृपान्तर-निषेधकमेव, एवं ब्रह्मणोऽद्वितीयत्वश्रुतिर्न तद्विभूतेर्निषेधिकेत्याह 'तथे'ति । अत्र या इत्यापतितम् । याः सुरासुरनरब्रह्मगर्भब्रह्माण्डकोटयः, ता वैष्णवमहाविभूत्यर्णवविशीर्यमाणजलकणिकायमानाः तदद्वितीयत्व-श्रुत्या न बाध्यन्त इति यावत् । औपनिषदं परं तत्त्वं परं ब्रह्म श्रीमन्ना-रायण एवेति च विष्णोरिति निर्देशेन ज्ञापितम् ॥ १७ ॥ १८ ॥ १९ ॥ ॥ २० ॥ २१ ॥ २२ ॥ नन्वतुल्यत्वेऽपि सहगणनेष्यतामित्यत्राह

सङ्ख्यया। गणयन् गणयेदूर्मिफेनबुद्बुदविप्रुषः ॥ २३ ॥ यथैक एव सविता न द्वितीयो नभःस्थले । इत्युक्त्या न हि सावित्रा निषिध्यन्तेऽत्र रश्मयः ॥ २४ ॥ यथा प्रधानसङ्ख्येयसङ्ख्यायां नैव गण्यते । सङ्ख्या पृथक्सती तत्र सङ्ख्येयान्यपदार्थवत् ॥ २५ ॥ तथा, पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि । इति ब्रुवन् जगत्सर्वमित्थम्भावे न्यवेशयत् ॥ २६ ॥ तथा, एतावानस्य महिमा

---

'क'इति । तत्स्वरूपान्तर्गतस्य तेन सह गणनायोग इत्यत्रेदं निदर्शनम्, सवितृनिदर्शनं च । गुणस्य गुणिना सह गणनायोग इत्यत्र 'यथा प्रधाने'ति । पृथक्सती—सङ्ख्येयाद्भिन्नत्वेन स्थिता । यद्वा अपृथक्सतीति च्छेदः । अपृथक्सिद्धविशेषणभूतेत्यर्थः । सङ्ख्येयान्यपदार्थवदिति तु वैधर्म्यदृष्टान्तः । सङ्ख्येयद्रव्यगणनायां सङ्ख्येयोऽन्यः पदार्थो यथा गण्यते न तथा तद्गुणभूता सङ्ख्या तेन सह गण्यत इत्यर्थः । यद्वा सङ्ख्येयत्वेनाप्रस्तुतवस्त्वन्तरवदित्यर्थः । साधर्म्यदृष्टान्तत्वमिदानीं घटते ॥२३॥ ॥ २४ ॥ २५ ॥ ननु सर्वं तदा शोभनम्; यदि ब्रह्मविभूतित्वादौ प्रमाणं स्यादित्यत्राह 'तथे'ति । 'पादोऽस्ये'ति । यथा ब्रह्मगुणत्वं सिध्येज्जगतः तथैव ब्रह्मांशत्वं प्रतिपादयच्छ्रुतिजातं सर्वं जगत ब्रह्मापृथक्सिद्धप्रकारत्वे व्यवास्थापयदित्यर्थः । गुणत्वं चात्यन्तपारतन्त्र्यरूपमित्थम्भावशब्दितमपृथक्सिद्धप्रकारत्वलक्षणमेव । इत्थम्भाव इत्यनेन न स्वरूपैकदेशत्वलक्षणमंशत्वम्। किन्तु विशिष्टब्रह्मस्वरूपान्तर्गतप्रकारतैकरूपत्वलक्षणमेव जगतो ब्रह्मांशत्वमिति व्यज्यते ॥ २६ ॥ ब्रह्मस्वरूपैकदेशत्वमेव जगतः कुतो नेत्यत्राह 'तथे'ति। एतावा'निति। महिमा इत्यनेन जगतो विभूतित्वं ब्रह्मणोऽतिशयावहत्वाद्गुणत्वं च

ततो ज्यायस्तरो हि सः। यत्रान्यन्न विजानाति स भूमोदरमन्तरम्। कुरुतेऽस्य भयं व्यक्तमित्यादिश्रुतयः पराः ॥ २७ ॥ मेरोरिवाणुर्यस्येदं ब्रह्माण्डमखिलं जगत्। इत्यादिकाः समस्तस्य तदित्थम्भावतापराः ॥ २८ ॥ वाचारम्भणमात्रं तु जगत् स्थावरजङ्गमम्।

---

ज्ञायते। 'ततो ज्यायांश्च पूरुष' इति ब्रह्मणो जगदपेक्षयाऽतिवैलक्षण्यं च। अतो न ब्रह्मस्वरूपैकदेशता मृदंशतेव तत्परिणामघटादेर्जगतो युक्ता। अतोऽपृथक्सिद्धविशेषणतया विशिष्टैकवस्त्वेकदेशत्वरूपमेव ब्रह्मांशत्वं जगतोऽभिमतमिति भावः। सर्वस्य ब्रह्मस्वरूपान्तर्गतत्वे श्रुतिमुदाहरति 'यत्रे'ति। यत्र विशिष्टे ब्रह्मणि समनुभूयमानेऽन्यत्स्वतन्त्रं वस्तु न पश्यति, सर्वस्य तदन्तर्भावात्, स भूमेत्यर्थः। सर्वप्रकारकः सर्वात्मा परं ब्रह्म परमपुरुषो नारायण एव भूमा, अन्यः सर्वोऽप्यल्पक इति प्रोक्तं भवति। स्वनिष्ठप्रपञ्चदर्शननिन्दया च ब्रह्मनिष्ठत्वमेव तस्य गम्यत इत्याशयेन श्रुत्यन्तरमुपादत्ते 'उदर'मिति। 'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते, अथ तस्य भयं भवती'ति तैत्तिरीयोपनिषदि। एतस्मिन् प्रपञ्चे दरमल्पमपि अन्तरमन्तरालं ब्रह्मसंबन्धविच्छेदं यदा पश्यति तदैवास्यैवं जानतः संसारभयमुपस्थितमग्रे भवतीत्यर्थः। परप्रक्रियाच्छाययैवमत्रार्थो विवक्षितो भेदमिथ्यात्वं न सिध्यत्येतद्वाक्यत इति बोधनाय। परमात्मनि निष्ठाशब्दितस्य ध्रुवानुस्मरणस्य पूर्ववाक्यप्रस्तुतस्याल्पकालविच्छेदेऽपि संसारभयप्रसङ्ग एवेति तु सिद्धान्तिसम्मतोऽर्थः। विष्णुमहाविभूत्येकदेशत्वे जगतः स्मृतिवाक्यं 'मेरो'रित्यादि। इत्यादय इत्यस्याग्रे स्मृतयश्चेति योज्यम्। तदित्थम्भावतापराः— ब्रह्मापृथक्सिद्धप्रकारत्वप्रतिपादनतत्पराः ॥ २७ ॥ २८ ॥ ननु निरुक्तेषु वचनेषु ब्रह्मविभूतित्वादौ जगतः प्रतिपादितेऽपि वचनान्तरेषु कारण-

विकारजातं, कूटस्थं मूलकारणमेव सत् ॥ २९ ॥ अनन्यत्कारणा-

मात्रस्य सत्यत्वम् अन्यस्य सर्वस्यासत्यत्वं च प्रतीयते इति तदनुरोधेनेषां व्यावहारिकविषयत्वमेव मन्तव्यमिति चेत्तत्राह 'वाचे'ति। वचनान्तरेऽप्यपि मिथ्यात्वं नोच्यते भेदप्रपञ्चस्य, किन्तु ब्रह्मात्मकत्वेन सत्त्वैवेति भावः। श्रौतकतिपयपदघटितं श्रौतार्थानुवादरूपं 'वाचारम्भणमात्र'-मित्यादि। तत्तत्पदस्मारितानि श्रुतिवाक्यानि विवक्षितानि। 'वाचाऽऽर-म्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य'मिति च्छान्दोग्ये षष्ठप्र-पाठके। 'वाचा'इति तृतीया प्रयोजनस्य हेतुत्वविवक्षया। आरम्भणम्—आलम्भनम्—स्पृष्टम्। आलम्भः स्पर्शहिंसयोः। गृहीतमिति यावत्। आरभ्यते इत्यारम्भणं—सृष्टमिति वा। नपुंसकैकशेषैकवद्भावौ। किन्तत्? विकारो नामधेयं च। केन स्पृष्टमित्याकाङ्क्षायां 'वेत्थ यथा सोम्यैकेन मृत्पिण्डेने'ति पूर्वप्रकृतो मृत्पिण्डो योग्यत्वात्कर्तृतयाऽन्वेति। घटत्वाद्य-वस्थारूपो विकारः तत्तदवस्थायोगप्रयुक्तं घटादिनाम च मृत्पिण्डेनैव गृहीतं वाक्पूर्वकव्यवहारायेति फलितम्। एवं कारणद्रव्यस्यैव नाना-वस्थाभाक्त्वेन नानाकार्यात्मकत्वात्कार्याणां कारणानन्यत्वमित्याह मृत्ति-केत्येव सत्य'मिति। अत्र सर्वं मृण्मयं विशेष्यम्। इतिशब्दः प्रकारवाची। सर्वं मृण्मयं मृत्तिकात्वप्रकारेणैव प्रामाणिकम्। न तु मृदनात्मकत्वेनेत्यर्थः। अनेन काणादाभिमत उपादानोपादेययो-रत्यन्तभेदो निरस्तः। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादनार्थं प्रवृत्तत्वादस्य वाक्यस्योपादानोपादेययोरनन्यत्व एव तात्पर्यमुक्तदिशा। न तु कार्यमात्रस्य मिथ्यात्वे। तथा सति सर्वस्य ज्ञातव्यस्याभावादेव सर्वं ज्ञातं स्यादित्यसङ्गतमापद्येत। समस्तपदत्वे पराभिमते वागारम्भण-मिति भवेत्। वाचारम्भणशब्दस्य मिथ्यार्थकत्वं चाप्रसिद्धमेव पराभि-

त्कार्यं पावकाद्विस्फुलिङ्गवत् । मृत्तिकालोहबीजादिनानादृष्टान्तविस्तरैः ॥ ३० ॥ नाशकद्दग्धुमनलस्तृणं मज्जयितुं जलम् । न वायुश्चलितुं शक्तः तच्छक्त्याप्यायनादृते ॥ ३१ ॥ एकप्रधान-

मतमिति बोध्यम् । 'तत्सत्य'मित्यस्यार्थतोऽनुवादः 'कूटस्थ'मित्यादिः । उपादानत्वेऽपि ब्रह्मणो निर्विकारत्वं कूटस्थशब्देन विवक्षितम् । सत्-सत्यम्—सततैकरूपम् । ननु निर्विकारत्वे कथमुपादानत्वम् ? सर्वचिदचिच्छरीरकत्वात् सूक्ष्मचिदचिद्विशिष्टत्वेनोपादानत्वं ब्रह्मण उपपन्नमेव । सोऽयं शरीरात्मभावो जगद्ब्रह्मणोः 'सदायतनाः' 'ऐतदात्म्यमिदं सर्व'मिति निर्दिष्टः । नचैवं स्वरूपपरिणामाभावे मृण्मयदृष्टान्तासङ्गतिः, कार्यकारणयोरनन्यत्वमात्रे दृष्टान्तसङ्गतेः । ननु चेतनाचेतनप्रपञ्चस्य ब्रह्मानन्यत्वं वा कथम् ? ब्रह्मात्मकत्वेन ब्रह्मरूपत्वेनानन्यत्वोपपत्तेः । तदिदमेव प्रामाणिकमिति चोच्यते 'ऐतदात्म्यमिदं सर्वं तत्सत्य'मित्येकवाक्यतयाऽन्वयात् । दृष्टान्तवाक्यानुगुणश्चायमेवार्थ इति ध्येयम् । परव्याख्याच्छायया तु तद्ब्रह्म सत्यं सदैकरूपमित्यर्थो वर्णितः । श्लोके 'वाचारम्भणमात्र'मित्यस्य वाक्पूर्वव्यवहारायैव निष्पन्नं कार्त्स्न्येनेत्यर्थः ॥२९॥ समानप्रकरणेषूपादानोपादेययोरैक्यस्यैव प्रतिपादनाच्च न कार्यस्य मिथ्यात्वं वाचारम्भणश्रुतेरर्थः । किन्तु कारणात्मकतैवेति प्रतिबोधयन्नाह 'अनन्य'दिति । पावकाद्युच्चरितानां विस्फुलिङ्गानामग्न्यंशत्वेनाग्न्यनन्यत्ववद्ब्रह्मण उद्भूतस्य प्रपञ्चस्यापि ब्रह्मांशभूतस्य ब्रह्मानन्यत्वमेव विवक्षितम् । इदं चानन्यत्वं मृदादिदृष्टान्तैश्च श्रुतिषु निरूपितमिति यावत् ॥३०॥ कार्याणां कारणात्मकत्वे उपपत्तिरुक्ता । अर्थवादरूपमपि तात्पर्यलिङ्गमस्तीत्याह 'नाशक'दिति । केनोपनिषदि प्रसिद्धोऽयमर्थः ॥३१॥ ननु 'उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवती'ति प्रति-

विज्ञानाद्विज्ञातमखिलं भवेत् । इत्यादिवेदवचनतन्मूलाप्तागमैरपि ॥ ३२ ॥ ब्रह्मात्मनाऽऽत्मलाभोऽयं प्रपञ्चश्चिदचिन्मयः । इति प्रमीयते ब्राह्मी विभूतिर्न निषिध्यते ॥ ३३ ॥ तन्निषेधे समस्तस्य मिथ्यात्वाल्लोकवेदयोः । व्यवहारास्तु लुप्येरन् तथा स्याद्ब्रह्मधीरपि

---

ज्ञातमेकविज्ञानेन सर्वविज्ञानं ब्रह्मण एकस्यैव पारमार्थ्ये घटते । नतु तद्भिन्नानां बहूनां पारमार्थ्ये । तत्प्रपञ्चस्यापारमार्थ्यमकामेनापि स्वीकर्तव्यमिति चेत्तत्राह 'एके'ति । ब्रह्मणो निखिलजगदन्तरात्मत्वेन निखिलजगत्प्रधानतया निखिलस्य च तच्छरीरत्वेन तत्प्रकारतैकस्वरूपतया तस्मिन् ज्ञाते तदनन्तर्गतं किमपि ज्ञातव्यं मुख्यं नावशिष्यत इति एकविज्ञानेन सर्वविज्ञानप्रतिज्ञावाक्यस्यार्थ इति भावः । 'इत्यादी'ति । निरुक्तार्थपरैः श्रुतिवचनैस्तन्मूलोपबृंहणस्मृतिवचनैश्च ब्रह्मात्मकत्वेन लब्धस्वरूपः प्रपञ्च इत्येव बोध्यते । न तु ब्रह्मणो विभूतिभूतः स निषिध्यत इत्यर्थः । 'ब्रह्मात्मनाऽऽत्मलाभ' इति । आत्मनो लाभो यस्येति बहुव्रीहिः । ब्रह्माभिन्नान्तरात्मना प्रयोज्यस्वरूपलाभवानित्यर्थः । 'ब्रह्मतात्मलाभोऽय'मिति समस्तपाठः संभाव्य । तत्र च आत्मनो लाभः आत्मलाभः—स्वरूपसत्ता, ब्रह्मत्मतया-ब्रह्मात्मकत्वेन आत्मलाभो यस्येति बहुव्रीहिः । ब्रह्मात्मकत्वाधीनस्वरूपसत्तावानित्यर्थः । प्रमीयते—तत्त्वतो ज्ञायते । ब्रह्मविभूतिभूतस्य प्रपञ्चस्य न निषेधः कृतः शास्त्रेष्विति निरूपितमेतावता ॥ ३२ ॥ ३३ ॥ अथ प्रपञ्चनिषेधस्यानुपपन्नत्वादपि निषेधपरतयेवापाततः प्रतिपन्नानां श्रुतिवाक्यानामप्यान्यपर्यमेवैष्टव्यमित्याशयवानाह 'तन्निषेध' इति । प्रपञ्चनिषेधे विवक्षिते शास्त्रवचनतः, तत्तदर्थविशेषप्रतिपादनोपादानाद्यर्थाः सर्वे व्यवहारा लौकिका वैदिकाश्च लुप्येरन्—अप्रामाणिका विसंवादिनश्च भवेयुः, सर्वस्य मिथ्यात्वा-

॥ ३४ ॥ व्यावहारिकसत्यत्वान्मृषात्वेऽप्यविरुद्धता । प्रत्यक्षादेरिति मतं प्रागेव समदूदुषम् ॥ ३५ ॥ अतश्चोपनिषज्जातब्रह्माद्वैतधिया जगत् । न बाध्यते विभूतित्वाद्ब्रह्मणश्चेत्यवस्थितम् ॥३६॥

( इति प्रपञ्चस्य ब्रह्मविभूतित्वस्थापनपूर्वकमद्वितीयश्रुत्यर्थवर्णनम् )

ननु सत्त्वे प्रपञ्चस्य नास्तीति प्रत्ययः कथम् । असत्त्वे वा कथं

---

दित्यर्थः । ननु भेदव्यवहाराणामप्रामाणिकत्वमिष्टमेवेति चेत्तत्राह 'तथे'ति । ब्रह्मभिन्नसर्वमिथ्यात्वे ब्रह्मविषयकधिय औपनिषद्या अपि विलोपोऽसत्यता प्रसज्यत इत्यर्थः । असत्यकारणजन्यत्वादसत्यत्वमसत्यविषयत्वं च भवेत्तस्या इति भावः ॥ ३४ ॥ ननु परमार्थदृष्ट्या ब्रह्मभिन्नस्य सर्वस्य मिथ्यात्वेऽपि ततः प्राक् अविद्यातः प्रमाणप्रमेयव्यवहारादि निरूह्यत इति चेत्तत्राह 'व्यावहारिके'ति । एतद्दूषणभागो विलुप्तः । व्यावहारिकसत्तया प्रमाणप्रमेयव्यवहारोपपादने व्यावहारिकप्रमाणभावेन श्रुत्यादिना जनिता परब्रह्मबुद्धिरपि भवदभिमता व्यावहारिकार्थमात्रगोचरा भवेत्; निर्विशेषब्रह्ममात्रपारमार्थ्यस्यापि व्यवहारैकशरणत्वात् । तथा च ब्रह्ममात्रपारमार्थ्यमपि परमार्थसाधकाभावान्न सिध्येत् । एतद्विषये पूर्वाचार्यैः सूरिभिरेव पराक्रान्तं नितरामिति विरम्यतेऽत्रेति बोध्यम् ॥ ३५ ॥ अद्वितीयश्रुतेः प्रपञ्चाबाधकत्वनिरूपणं निगमयति 'अतश्चे'ति । ब्रह्मणो विभूतित्वाच्च जगद्ब्रह्माद्वैतधिया न बाध्यते । सविभूतिकस्यैव तस्याद्वितीयत्वधिय उपनिषत्सिद्धत्वात् । चकारोऽबाधितप्रतीतिसिद्धत्वादिहेत्वन्तरसमुच्चायकः । यद्वा चस्त्वर्थे । समोऽधिको वा बाध्यते । न तु जगद्विभूतिभूतमित्यर्थः ॥ ३६ ॥

प्रपञ्चस्याद्वितीयश्रुत्या बाध इति परपक्षो निरस्तः । अथ तस्य सदसदनिर्वचनीयत्वमपि पराभिमतं निरसितुं विचारमुपक्रमते 'ननु

तस्मिन्नस्तीति प्रत्ययो भवेत् ॥ ३७ ॥ सदसत्त्वं तथैकस्य विरुद्धत्वादसम्भवि । सदसत्प्रत्ययप्राप्तविरुद्धद्वन्द्वसङ्गमे ॥ ३८ ॥ तयोरन्यतरार्थस्य निश्चयाभावहेतुतः । सदसत्त्वं प्रपञ्चस्य जैनास्तु प्रतिपेदिरे ॥ ३९ ॥ सत्त्वप्राप्तिं पुरस्कृत्य नास्तीति प्रत्ययोदयात् । सदा सत्त्वं प्रपञ्चस्य साङ्ख्यास्तु प्रतिपेदिरे ॥ ४० ॥ सदसत्प्रत्यय-

---

सत्त्वे' इति। सत्त्वे प्रपञ्चस्य नास्तीति बाधविषयत्वं कथं घटतेत्याक्षेपो माध्यमिकादीनाम्। अत्र प्रतिपक्षः साङ्ख्यादीनाम् 'असत्त्वेवे'ति। असत्त्वे सद्बुद्धिवोध्यत्वं प्रतिपन्नं तस्य कथं घटेतेति ॥ ३७ ॥ ननु अस्तिनास्तिबुद्धिवलात्सदसत्त्वं वाच्यमिति जैनाः । तत्राह 'सदसत्त्व'मिति । विरुद्धद्वयमसम्भवदेकस्मिन्नोपगमार्हमिति यावत् । विचारप्रसक्तिमाह 'सदस'दिति । विरुद्धाकारद्वयप्रसङ्गे परस्परविरोधादुभयस्यान्यतरस्याकारस्य वाऽनिर्णयाद्धेतोर्विचारः प्राप्तावसर इति यावत्। अत्र 'विचारः प्रक्रम्यत' इति शेषपूरणेन वाक्यार्थो वक्तव्यः। तत्रादावनैकान्त्यवादिनां जैनानां मतमाह 'सदसत्त्व'मिति । प्रतीयमानत्वादेवैकस्मिन् सदसत्त्वयोर्न विरोध इत्यभिमानः। यद्वा जैनमतानुवादः 'सदसत्प्रत्ययप्राप्ते'त्यारभ्य 'जैनास्तु प्रतिजानत'इत्यन्तेन। सदसत्त्वयोः प्रतीतयोर्मध्ये एकस्यैव निर्णये हेत्वभावाद्यथाप्रतीति प्रपञ्चस्योभयमेवैष्टव्यमिति जना आश्रिता इत्यर्थः । निश्चयाभावहेतुत इत्यनेन निश्चयहेत्वभावो विवक्षितः। पाठान्तरं वा संभाव्यते॥ ३८॥ ३९॥ एतद्विरोधिसत्त्वैकान्तवादिकापिलमतमाह 'सत्त्वप्राप्ति'मिति। प्रसक्तिपूर्वकत्वान्निषेधस्योपजीव्यत्वात्सत्त्वप्रतीतिः प्रवला। तत्सदा सत्त्वमेव प्रपञ्चस्य। नास्तीति त्वभिव्यक्त्यभावपरा प्रतीतिरित्येतेषामाशयः ॥ ४० ॥ मतद्वयप्रत्यनीकं मायावादिनां मतमाह 'सदस'दिति । प्रतीतिवलात्सत्त्वासत्त्वरूप-

प्राप्तविरुद्धद्वन्द्वसङ्कटे । विरोधपरिहारार्थं सत्त्वासत्त्वांशभङ्गतः । सदसद्भ्यामनिर्वाच्यं प्रपञ्चं केचिदूचिरे ॥ ४१ ॥ सत्त्वासत्त्वे विभागेन देशकालादिभेदतः । घटादेरिति मन्वाना व्यवस्थामपरे जगुः ॥४२॥ तदेवं वादिसम्मर्दात् संशये समुपस्थिते । निर्णयः क्रियते तत्र मीमांसकमतेन तु ॥ ४३ ॥ घटस्वरूपे नास्तित्वमस्तित्वं

---

विरुद्धधर्मद्वयापत्तिरूपसङ्कटे प्रसक्ते विरुद्धयोरैकाधिकरण्यानुपपत्तिबलात्सत्त्वमसत्त्वं च विरुद्धं धर्मद्वयं परित्यज्य न सत्, नाप्यसदिति सदसदनिर्वचनीयं प्रपञ्चं निर्वचन्ति शाङ्करा इत्यर्थः ॥ ४१ ॥ नैयायिकादीनां पक्षमाह 'सदसत्त्वे' इति। विभागेनेति तृतीयेत्थम्भावे। विभक्तदेशकालादिविशेषतः सत्त्वमसत्त्वं च प्रतीतं व्यवस्थितं घटादेर्घटत एवेति भावोऽमीषाम् ॥ ४२ ॥ 'तदेव'मिति। वादिसंमर्दात्-वादिविवादात्। विप्रतिपत्तेरिति यावत्। विप्रतिपत्तेः सन्देहोदयात् सन्दिग्धार्थनिर्णयाय विचार उपचिक्रमिषितः। तत्र पक्षान्तराणां सदोषत्वप्रतिपादनपूर्वकं सोपाधिकसत्त्वासत्त्वपक्षो मीमांसकाभिमतो निर्णीयते सद्युक्त्येति भावः। क्रियत इति वर्तमानव्यपदेशस्तत्सामीप्यात्। प्रतिज्ञा चेयं श्रोतृबुद्धिसमाध्यर्था ॥ ४३ ॥ तत्र निरुपाधिकसत्त्वासत्त्वसमुच्चयपक्षनिरसनेन सिद्धान्तः समनुवर्ण्यते 'घटस्वरूप'इत्यादिना श्लोकत्रयेण। अयमर्थः—घटस्वरूपे नास्तित्वं प्रतीयमानमेव, नास्तीतिप्रतीतिरेवेति यावत्, यद्यस्तित्वमपि तस्य प्रत्यपादयिष्यत्, यद्वा प्रतीतिः सत्त्वमसत्त्वं च निरुपाधि यदि प्रत्यपादयिष्यत्, तर्हि सदसत्त्वसमुच्चयोऽभ्युपागंस्यत। नचैवम्। किन्तु किञ्चिद्देशकालावस्थादिविशेषेण सत्त्वम्, अन्यदेशाद्यौपाधिकमसत्त्वमेव च प्रतिपादयन्ति प्रतीतयः। अतो देशादिभेदतः सदसत्त्वे व्यवस्थिते घटादौ। तत् वादस्यान्यवादस्य बाधादिदोष-

यद्यबूबुधत् । स्यादेव युगपत्सत्त्वमसत्त्वं च घटादिषु ॥ ४४ ॥ इदानीमिदमत्रास्ति नास्तीत्येवंविधा यतः । देशकालदशाभेदादस्ति-नास्तीति नो धियः ॥ ४५ ॥ अतो देशादिभेदेन सदसत्त्वं घटा-

---

दूषितत्वान्न सम्भव इत्यर्थः । 'निरस्तस्याद्वादस्ये'ति पाठः सम्भाव्यते । तदाऽयमर्थः—निरस्तस्य व्याघातबाधितस्य स्याद्वादस्य स्यादस्ति, स्यान्नास्तीति जैनानामनैकान्त्यवादस्य न सम्भव इति । अत्र च नैयायिकादिमतं, ततः सिद्धान्ते विशेषश्च शतदूषण्यां व्यक्रियत षष्टितमे वादे श्रीमन्निगमान्ताचार्यचरणैः । यथा—"उपाधिभेदादुभयव्यवस्थेति पक्षमदूरविप्रकर्षात्परिगृह्णीमहे । उपाधिभेदस्तु स्वात्मना सत्त्वम्, अन्यात्मनाऽसत्त्वम् । स्वकाले सत्त्वम्, अन्यकाले पुनरसत्त्वम् । तथा स्वदेशे सत्त्वम्, अन्यदेशे पुनरसत्त्वमिति । इह तादात्म्यं संसर्गो वा सत्त्वमिति व्यपदिश्यते । तद्विरुद्धवेषेण वस्तुन्येवासद्व्यपदेशः । षष्ठे तु पक्षे विरुद्धधर्मयोग एव वस्तुन्यसद्व्यवहारहेतुतया व्यपदिश्यते । घटो हि घटात्मना सन् पटात्मना पुनरसन्निति निर्दिश्यते । सन्नेव स्वदेश-कालयोः स्वविरोधिदेशकालयोरसन्निति । उपलम्भानुकूलत्वाल्लाघवाच्च-इमेवाद्रियन्ते वृद्धाः" इति । अत्रायं विवेकः—सत्ता तादात्म्यतदितर-संबन्धान्यतरलक्षणा । अयं घटोऽस्तीत्यत्र घटतादात्म्यलक्षणा सत्ता प्रतीयते । अत्रेदानीं घटोऽस्तीत्यत्र चैतद्देशकालसंयोगलक्षणा । तथा अयं पटो नास्तीत्यत्र पटतादात्म्याभावलक्षणा पटात्मनाऽसत्ता प्रतीयते । तत्र तदा घटो नास्तीत्यत्र च तद्देशकालसंयोगाभावलक्षणाऽसत्ता प्रतीयते । एवं भावाभावरूपयोः सदसत्त्वयोर्देशादिभेदेनोपपत्तिर्घटादा-विति एकः पक्षः । अभावोऽपि भावान्तररूप एवेति पक्षान्तरम् । यथा घटत्वमेव हि अयं घटोऽस्तीत्यत्र प्रतीतं घटस्य सत्त्वम् । तदेवायं पटो

दिषु। व्यवस्थितं निरस्तत्वा(स्या)द्वादस्येह न सम्भवः ॥ ४६ ॥ ननु देशादिसम्बन्धः सत एवोपपद्यते। न देशकालसम्बन्धादसतः सत्त्वमिष्यते ॥ ४७ ॥ सम्बधो ह्याश्रयस्तस्मात्सतः सत्त्वं सदा भवेत्। असतः कारकैः सत्त्वं जन्मनेत्यतिदुर्घटम् ॥ ४८ ॥ आद्यन्तवान्

---

नास्तीत्यत्रापि प्रतीयते पटाद्भेदरूपम्। एवं स्वदेशकालसंबन्धलक्षणा सत्तैवान्यदेशकालनास्तिताप्रतीतावपि विषयो भवति देशान्तरादिसंबन्धाभावत्वेनेति। तथा च धर्मविशेष एव भावानामस्तिनास्तिप्रतीतिगोचर इति सिद्धम्। इदमेव सिद्धान्तिनामपि संमतमिति ॥ ४४ ॥ ॥ ४५ ॥ ४६ ॥ अविरोधेन सदसत्त्वसमर्थनमसहमानः सत्त्वैकान्त्यवादी कापिलोऽत्र प्रत्यवतिष्ठते 'ननु देशादी'ति। पूर्वमसतो घटादेः स्वदेशकालसंबन्धेन सत्तोत्पत्त्या दुरुपपादा। संबन्धस्य संयोगस्य संबन्धिद्वयजन्यस्यासति संबन्धिन्यतरस्मिन्नपि समुत्पत्तेरयोगात्। तथा च स्वदेशकालसंबन्धात्सत्त्वम्। सत्त्वे च स्वदेशकालसंबन्ध इत्यन्योन्यसंश्रयः। अतः सत्त्वमेव सदा मन्तव्यं भावानामिति 'सतः सत्त्वं सदा भवे'दित्यन्तस्यार्थः। ननु सदा सत्त्वे कारकचक्रव्यापारानर्थक्यं प्रसज्येत। तत्पूर्वमसत एव कारकव्यापारेणोत्पत्तिर्वाच्येत्यत्राह 'असत'इति। असतः प्रयत्नशतेनापि निष्पत्त्या सत्त्वं दुरुपपादं सिकताभ्यस्तैलस्येव। किञ्चासत उत्पत्तौ दण्डचक्रादितोऽसत्त्वाविशेषाद्घटस्येव पटस्याप्युत्पादप्रसङ्गः। केनचिद्व्यापारेण शशेऽपि शृङ्गस्य कदाचिदुदयप्रसङ्गश्च। एतदनुसन्धानेनोक्तमतिदुर्घटमिति। ननूपादानविशेषे कार्यविशेषोत्पादनसामर्थ्यप्रतिनियमान्नातिप्रसङ्ग इति चेन्मैवम्, कार्यगर्भत्वमन्तरा सामर्थ्यनियमस्यापि दुर्निरूपत्वात्। तत्सदेव कार्यं कारकव्यापारेणाभिव्यज्यत इत्येष्टव्यमित्याह 'आद्य-

प्रपञ्चोऽतः सत्कक्ष्यान्तर्निवेश्यते। उक्तं च—'आदावन्ते च यन्नास्ति नास्ति मध्येऽपि तत्तथा'इति। अतो निश्चितसद्भावः सदा सन्नभ्युपेयताम् ॥ ४९ ॥ असतः सर्वदाऽसत्त्वं जन्ययोगात् खपुष्पवत्। असत्त्वे न विशेषोऽस्ति प्रागत्यन्तासतोरिह ॥ ५० ॥

(इति प्रपञ्चस्य सत्त्वपक्षसमर्थनम्)

---

न्तवा'निति । आविर्भावतिरोभावलक्षणावेव चाद्यन्तौ उत्पादविनाशाविति भावः । अत्र संवादः 'आदा'विति । 'अतः' इति । सत्त्वेन निश्चितः सदा सन्नेवेतीष्यतामित्यर्थः ॥ ४७ ॥ ४८ ॥ ४९ ॥ 'असत'इति । जन्ययोगात्—उत्पत्त्ययोगात्। प्रागत्यन्तासतोः—पूर्वमसतोऽत्यन्तासतश्च । इति कापिलमतमुपपादितम्।

अत्रोपपादितस्य कापिलमतस्य प्रतिक्षेपपरः, मतान्तरोपपादनप्रतिक्षेपपरश्च ग्रन्थभागो विलुप्त इत्यूह्यते। बुद्धिसौकर्याय साङ्ख्यपक्षप्रतिक्षेपप्रकारो दिङ्मात्रं प्रदर्श्यतेऽत्र। द्रव्यं तावत् नित्यमेव। अवस्थाभेदास्तु घटत्वकपालत्वादय आगन्तुकाः। अवस्थाविशेषसम्पत्त्यर्थ एव च कारकव्यापारः। द्रव्यस्य सत्त्वादेव कारकव्यापारगोचरत्वमवस्थान्तरभाक्त्वं च घटते। अन्वयव्यतिरेकाभ्यां च कारकचक्रस्य तस्य तस्य तत्र तत्र कार्ये सामर्थ्यनियमः सिध्यतीति नातिप्रसङ्गः। तत्तदवस्थाविशिष्टवेषेण जातत्वनष्टत्वादिप्रतीतिश्चोपपद्यते । कारकचक्रस्याभिव्यञ्जकत्वमिति पक्षे तु कारकज्ञापकविभागायोगः। अभिव्यक्तेर्ज्ञानाद्भेदे प्रकारान्तरेणोत्पत्तिरेवापतिता। किञ्च अभिव्यक्तेर्नित्यत्वे कारकव्यापारवैयर्थ्यमेव । तस्या अपि अभिव्यक्त्यन्तरस्वीकारेऽनवस्था। तस्या उत्पाद्यत्वे त्वसत्कार्यवादप्रसङ्गः। तदभिव्यक्तेरुत्पत्त्युपगमतो यथोपलम्भं तस्योत्पत्तिरुपगन्तुमुचिता। सदेव द्रव्यमवस्थान्तरभाक्सत्कार्य

श्वेतकेतुमुपादाय तत्त्वमित्यपि यच्छ्रुतम् । षष्ठप्रपाठके तस्य कुतो मुख्यार्थसम्भवः ॥ ५१ ॥ कार्पण्यशोकदुःखार्तश्चेतनस्त्वं-पदोदितः । सर्वज्ञस्सत्यसङ्कल्पो निस्सीमसुखसागरः । तत्पदार्थ-स्तयोरैक्यं तेजस्तिमिरवत्कथम् ॥ ५२ ॥ त्वमर्थस्थे तटस्थे वा... (तदर्थस्थे विभेदके)। गुणे तत्त्वंपदश्रुत्योरैकार्थ्यं दूरवारितम् ॥५३॥

---

भवतीत्येव सत्कार्यवादः संरक्षणीयः। अयमेव च त्र्यन्तसिद्धोऽपीति। आविद्यो भेदप्रपञ्चो मिथ्या। अद्वितीयश्रुत्या च मिथ्यात्वं गम्यते। तच्च प्रतीतिवाधाभ्यां सदसद्विलक्षणत्वसिद्धेः सुप्रतिष्ठितमिति हि मायावादिनां मतम्। तच्च पूर्वोत्तरप्रघट्टकैः प्रतिक्षिप्तप्रायमेवेतिवोध्यम् ॥५०॥

अथ निर्विशेषचिन्मात्रब्रह्मात्मैक्यज्ञानमेवाविद्यानिवर्तकम्। निर्विशेषचिन्मात्रब्रह्मात्मैक्यं च 'तत्त्वमसि' वाक्यप्रतिपन्नमिति वादमद्वैतिनां प्रतिक्षेप्तुं तत्त्वमसिवाक्यार्थविचारमुपक्रमते 'श्वेतकेतु'मिति। उपादाय-सम्बोध्य। छान्दोग्य इत्यादिः। जीवब्रह्मैक्ये तत्त्वमसिवाक्यमेव मुख्यं प्रमाणमभिमन्यते तैः। अस्यापि समानाधिकरणवाक्यस्य मुख्यार्थत्वं तन्मते न संभवतीत्याह 'तस्ये'त्यादिना ॥ ५१ ॥ 'कार्पण्ये'ति। कार्पण्यं-दैन्यम्, गतिशून्यता। शोकः गतदुःखानुसन्धानजा चित्त-वैयाकुली। दुःखं वर्तमानानिष्टानुभवलक्षणम्। समानविभक्त्या प्रति-पन्नमैक्यं जीवेश्वरयोर्विरुद्धस्वभावयोर्न घटत इति मुख्यार्थासंभव एवेत्याशयः ॥ ५२ ॥ 'त्वमर्थस्थे' इति। त्वमर्थनिष्ठो गुणोऽज्ञत्व-दुःखित्वादिः। तदर्थनिष्ठश्च सर्वज्ञत्वजगत्कारणत्वादिः। स च ब्रह्मणस्तटस्थलक्षणत्वेन पराभिमतः। अनयोर्धर्मयोराश्रयभेदकत्वात्तत्त्व-मर्थयोरैक्यं सुदूरनिरस्तमश्वगर्दभयोरिवेत्यर्थः ॥ ५३ ॥ नन्वज्ञत्वादि

---

टि०—१ लुप्तस्थाने तत्र तत्रास्मदीयं पूरणं...( ) चिह्नान्तर्निर्दिष्टमिति बोध्यम्।

अज्ञत्वसर्ववेदित्वदुःखित्वसुखितादिके । विशेषणे वा चिद्धातोरथ-वाऽप्युपलक्षणे । विरुद्धगुणसङ्क्रान्तेर्भेदः स्यात् त्वंतदर्थयोः ॥५४॥ वाच्यैकदेशभङ्गेन चिदेकव्यक्तिनिष्ठता । सोऽयं गौरिवतत्त्वंपद-योरित्यपेशलम् ॥ ५५ ॥ देशकालदशाभेदादेकस्मिन्नपि धर्मिणि । विरुद्धद्वन्द्वसङ्क्रान्तेः सोऽयं गौरिति युज्यते ॥ ५६ ॥ स्वप्रकाशस्य

---

सर्वज्ञत्वादि चोपलक्षणतयैवोच्यते, न तु विशेषणतया । उभयोप-लक्षितं वस्त्वेकमेवेत्यर्थः । अतो न विरोध इत्यत्राह 'अज्ञत्वे'ति । चिद्धातोः—चित्तत्त्वस्य । उपलक्षणत्वेऽपि अज्ञत्वादिनोपलक्ष्यस्य जीव-भावस्य सर्वज्ञत्वादिनोपलक्ष्यस्येश्वरभावस्य च वैयधिकरण्यादेव त्वंतदर्थयोरैक्यं न सिध्यतीत्यर्थः ॥ ५४ ॥ ननु विरोधान्मुख्यार्थस्त्यज्यते । चिन्मात्रे तु पदद्वयलक्षणोपेयते, यथा सोऽयं गौरित्यत्र तत्तेदन्तोप-लक्षिते वस्तुमात्रे लक्षणा पदद्वयस्य तथेति शङ्कते 'वाच्ये'ति । वाच्यैक-देशस्य प्रवृत्तिनिमित्तभेदस्य त्यागेन विशेष्यमात्रे चिन्मात्रे पदद्वयस्य वृत्तिः जहदजहल्लक्षणयेति । एतत्प्रतिक्षिपति 'इत्यप्यपेशल'मिति । अपेशलम्—असुन्दरम् । एकपदलक्षणयैव विरोधपरिहारे पदद्वयलक्षणा-कल्पना न मनोरमेत्यर्थः ॥ ५५ ॥ दृष्टान्ते पदद्वयस्यापि न लक्षणेत्याह 'देशकाले'ति । तत्ता नाम तद्देशकालयोगिता । इदन्तैतद्देशकालयोगिता । तत्ताविशिष्टे इदन्तान्वयस्य वाधेऽपि एकस्मिन् धर्मिण्युभयान्वये न विरोधः । देशद्वयसंवन्धः परिच्छिन्नस्य वस्तुनः कालभेदात्परिह्रियते । कालद्वयसम्वन्धस्तु स्थिरत्वादेव निरूह्यते । प्रातिपदिकाभ्यां देशद्वय-कालद्वयसंवन्धस्य समानविभक्त्या तदाश्रयद्रव्यैक्यस्य च प्रतिपादने न विरोधलेशोऽपि । अस्मिन्नेवार्थे 'सोय'मिति वाक्यस्य तात्पर्यम् । तन्न पदद्वयलक्षणा दृष्टान्ते इत्यर्थः ॥ ५६ ॥ न त्वेवं भवता वक्तुं

चिद्धातोर्विरुद्धद्वन्द्वसङ्गतौ। न व्यवस्थापकं किञ्चिद्देशकालदशादिके ॥ ५७ ॥ निर्धूतनिखिलद्वन्द्वस्वप्रकाशे चिदात्मनि। द्वैतानर्थभ्रमाभावाच्छास्त्रं निर्विषयं भवेत् ॥ ५८ ॥ एतेन सत्यकामत्वजगत्कारणतादयः। मा...परे (मायोपाधौ परे)ऽध्यस्ताः शोक-

---

शक्यत इत्याह 'स्वप्रकाशस्ये'ति। निर्विशेषे चिन्मात्रे विरुद्धधर्मद्वयसम्बन्धस्याविरोधोपपादकं देशकालावस्थाभेदादौ किञ्चिदपि न घटते। स्वयम्प्रकाशस्वरूपत्वादज्ञानमप्यविरोधोपपादकं न शक्यशङ्कं तस्मिन्निति भावः ॥ ५७ ॥ ब्रह्मण्यविद्यान्वयायोगादेवाविद्याकृतभेददर्शननिरसनार्थत्वं शास्त्रस्य निर्विशेषचिन्मात्रब्रह्मात्मैक्यविषयत्वं च पराभिमतं न संभवीत्याह 'निर्धूते'ति। द्वन्द्वशब्दो भेदवाच्यत्र। अज्ञानेनैव भेदभ्रमो वक्तव्यः। न च निर्विशेषे स्वप्रकाशे च तत्प्रसक्तिः। तन्निरसनीयस्यासिद्धेस्तन्निरासकत्वाभिमतैक्यज्ञाने शास्त्रतात्पर्यं न कल्पयितुं शक्यम्। तन्निरर्थकमापद्येताध्यात्मशास्त्रं तत्त्वमसिमहावाक्यं वेत्यर्थः। एतेनाविद्याकृतान्तःकरणभेद एव जीवेश्वरभावकल्पकोपाधिश्चिन्मात्रे इत्यपि परस्तम्। अविद्याया एवासम्भवात्तत्रेति बोध्यम् ॥ ५८ ॥ चिन्मात्रे ब्रह्मण्यविद्यान्वयानुपपत्तिपर्यालोचनया कैश्चिदद्वैतिभिः कल्पितं मायाऽविद्योपाधिभेदं तत एवेशेशितव्यभेदं चापरमार्थमुपपाद्यमानं निरस्यति 'एतेने'ति। एतेन—निर्धूतत्रिविधभेदे चिन्मात्रे मायाऽविद्योपाधिभेदासिद्ध्यैव। मायोपाधौ—मायोपहितचिन्मात्रे, परे—ईश्वरे। 'विनाशेने'ति। तत्त्वमसिवाक्यजन्यैक्यसाक्षात्कारेण मायाऽविद्योपाधिनाशे तत्कल्पित ईशजीवभावोऽपि निवृत्तो नावतिष्ठत इत्यर्थः। 'प्रागेव दूषित'मिति। एतद्दूषणभागो विलुप्तः। अपरमार्थत्वेनाभिमतयोस्तयोः कल्पकाभावादसिद्धिरेव। स्वतःकल्पनायामात्माश्रयः। ब्रह्मण एव तत्कल्पकत्वे

मोहादयः पुनः ॥ ५९ ॥ अविद्योपाधिके जीवे विनाशे नेति यन्मतम् । क्षुद्रब्रह्मविदामेतन्मतं प्रागेव दूषितम् ॥ ६० ॥ चित्स्वरूपे विशिष्टे वा मायाऽविद्याद्युपाधयः । पूर्वस्मिन् सर्वसाङ्कर्यं परजीवाविभागतः ॥ ६१ ॥ उत्तरस्मिन्नपि तथा विशिष्टमपि चिद्यदि । चित्स्वरूपं हि निर्भेदं मायाऽविद्याद्युपाधिभिः। विभिन्नमिव विभ्रान्तं

ब्रह्मस्वरूपस्य नित्यत्वात्तयोर्नित्यत्वप्रसक्तिः । ऐक्यज्ञानेन निवृत्त्युपगमेऽपि तस्य क्षणिकत्वादेव पुनरपि ब्रह्मस्वरूपबलात्तयोः कल्पनाप्रसङ्गः । किञ्च मायाया भ्रान्तिजनकत्वे दुःखादिजनकत्वे चाविद्यातो विभागासिद्धिः । तस्या यथार्थबुद्धिजनकत्वे क्रीडारसमात्रपरिकरत्वे चापुरुषार्थत्वायोगात्तन्निरसनानुपपत्तिः । अनादिभावरूपायास्तस्या ज्ञानमात्रतो निरसनायोगश्चेत्यादि दूषणमनुसन्धेयम् । अविद्याया एव बहुसंमतत्वान्मायाविद्योपाधिभेदवादिनोऽमी क्षुद्रा ब्रह्मविदोऽद्वैतिष्विति च बोध्यम् ॥ ५९ ॥ ६० ॥ उपाधिभेदोपगमासम्भव इत्युक्तम् । तदुपगमेन दूषणान्तरं चोच्यते 'चित्स्वरूपे' इति । किं चिन्मात्रे मायाऽविद्याद्युपाधयः संबध्यन्ते, उत विशिष्टे । निरंशे चिन्मात्रे मायाऽविद्यासम्बन्धे तत्प्रयुक्तस्वभावभेदा एकस्मिन्नेव प्रसज्यन्ते इति जीवेश्वरस्वभावसाङ्कर्यप्रसङ्गः । विशिष्टे चेत् किं तद्विशेषणम् ? मायाऽविद्या चेति चेदात्माश्रयः, जीवत्वेश्वरत्वे इति चेदन्योन्याश्रयः, अन्यत्तु विशेषणं दुर्वचमेव । किंच माययाऽविद्यया वा संवित्स्वरूपस्य च्छेदासम्भवादेकमेव तत्तदुपहितं भवेद्गगनमिव मठान्तवर्तिघटेन मठेन चोपहितम् । तथाच हस्तपादाद्यवच्छिन्नसुखदुःखभोग एकस्यैव यथा जीवस्य, तथा तत्तदुपाधिप्रयुक्तैश्वर्यदुःखादिभोग एकस्यैव ब्रह्मणः प्रसज्यत इति जीवपरस्वभावा-

टि०—1. विभागेनेति मूलपाठस्स्याद्वा ।

विशिष्टं च...(मतं तव) ॥ ६२ ॥ तटस्थावस्थिता धर्माः स्वरूपं न स्पृशन्ति किम्। न हि दण्डिशिरश्छेदाद्देवदत्तो न हिंसितः ॥ ६३ ॥ अचिदंशव्यपोहेन चिदेकपरिशेषता। अतस्तत्त्वमसीत्यादेरर्थ इत्यप्यसुन्दरम् ॥ ६४ ॥

(इति तत्त्वमसिवाक्यस्य पराभिमतब्रह्मात्मैक्यपरत्वेऽनुपपत्त्युपपादनम्)

अब्रह्मानात्मताभावे प्रत्यक् चित् परिशिष्यते। तत्त्वंपदद्वयं

---

व्यवस्थितिरेवेत्यर्थः ॥ ६१ ॥ ६२ ॥ नन्वौपाधिकप्रदेशभेदोपगमाद्ब्रह्मणि न जीवेशस्वभावसाङ्कर्यमिति चेत्तत्राह 'तटस्थे'ति। मायया ऽविद्यया वोपहितं तटस्थमित्युच्यते ब्रह्म। तन्निष्ठस्य सार्वज्ञ्यादेरज्ञत्वादेश्च दण्डेन कुण्डलेन वोपहिते कादाचित्कदण्डादिविशेषणवत्तया तटस्थशब्दिते देवदत्ते वर्तमानस्य सुखस्य दुःखस्य च देवदत्तात्मनीव ब्रह्मणि सम्बन्धो दुर्वार एवेति भावः। तत्रानन्दित्वप्रसङ्गस्य सह्यत्वात्कथञ्चिद्दुःखित्वस्यासह्यस्य प्रसङ्गे निदर्शनमाह 'नही'ति। उपाधिभेदेऽपि विरुद्धसमावेशप्रसङ्गो दुर्वारः। वस्तुभेदमन्तरा कल्पितप्रदेशभेदमात्रेण व्यवस्था दुर्घटा। तथाच मायाविद्योपाधिभेदकल्पनाऽपार्थेति स्थितम् ॥ ६३ ॥ एतेन मायाऽविद्योपाधिरूपविशेषणभेदपरित्यागेन विशेष्यीभूतचिन्मात्रैक्यं तत्त्वमसिवाक्यार्थ इत्यपि निरस्तमित्याह 'अचिदंशे'ति। पदद्वयलक्षणा, ब्रह्मण्येव दोषापत्तिश्चेत्युक्तमेतावता ॥ ६४ ॥

अथ परमते सामानाधिकरण्यार्थस्य तादात्म्यस्याप्यनुपपत्तिमुपपादयति 'अब्रह्मे'ति। ब्रह्मभिन्नस्यानात्मत्वे तत्त्वंपदद्वयलक्ष्यार्थ एक प्रत्यक्तत्त्वं चिन्मात्रमवशिष्यते। तत्र च समानाधिकरणवाक्यार्थस्य तादात्म्यस्यानुपपत्तिरित्यर्थः। अत्रोत्तरार्धं विलुप्तमित्यूह्यते। तच्च एक-

जीवपरतादात्म्यगोचरम् । तन्मुख्यवृत्ति तादात्म्यमपि वस्तुद्वयाश्रयम् ॥ ६५ ॥ भेदाभेदविकल्पस्तु यस्त्वया परिचोदितः । अभेदाभेदिनोऽसत्ये बन्धे सति निरर्थकः ॥ ६६ ॥ अभेदो भेदमर्दी

---

शेषे तु तादात्म्यं चिन्मात्रे नैव सम्भवेत् इति स्यात् । एकशेषे तादात्म्यानुपपत्तिमेव विवृणोति 'तत्त्व'मिति । समानाधिकरणमिति शेषः । तस्य मुख्यवृत्तिर्यत्र तत् तन्मुख्यवृत्ति । वस्तुद्वयाश्रयमिति । भेदसमानाधिकरणाभेदस्य तादात्म्यस्यात्यन्तायाभेदेऽसम्भव इति भावः । अत्र यादवप्रकाशप्रक्रियया भाट्टप्रक्रियया वा निरूप्यते तादात्म्यमिति बोध्यम् । सिद्धान्ते तु वस्तुद्वयाश्रयमित्यस्य प्रवृत्तिनिमित्तधर्मभेदवदेकवस्त्वाश्रितमित्यर्थः । धर्मद्वारकभेदविशिष्टस्वरूपाभेद एव च तादात्म्यं मतमिति विवेकः ॥ ६५ ॥ ननु भेदाभेदस्तादात्म्यमिति न संभवति । भेदाभेदयोरभेदेऽत्यन्तभेदेऽपि भेदाभेदस्यासिद्धेः । भेदाभेदे वा तत्रापि तथेत्यनवस्थेति चेत्तत्राह 'भेदाभेदे'ति । अयं विकल्पनप्रकारो नोपलभ्यमानग्रन्थभागेऽस्ति । तद्भागो विलुप्तः स्याद्वा । भिन्नयोस्तादात्म्यमुताभिन्नयोः । आद्ये घटः पट इति प्रसज्यते । अन्त्ये घटो घट इतीति वा भेदाभेदविकल्पो वोध्यः । अभेदाभेदिनः—भेदाभेदिभिन्नस्य, अत्यन्तभिन्नस्यात्यन्ताभिन्नस्य वा बन्धे—तादात्म्यसम्बन्धे असति-अप्रामाणिके सति भवत्कृतोऽयं विकल्पोऽपार्थ इत्यर्थः । न हि घटो घट इति वा घटः पट इति वा सामानाधिकरण्यं दृष्टम् । किन्तु नीलो घट इत्येव । तद्भेदाभेद एव तादात्म्यमेष्टव्यम् । भेदाभेदयोर्भेद एव । न च भेदे तयोर्विरोधादेकत्र समावेशो न घटत इति वाच्यम्, नीलघटयोः प्रतीतत्वादेव तयोर्विरोधाभावात् । धर्मतो भेदः स्वरूपतोऽभेद इति वाऽविरोध इति भावः ॥ ६६ ॥ भेदाभेदं विकल्पयतः

तु स्वाश्रयीभूतवस्तुनोः । भेदः परस्परानात्म्यं भावानामेवमेतयोः ॥ ६७ ॥ स्वरूपमभ्युपेत्यैव भेदाभेदविकल्पयोः ।...( वाधनं ) तेन वाग्बाधा विरोधेन निगृह्यसे ॥ ६८ ॥ भिन्नाभिन्नत्वसम्बन्ध-सदसत्त्वविकल्पनम् । प्रत्यक्षानुभवापास्तं केवलं कण्ठशोषणम् ॥ ६९ ॥ नीले नीलमतिर्याद्दगुत्पले नीलधीर्हि सा । नीलमुत्पल-मेवेदमिति साक्षाच्चकास्ति नः ॥ ७० ॥ यथा विदितसंयोग-सम्बन्धेऽप्यक्षगोचरे । भेदाभेदादिदुस्तर्कविकल्पाधानविभ्रमः

---

स्वव्याघातोऽपीत्याह 'अभेद' इति श्लोकद्वयेन । 'भेदमर्दीति' इति क्वचित्पाठः । तत्र इतिशब्दस्य एवमित्यनेनाऽन्वयः इत्येवमिति । भेद-मर्दी–अत्यन्तभेदनिरासकः । एतयोः–भेदाभेदयोः स्वरूपं स्वरूपभेद-मुपगम्यैव भेदोऽभेदो वेति विकल्पकोट्योर्वाधनं दूषणं क्रियते । तेन-स्वाभ्युपगमेन, वाग्बाधा-भवदुक्तदूषणवचनोपरोधः । प्रसज्यत इति शेषः । त्वं च स्वाभ्युपगमविरुद्धवचनत्वेन निगृह्यस इत्यर्थः ॥ ६७ ॥ ॥ ६८ ॥ 'भिन्नाभिन्नत्वे'ति । भिन्नाभिन्नत्वस्य धर्मिणा सम्बन्धोऽस्ति न वा । आद्ये तत्सम्बन्धेऽपि सम्बन्धान्तरं वाच्यम् । तत्रापि तथेत्यन-वस्था । अन्त्ये असम्बद्धस्य विशिष्टबुद्धिनिर्वाहकत्वं तस्य न स्यादिति विकल्पनमपि कण्ठशोषणमात्रफलकं प्रत्यक्षानुभववाधितं चेत्यर्थः ॥ ६९ ॥ 'नील' इति । नीलरूपवति घटादौ नीलबुद्धिर्यथा नील-समवायावगाहिनी विदिता नापलप्या, एवं नीलमुत्पलमिति विदिता–प्रसिद्धा नीलतादात्म्यमतिरपि नापलप्या । स्वपरनिर्वाहकसमाधिना स्वरूपसम्बन्धेन वाऽनवस्था परिहार्येति भावः ॥ ७० ॥ तादात्म्य-सम्बन्धविद्वेषिप्रयुक्तानां दुस्तर्काणां प्रत्यक्षशास्त्रपराहतत्वमेव प्रपञ्चयति 'यथे'ति । संयोगे भेदाभेदादिदुस्तर्को यथा–भिन्नयोः संयोग उताभि-

॥ ७१ ॥ तद्वत्तादात्म्यसम्बन्धे श्रुतिप्रत्यक्षमूलके । श्रुतिदण्डेन दुस्तर्कविकल्पभ्रमवारणम् ॥ ७२ ॥ निर्दोषाऽपौरुषेयी च श्रुतिरत्यर्थमादरात् । असकृत्तत्त्वमित्याह तादात्म्यं ब्रह्मजीवयोः ॥७३॥ ब्रह्मानन्दहृदान्तःस्थो मुक्तात्मा सुखमेधते । फले च फलिनोऽभा-

---

न्नयोः । आद्ये हिमवद्विन्ध्ययोरपि संयोगप्रसङ्गः । अन्त्ये स्वेनैव स्वस्य सः । संयोगो धर्मिणो भिन्नो न वा । भेदे तस्यापि सम्बन्धान्तरं तस्यापि तथेत्यनवस्था । अभेदे संयोग एव न सिध्यतीत्यादिः । स्फुटप्रतिपन्ने संयोगे दुस्तर्कतन्मूलविकल्पनादि यथा भ्रमलक्षणं कण्ठशोषणमात्रम्, प्रत्यक्षपराहतं च; एवं नीलोत्पलादितादात्म्ये प्रत्यक्षे जीवब्रह्मतादात्म्ये च शास्त्रसिद्धे दुस्तर्कविकल्पनादि प्रत्यक्षशास्त्रदण्डनिवारितमिति भावः । श्रुतिदण्डेनेति प्रकृततत्त्वमसिवाक्यार्थाभिप्रायेणोक्तम् ॥ ७१ ॥ ७२ ॥ जीवपरयोस्तादात्म्येऽभ्यासरूपं तात्पर्यलिङ्गमप्यस्तीत्याह 'निर्दोषे'ति । प्रवृत्तिनिमित्तरूपधर्मभेदेन धर्मिस्वरूपाभेदेन च तादात्म्यं तत्त्वमसीत्यादौ त्वमादिशब्दानां तत्तच्छरीरकब्रह्मपर्यन्ततया निरूपणीयम्, तदादिपदानां ब्रह्मात्मकपरतया वा । यादवप्रकाशादिमते तु जीवब्रह्मस्वरूपगतावेव भेदाभेदाविति विवेकः ॥ ७३ ॥ एतावता परमते प्रातिपदिकयोरिव समानविभक्तेरपि न मुख्यार्थतेति व्यवस्थापितम् । यद्यपि अभेदमात्रस्य समानविभक्त्यर्थत्वं सम्भवति । तथाऽपि प्रवृत्तिनिमित्तधर्मभेदप्रहाणान्न सामानाधिकरण्यमुख्यार्थता परमत इति वोध्यम् । अथ चिन्मात्रपरिशेषोऽपि न युक्तः । तथा सति मोक्षस्यापुरुषार्थताप्रसक्तेरित्याह 'ब्रह्मे'ति । 'एष ब्रह्म प्रविष्टोऽस्मि ग्रीष्मे शीतमिव ह्रदम्' इतिवचनानुसारेण ब्रह्मानन्दस्य ह्रदत्वरूपणम्, सकलसंसारतापक्लेशहरत्वान्निरतिशयाह्लादकरत्वाच्च तस्य । 'ब्रह्मानन्दं ह्रदन्तःस्थ'

वान्मोक्षस्यापुरुषार्थता। एकशेषे हि चिद्धातोः कस्य मोक्षः फलं भवेत् ॥ ७४ ॥

(इति परमते सामानाधिकरण्यार्थायोगवर्णनम्)

किञ्च प्रपञ्चरूपेण का नु संविद्विवर्तते। न तावद्धटधीस्तस्यामसत्यामपि दर्शनात् ॥ ७५ ॥ न हि तस्यामजातायां नष्टायां

---

इति पूर्वमुद्रितपाठस्तु न समीचीनः। मुक्तात्माऽपरिच्छिन्नब्रह्मानन्दसागरे निमग्नो नित्यप्रवृद्धसुखो वरीवर्तितरामिति शास्त्रमर्यादा। परमफले मोक्षे भोक्तृत्वावस्थापन्नस्य स्वस्य विलयं चेज्जानीयान्नाभिलष्येत्तामित्यर्थः। एकशेषे–निर्विशेषचिन्मात्रपरिशेषे, कस्य–ब्रह्मणो जीवस्य वा मोक्षः फलम्? न ब्रह्मणः, नित्यमुक्तत्वात्, नापि जीवस्य, तस्यैव तदा विलयादिति भावः। चिन्मात्रमेव ब्रह्म जीवस्य स्वरूपमिति चेत्तर्हि ब्रह्मण एवाविद्याजीवभावादि वक्तव्यम्। तच्च श्रुतियुक्तिपराहतमिति ध्येयम्। एवमविद्यापरिकल्पितजीवेश्वरत्वादिविकल्पपरित्यागेन निर्विशेषचिन्मात्रैक्यं तत्त्वमसिवाक्यार्थ इत्यत्र दूषणजातं प्रोक्तम् ॥ ७४ ॥

अथ प्रपञ्चभ्रमाधिष्ठानस्य तद्भ्रमहेतोश्च स्वरूपविमर्शेनापि परमतेऽसामञ्जस्यमुद्भावयति 'किञ्चे'त्यादिना। विवर्तते अयथाकारेण भासते। दर्शनात्-भेदप्रपञ्चस्य दृष्टेः। अधिष्ठानमन्तराऽऽरोप्यप्रतीत्ययोगान्न घटपटादिधियामागमापायिनीनां प्रपञ्चभ्रमाधिष्ठानत्वं सम्भवतीति भावः। जगत्–भेदप्रपञ्चः। तद्भानमिति यावत्। 'नापी'ति। पटज्ञाननाशेऽपि अन्येषां घटादिभेदानामुपलम्भान्न पटज्ञानादेरपि प्रपञ्चाध्यासाधिष्ठानत्वं संभवतीत्यर्थः। संविदेव प्रपञ्चभ्रमाधिष्ठानमिति परेषां मतम्। तत्र घटपटादिसंविदां नाधिष्ठानत्वं सम्भवतीत्युक्तं भवति ॥ ७५ ॥

वाऽखिलं जगत् । नास्तीति शंक्यते वक्तुमुक्तौ प्रत्यक्षबाधनात् ।।
नाप्यन्यसंवित् तन्नाशेऽप्यन्येषामुपलम्भनात् ।।७६।। ननु संविद्-
भिन्नैका न तस्यामस्ति भेदधीः । घटादयो हि भिद्यन्ते न तु सा
चित् प्रकाशनात् ।। ७७ ।। घटधीः पटसंवित्तिसमये नावभाति चेत् ।
नैवं, घटो हि नाभाति सा स्फुरत्येव तु स्फुटम् ।। ७८ ।। घटव्या-
वृत्तसंवित्तिरथ न स्फुरतीति चेत् । तद्व्यावृत्तिपदेनापि किं सैवो-
क्ताऽथ वेतरत् । सैव चेद्भासतेऽन्यच्चेन्न ब्रूमस्तस्य भासनम् ।।७९।।
किञ्चास्याः स्वप्रकाशाया नीरूपाया न हि स्वतः । ऋते विषय-

---

।। ७६ ।। अत्र परेषामाशङ्का 'ननु' इति । अखण्डा संविदेका नित्या विभ्वी च । घटादीनामेवान्यज्ञानेष्ववभासमानानां भेदः । संविदस्तु सर्वज्ञानेषु प्रकाशमानत्वादेकत्वमेव । तस्यां भेदबुद्धिस्त्वौपाधिकविषया न यथार्थसंवित्स्वरूपभेदविषया । सैव प्रपञ्चभ्रमाधिष्ठानं भवति । घट-बुद्धिः पटज्ञानकाले न भासते, किन्तु पटधीरेवेति चेत्, मैवम् । तदा घट एव न भासते । ज्ञानं तु भासत एव । ननु घटविषयकत्व-विशिष्टसंविदः पटज्ञानेऽभानमिति चेत्, मैवम् । घटविषयकत्वरूपं घटव्यावृत्तत्त्वमपि संवित्स्वरूपमेव । अतः पटज्ञाने तस्य भानमेव । घटः परं न भासते । तस्यातिरिक्तत्वे तु पटज्ञाने तद्भानेऽपि संविदो भानमक्षतमेवेति समुदिताशयः ।। ७७ ।। ७८ ।। ७९ ।। ननु संविदि भेदाभावे घटज्ञानमिदं, पटज्ञानं तत्, एकमुत्पन्नमपरं विनष्टमित्याद्य-नुपपन्नं भवेदित्यत्राह 'किञ्चे'ति । नीरूपायाः—निराकारायाः । निर्विशे-षाया इति यावत् । नानात्वावग्रहभ्रमः—नानात्वरूपासदाकारोपहितत्व-भ्रमः । स्वप्रकाशाया इति हेतुगर्भम् । संविन्न नाना स्वप्रकाशत्वात्, यन्नाना तदस्वप्रकाशं यथा घटादीति । संविदि नानात्वप्रतीतिरपि

नानात्वान्नानात्वावग्रहभ्रमः ॥ ८० ॥ न वस्तु वस्तुधर्मो वा न प्रत्यक्षो न लैङ्गिकः। घटादिवेद्यभेदोऽपि केवलं भ्रमलक्षणः ॥८१॥ यदा, तदा तदायत्तो धीभेदावग्रहोदयः। कुतः, कुतस्तरां तस्य परमार्थत्वसम्भवः ॥ ८२ ॥ किञ्च स्वयंप्रकाशस्य स्वतो वा

---

विषयभेदौपाधिकी भ्रान्तिरेव। न तु वास्तवो भेदस्तस्यामिति भावः ॥ ८० ॥ ननूपाधिभेदेनैव भेदोऽपि तत्र वास्तवो भवेत्। सांसर्गिकस्य धर्मस्य तत्र तत्रोदयदर्शनादित्यत्राह 'ने'ति। विषयभेदस्यैवावास्तविकत्वात्तत्प्रयुक्तं संविन्नानात्वमप्यवास्तविकमेवेति भावः। भेदस्य चावास्तविकत्वं दुर्निरूपत्वात्। तथाहि–भेदो न तावद्वस्तुस्वरूपम्। प्रतियोगिग्रहापेक्षग्रहस्य भेदस्य तदनपेक्षग्रहस्वरूपत्वायोगात्। नापि वस्तुधर्मोऽयम्। भेदस्य धर्मिभेदो धर्मान्तरम्। तस्यापि स्वधर्मिभेदो धर्मान्तरम्, एवमुपर्यपि। एवं घटस्य पटभेदो धर्मः, पटभेदभेदोऽपि तथा, एवं तद्भेदोऽपीति चानवस्थाप्रसक्तेः। एवं स्वरूपतो दुर्निरूपस्य प्रमाणतोऽपि दुर्निरूपत्वम्। यथा–प्रत्यक्षं तावन्न भेदग्राहि, क्षणिकस्य तस्य स्वरूपप्रतियोगिग्रहणपूर्वकभेदग्रहणपर्यन्तावस्थानाभावाद्विरम्य व्यापारायोगाच्च। युगपदेव त्रितयं गृह्णाति चेत्, समूहालम्बनवदुपश्लेषविशेषासिद्धिः। प्रत्यक्षेण भेदग्रहणाभावादेव तन्मूलाविनाभावग्रहाधीनोदयमनुमानमपि न भेदे प्रमाणं भवेदिति हृदयम्। ननु तर्हि भेदग्रहः कथम्? तत्राह 'केवलं भ्रमलक्षण' इति ॥ ८१ ॥ 'यदे'ति। संविदि नानात्वस्य स्वाभाविकत्वकथा सुदूरे। औपाधिकमपि नानात्वं न। उपाधिभेदस्याभावात्। किन्तु अनाद्यविद्यादोषमूलापरमार्थोपाधिभेदाधीननानात्वभ्रममात्रमित्यर्थः। एवं ज्ञाने विषयभेदेन भेदबुद्धिरयथार्थेत्युक्तम् ॥ ८२ ॥ अथोत्पत्त्यादिप्रतीत्या भेदबुद्धिरपि तत्रायथार्थैवेति निरूपयितुमुत्पत्त्याद्ययोगमाह 'किञ्चे'ति। संविदः प्रागभावः प्रध्वंसा-

परतोऽपि वा । प्रागभावादिसिद्धिः स्यात्, स्वतस्तावन्न युज्यते ॥ ८३ ॥ स्वस्मिन् सति विरुद्धत्वादभावस्यानवस्थितेः । स्वनिमित्तप्रकाशस्य स्वस्याभावेऽप्यसम्भवात् ॥ अनन्यगोचरत्वेन चितो न परतोऽपि च ॥ ८४ ॥ किञ्च वेद्यस्य भेदादेर्न चिद्धर्मत्वसम्भवः । रूपादिवत्, अतः संविदद्वितीया स्वयंप्रभा ॥ ८५ ॥ अतस्तद्भेदमाश्रित्य यद्विकल्पादिजल्पितम् । तदविद्याविलासोऽयमिति ब्रह्मविदो विदुः ॥ ८६ ॥

(इति परकीयसंविदेकत्वव्यवस्थापनानुवादः ।)

---

भावो वा किं तयैव गृह्यते ? उत संविदन्तरेणेति विकल्प्य प्रथमं कल्पं प्रतिक्षिपति 'स्वत' इति । स्वेन सता स्वाभावो गृह्यते ? उतासता ? आद्यं दूषयति 'स्वस्मि'न्निति । अन्त्यं दूषयति 'स्वनिमित्ते'ति । स्वाधीनस्य प्रकाशस्य स्वस्य ग्राहकस्याभावेऽसम्भवादित्यर्थः । परत इति कल्पं दूषयति 'अनन्ये'ति । प्रतियोगिनमुल्लिख्य ह्यभावो ग्राह्यः । ज्ञानस्य ज्ञानान्तरगोचरत्वाभावान्न ज्ञानान्तरेणापि तत्प्रागभावग्रहणं सम्भवतीत्यर्थः । संविन्नानात्वोपगमेऽपि न तत्प्रागभावग्रहसम्भव इत्यभ्युपगम्य वादः कृतः । नत्वद्वैतिनामभिमतं वस्तुतः तन्नानात्वमिति बोध्यम् ॥ ८३ ॥ ॥ ८४ ॥ संविदि नानात्वाभावे प्रमाणमाह 'किञ्चे'ति । भेदो न चितो वेद्यत्वाद्रूपादिवदित्यनुमानमत्र विवक्षितम् । 'अत' इति । भेदस्य दुर्निरूपत्वात्संविद्धर्मत्वासम्भवाच्च साऽद्वितीया—सजातीयविजातीयस्वगतभेदशून्यैव, स्वयम्प्रकाशत्वाच्च तुच्छव्यावृत्तेति भावः ॥ ८५ ॥ 'अत' इति । यतो निर्भेदत्वं संविदः, अतः किं घटसंविदधिष्ठानमाहोस्वित्पटसंविदित्यादि विकल्पजल्पनं यत्, सोऽयं संविद्भेदावलम्बी विकल्पादिवादः संवित्स्वरूपयाथात्म्याज्ञानकार्यं इत्यद्वैतिनो मन्यन्त इत्यर्थः ॥ ८६ ॥

हन्त ब्रह्मोपदेशोऽयं श्रद्दधानेषु शोभते। वयमश्रद्दधानाः स्मो ये युक्तिं प्रार्थयामहे ॥८७॥ प्रतिप्रमातृविषयं परस्परविलक्षणाः। अपरोक्षं प्रकाशन्ते सुखदुःखादिवद्धियः ॥८८॥ सम्बन्धिव्यङ्ग्य-भेदस्य संयोगेच्छादिकस्य नः। न हि भेदः स्वतो नास्ति नाप्रत्य-

---

अनूदितं परमतं प्रतिक्षेप्तुमुपक्रमते 'हन्ते'ति। हन्तेति व्यामोहवत्सु परेषु खेदो व्यज्यते। श्रद्धामात्रशरणेषु विनेयबुद्धिषु निरूपणासमर्थेषु भवदभिमतोऽयं ब्रह्मोपदेशः शोभते नाम। युक्तिविमर्शका वयं तु नात्र भवदीये ब्रह्मोपदेशे श्रद्धालवः। अतोऽस्मान् रञ्जयितुं सत्प्रमाण-तर्का एवोपादेयाः, न तु शुष्कोपदेशा इति भावः ॥ ८७ ॥ आदौ तावत् संविन्नानात्वमनुभवसिद्धं नापलापार्हं कूटयुक्तिभिरित्याह 'प्रतिप्रमात्रि'ति। पुरुषभेदेन, एकस्मिन्नपि पुरुषे विषयभेदेन, एक-स्मिन्नेव विषये कालभेदेन करणभेदेन च धियो नाना प्रत्यात्ममध्य-क्षसिद्धाः सुखदुःखादिवदित्यर्थः। ज्ञाननानात्वापलापे तुल्यनयेन सुखदुःखनानात्वस्याप्यपलापप्रसङ्गः। इष्टश्चेदनुभवविरोध इति भावः ॥ ८८ ॥ ननु यथा निर्भेदेऽप्याकाशे सम्बन्धिव्यङ्ग्यो भेदो घटाका-शोऽयमयं तु मठाकाश इति प्रतीयते, एवं संविद्यपि विषयाश्रयव्यङ्ग्यो भेदो न वास्तव इति चेत्तत्राह 'सम्बन्धी'ति। यथा भूतलघटसं-योगोऽयम्, स तु कुड्यमुसलसंयोग इति सम्बन्धिभेदेनैव व्यावृत्त-तया प्रतीयमानः संयोगभेदो वास्तव एव सम्बन्धिजन्यत्वात्तस्य, यथा वा चैत्रस्य घटेच्छा, मैत्रस्य पटेच्छेत्येवं सम्बन्धिभेदेन भिन्नतया प्रतीयमाना भिन्नभिन्नैवेच्छा तत्तत्पुरुषीया तदा तदा जायमाना, एवं विषयाश्रयभेदेन प्रतीयमानः संविद्भेदोऽपि वास्तविक एव कालादिभेदेन जायमान इति भावः। सिद्धान्ते तत्तत्पुरुषे वर्तमानस्य धर्मभूतज्ञान-

क्षश्च सम्मतः ॥ ८९ ॥ यदि सर्वगता नित्या संविदेवा(काऽ)भ्यु-
पेयते । ततः सर्वं सदा भायात्, न वा किञ्चित्कदाचन ॥ ९० ॥
तदानीं न हि वेद्यस्य सन्निधीतरकारिता । व्यवस्था घटते, वित्ते-
र्व्योमवद्वैभवाश्रयात् ॥ ९१ ॥ नापि कारणभेदेन, नित्यायास्तद-
भावतः । न च स्वरूपनानात्वात्, तदेकत्वपरिग्रहात् ॥ ९२ ॥
ततश्च बधिरान्धादेः शब्दादिग्रहणं भवेत् । गुरुशिष्यादिभेदश्च
निर्निमित्तः प्रसज्यते ॥ ९३ ॥

(इति संविदैक्यमतदूषणेन संविन्नानात्वोपपादनम्)

---

स्यैकत्वे नित्यत्वेऽपि तत्तदर्थप्रकाशनार्थप्रसरणावस्थाभेदविशिष्टवेषेण नानात्वमनित्यत्वं च संमतं, प्रकृतेर्नित्यैकत्वेऽपि तत्परिणामभेदाना-मिवेत्यवधेयमत्र ॥ ८९ ॥ एवमुपलम्भबलात् संविन्नानात्वं समर्थ्य तदैक्ये बाधकमप्याह 'यदी'त्यादिना । नित्यविभुनः प्रकाशकस्यैकस्य ज्ञानस्य सर्वविषयसम्बन्धे समाने सदा सर्वार्थस्य भानप्रसङ्गः । प्रका-शकज्ञानसम्बन्धेऽप्यभाने तु कस्यचिदपि कदाऽपि भानं न स्यात् । प्रकाशे ज्ञानसंबन्धातिरेकिणो हेत्वन्तरस्यासम्भवादित्यर्थः ॥ ९० ॥ 'तदानी'-मिति । सन्निधीतरत्—असन्निधानम् । ज्ञानसन्निध्यसन्निधिप्रयुक्ताऽर्थ-भेदे भानाभानव्यवस्था दुरुपपदा । ज्ञानस्य सर्वदा सर्वसम्बद्धत्वा-द्गगनवदित्यर्थः । सिद्धान्ते तु सङ्कोचविकासाभ्यां ज्ञानस्य विषयभेदे सन्निध्यसन्निधी व्यवस्थिते इति बोध्यम् ॥ ९१ ॥ एतत्करणजन्यं ज्ञानमेतमेवार्थं गृह्णातीत्येवं करणभेदेनापि व्यवस्था दुर्वचा भवद्भिरि-त्याह 'नापी'ति । नित्यत्वे ज्ञानस्य करणासम्भवादिति यावत् । अर्थभेदेन ज्ञानभेदोऽपि दुर्वचः संविदद्वैतवादिभिरित्याह 'न चे'ति ॥ ९२ ॥ प्रकाशकसंविदैक्यवादे लौकिकवैदिकमर्यादाभङ्गप्रसङ्गमप्युद्भावयति 'ततश्चे'ति । ननु प्रकाशकस्य चैतन्यस्यैकत्वेऽपि चक्षुरादिप्रसृतयाऽऽन्तर-

ननु नः संविदो भिन्नं सर्वं नाम न किञ्चन। अतः सर्वं सदा भायादित्यकाण्डेऽनुयुज्यते ॥ ९४ ॥ इदमाख्याहि भोः किं नु नीलादिर्न प्रकाशते। प्रकाशमानो नीलादिः संविदो वा न भिद्यते ॥ ९५ ॥ आदौ प्रतीतिसुभगो निर्वाहो लोकवेदयोः। यतः पदपदार्थादि न किञ्चिदवभासते ॥ ९६ ॥ द्वितीये संविदोऽद्वैतं व्याहन्येत समीहितम्। यद्ययं विविधाकारप्रपञ्चः संविदात्मकः। साऽपि संवित्तदात्मेति यतो नाना प्रसज्यते ॥ ९७ ॥

-करणवृत्त्या विषयसम्बद्धयाऽविद्यावरणनिवर्तन एव चैतन्यं तं तमर्थं प्रकाशयतीति व्यवस्था घटत इति चेत्; नैतत्साधु; वृत्तेर्जडाया अविद्यावरणनिवर्तकत्वायोगात्। तथात्वे वा तस्या एवार्थप्रकाशकत्वमपि भवतु। किमन्तर्गडुना चैतन्येनेत्यन्यत्र विस्तरः। तद्ग्राह्यग्राहकभेदेन ज्ञानभेदो मन्तव्य एवेति भावः ॥ ९३ ॥

सर्वस्य सर्वदा भानप्रसङ्गं सिद्धान्तिनोद्भावितमाक्षिपति परः 'ननु'-इति। संविद्भिन्नस्य सर्वस्य विरहादेवास्मन्मते सर्वं सदा भायादित्यस्थानेऽनुयोगो भवतामित्यर्थः ॥ ९४ ॥ प्रतिवक्ति सिद्धान्ती 'इद'मिति। किं नीलादिप्रतीतिरेव नास्तीत्युच्यते, उत नीलादेः संविदभिन्नत्वेन तत्प्रतीतिः संवित्प्रतीतिरेवाभिमन्यत इत्यर्थः ॥ ९५ ॥ आद्यः कल्पो न कल्पत इत्याह 'आदा'विति। नानाप्रतीतिनिह्नवे नानापदपदार्थप्रतीतिनिर्वाह्यः सर्वो लौकिको वैदिकश्च व्यवहारः प्रतीतिसुभगः—अबाधितानुभवसिद्धः सम्यङ् निर्व्यूढो भवेद्भवद्भिरित्युपालम्भः। 'कथ'मिति शेषपूरणेन व्याख्येयम् ॥ ९६ ॥ द्वितीयं दूषयति 'द्वितीय' इति। प्रतीयमाननानाप्रपञ्चैक्ये संविदो नानात्वं प्रसज्यत इत्यभिमततदद्वैतहानिरित्यर्थः। एवं वदतोऽपसिद्धान्तश्चेति हार्दम् ॥ ९७ ॥ अत्र शङ्कते

नचाविद्याविलासत्वाद्भेदाभेदानिरूपणा । सा हि न्यायानलस्पृष्टा जातुषाभरणायते ॥ ९८ ॥ तथाहि यद्यविद्येयं विद्याभावात्मिकेष्यते । निरुपाख्यस्वभावत्वात्सा न किञ्चिन्नियच्छति ॥ ९९ ॥ अर्थान्तरमविद्या चेत्साध्वी भेदानिरूपणा । अर्थानर्थान्तरत्वादिविकल्पोऽस्या न युज्यते । विद्यातोऽर्थान्तरं चासाविति सुव्याहृतं

---

'नचे'ति । नीलादिभिदेति विशेष्यमध्याहार्यमत्र । भिन्नत्वेनाभिन्नत्वेन वा निरूपयितुमशक्यत्वं च तस्या अविद्याविलासत्वात् । भेदाभेदयोरनिरूपणं यस्या भेदाभेदानिरूपणा । आविद्यस्य नीलादिभेदस्य मिथ्यात्वात् मिथ्यार्थे च दुर्घटत्वस्य भूषणत्वाद्भेदाभेदानिरूपणोपपत्तिः । उपपत्त्यननुवर्तित्वादेव च सर्वं सदा मायादित्याद्यापत्तेरप्यनवकाश इति हृदयम् । परिहरति 'सा ही'ति । जतुनो विकारो जातुषम् । 'त्रपुजतुनोः षुक्' इत्यण् षुक् च । अविद्या हि न्यायानलस्पृष्टा जातुषवन्न जीवितुं प्रभवति । तत्तद्विलासत्वं प्रपञ्चस्य न सेत्स्यतितरामित्याशयः ॥ ९८ ॥ न्यायपराहतत्वमेवाविद्यायाः प्रपञ्चयति 'तथाही'त्यादिना । अत्र विकल्पः—किं विद्याऽभावोऽविद्या, उत विद्याभिन्नं भावान्तरमिति । आद्ये दूषणमाह 'निरुपाख्ये'ति । निरुपाख्यस्वभावत्वं शून्यस्वरूपत्वम् । तथा च स्वयमेवालब्धसत्ताऽविद्या कथं प्रपञ्चव्यवस्थापिका भवेदित्याकूतम् । कल्पान्तरमनूद्य दूषयति 'अर्थान्तर'मिति । साध्वी-उपपत्त्यसहा, भेदानिरूपणा - भिन्नत्वेनाभिन्नत्वेन वाऽशक्यनिरूपणा चाविद्याऽर्थान्तरं चेदित्यन्वयः । अत्र स्ववाग्विरोधमाह 'अर्थानर्थे'ति । सुव्याहृतमिति विपरीतलाक्षणिकम् । 'अर्थानर्थान्तरत्वादिविकल्पोऽस्या न युज्यत' इति वचनं 'विद्यातोऽर्थान्तरमसा'विति च वचनं मिथो विरुद्धमिति यावत् ॥ ९९॥ १०० ॥ अविद्याया अर्थान्तरत्वमपि कल्पितमेवेति

वचः ॥ १०० ॥ अथार्थान्तरभावोऽपि तस्यास्ते भ्रान्तिकल्पितः। हन्तैवं सत्यविद्यैव विद्या स्यात्परमार्थतः ॥ १०१ ॥ किञ्च शुद्धाऽजडा संवित्, अविद्येयं तु नेदृशी। तत्केन हेतुना सेयमन्यैव न निरूप्यते ॥ १०२ ॥ अपि चेयमविद्या ते यदभावादिरूपिणी। सा विद्या किं नु संवित्तिर्वेद्यं वा वेदिताऽथवा ॥ १०३ ॥ वेद्यत्वे वेदितृत्वे च नास्यास्ताभ्यां निवर्तनम्। न हि ज्ञानादृतेऽज्ञानमन्यतस्ते निवर्तते ॥ संविदेवेति चेत्तस्या ननु भावादसम्भवः ॥ १०४ ॥ किञ्चेयं तद्विरुद्धा वा, न तस्याः क्वापि सम्भवः।

---

चेत्तत्राह 'अथे'ति। भेदानिरूपणे भवदभिमता विद्यैव स्यादविद्येति भावः ॥ १०१ ॥ वस्तुतो भिन्नत्वेनैव निरूपणमर्हत्यविद्येत्याह 'किञ्चे'ति। तथा च शुद्धाजडसंविदपेक्षया विकारास्पदाशुद्धजडाविद्याया भेद एव परमार्थतः कुतो न निरूप्यत इत्यर्थः। तथा च परमार्थाविद्याविलासो भेदः सर्वोऽपि संविद एकस्या एव सकलार्थप्रकाशकत्वे सर्वदा भासेतेति दोषस्तदवस्थ इति भावः ॥ १०२ ॥ अविद्याया भिन्नाभिन्नत्वाभ्यामनिर्वचनीयत्वं निरस्य तस्याः स्वरूपानुपपत्तिमप्याह 'अपि चेय'मिति। विद्याऽभावरूपा विद्याभिन्नरूपा वाऽविद्याऽस्तु। तत्र प्रतियोगिभूता विद्या किंरूपेति विकल्पनं विमर्शनार्थम् ॥ १०३ ॥ तत्र विद्याया वेद्यरूपत्वे वेदितृस्वरूपत्वे वा दोषमाह 'वेद्यत्वे' इति। तयोरविद्यानिवर्तकत्वाभावात्तद्रूपाया विद्याया अप्यविद्यानिवर्तकत्वाभावप्रसङ्ग इत्यर्थः। 'ते'इत्यस्याग्रे 'मते' इति शेषः। संवित्तिरूपत्वे दोषमाह 'संविदेवेती'ति। संविदो नित्यसिद्धत्वात्सर्वगतत्वाच्च तदभावरूपाविद्याया असिद्धिरेवेति भावः ॥ १०४ ॥ विद्या संवित्, तद्विरुद्धाऽविद्येत्यत्र दूषणमाह 'किञ्चेय'मिति। दिवाकरकरव्याप्ते देशे दिवाकरे

यतोऽखिलं जगद्व्याप्तं विद्ययवाद्वितीयया ॥ १०५ ॥ अभावोऽन्यो विरुद्धो वा संविदोऽपि यदीष्यते। तदानीं संविदद्वैतप्रतिज्ञां दूरतस्त्यज ॥ १०६ ॥

( इत्यविद्यायाः स्वरूपानिर्वचनीयत्वानुपपत्तिवर्णनम् )

किश्चासौ कस्य ? जीवस्य, को जीवो यस्य सेति चेत्। नन्वेवमसमाधानमन्योन्याश्रयणं भवेत् ॥ १०७ ॥ न ते जीवादविद्या

---

वा तद्विरोधिनोऽन्धतमसस्येव विभ्व्या संविदा व्याप्ते सर्वत्र संविदि वा नाविद्यायाः समावेशसम्भव इत्यर्थः। विद्याभिन्नाऽविद्येत्यपि दुर्वचमेवाद्वैतवादिभिरिति सूच्यते 'अद्वितीयये'त्यनेन ॥ १०५ ॥ कल्पत्रयेऽपि दूषणमाह 'अभाव'इति। संविदभावादिरूपाऽनादिरविद्याऽस्ति चेत्, संविदेवैकाऽस्तीति भवदभिमतमद्वैतं न सिध्येदिति भावः। ननु संविन्मात्रं परमार्थसदिति परमार्थैक्यमेवास्माकमभिमतम्। अविद्याया अपरमार्थत्वेन तदनादित्वेऽपि नास्मदभिमताद्वैतोपरोध इति चेदत्र ब्रमः—अनादित्वेनोपगम्यमानाया अविद्यायाः कल्पकदोषान्तरायोगेनापारमार्थ्यायोगः। ब्रह्मण एव तत्कल्पकदोषत्वे दुर्घटत्वेन हेत्वन्तरानपेक्षत्वे वा मुक्तावपि तत्प्रसङ्गः। अनादिभावस्यात्यन्तनाशायोगाज्ज्ञाननिवर्त्यत्वस्याप्ययोग इति दिक्। एवमविद्यास्वरूपानुपपत्तिरुक्ता ॥१०६॥

अथ तस्या आश्रयानुपपत्तिमाह 'किश्चासा'विति। न विद्यते समाधानं यस्य तदसमाधानम्—असमाधेयम्। अविद्याकल्पितो जीवभावः, तस्मिन् सिद्ध एवाविद्यासिद्धिरिति जीवाविद्यापक्षे परमतेऽन्योन्याश्रयोऽसमाधेयः प्रसजतीत्यर्थः। अस्मन्मतेऽकल्पितत्वाज्जीवस्य तत्राविद्योपगमे न दोषः। किन्तु भवतामेवेति द्योत्यते 'ते'इति निर्देशेन। जीवादित्यस्याग्रेऽपि विनापदं योज्यम्। 'नर्ते'इति वा पाठः सम्भाव्यते। बीजाङ्कुर-

स्यात्, न च जीवस्तया विना। न बीजाङ्कुरतुल्यत्वं जीवो-त्पत्तेरयोगतः ॥ १०८ ॥ ब्रह्मणश्चेन्न सर्वज्ञं कथं तद् बंभ्रमीति ते(भोः)। अविद्याकृतदेहात्मप्रत्ययाधीनता न ते। ब्रह्मसर्वज्ञभावस्य, तत्स्वाभाविकताश्रुतेः ॥ १०९ ॥ भेदावभासगर्भत्वादथ सर्वज्ञता मृषा। तत एवामृषा कस्मान्न स्याच्छन्दान्तरादिवत् ॥ ११० ॥

---

न्यायेन स दोषः परिहार्य इत्यत्राह 'ने'ति। बीजाङ्कुरप्रवाहे त्वन्यान्यस्य बीजस्याङ्कुरस्य चोत्पाद्योत्पादकभावः। नैवं प्रकृते सम्भवति। एकजीवस्थानेऽनेकजीवप्रसङ्गाज्जीवानामुत्पादविनाशप्रसङ्गाच्चेति भावः ॥ १०७ ॥ १०८ ॥ नन्वस्तु तर्हि ब्रह्मैवाश्रयोऽविद्यायाः। तत्राह 'ब्रह्मण' इति। सर्वं सर्वदा सर्वथा यथावस्थितं स्वतः साक्षात्कुर्व-तस्तस्य नानाविधभ्रान्तिलक्षणाविद्याश्रयत्वं विरुद्धत्वान्न सम्भवती-त्यर्थः। ब्रह्म बम्भ्रमीतीति तेऽभिमतं कथं घटते? तस्य सर्वज्ञत्वेन भ्रमायोगादिति भावः। ननु संविन्मात्रं ब्रह्म। तस्य सार्वज्ञ्यमप्य-विद्याकल्पितं मिथ्याभेदप्रपञ्चसद्भावगोचरं भ्रान्तिलक्षणं मिथ्यैवेत्य-त्राह 'अविद्याकृते'ति। इत्यस्याग्रेऽभिमतेति शेषः। अविद्या-मूलाहङ्कारनिबन्धनता च ब्रह्मनिष्ठस्य सार्वज्ञ्यस्य न घटते, 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चे'ति तस्यानन्यो-पाधिकत्वश्रवणादित्यर्थः। ब्रह्मणः स्वभावोऽविद्या, तन्मूलत्वात्स्वाभा-विकत्वमित्यर्थकरणं तूपहास्यम्। स्वभावस्य दुरतिक्रमत्वात्सदा ब्रह्मणोऽ-ज्ञत्वादनिर्मोक्षप्रसङ्गश्च तथासतीति बोध्यम् ॥ १०९ ॥ एवमविद्या-कल्पितत्वं निरस्य सार्वज्ञ्यस्य भेदावभासगर्भत्वादयथार्थत्वमित्यपि निरस्यति 'भेदे'ति। अथशब्दो यद्यर्थकः। तत एव—भेदावभासगर्भत्वा-देव। अमृषा यथार्थविषया। पूर्वोत्तरार्धाभ्यां पूर्वोत्तरपक्षप्रतिपादनम्।

यथा शब्दान्तराभ्याससङ्ख्याद्याः शास्त्रभेदकाः । भेदावभासगर्भाश्च यथार्थाः, तादृशी न किम् ॥ १११ ॥ सर्वज्ञे नित्यमुक्तेऽपि यद्यज्ञानस्य सम्भवः । तेजसीव तमस्तस्मान्न निवर्तेत केनचित्

---

भेदस्य मिथ्यात्वमेवासिद्धम् । येन तदवभासकस्यायथार्थत्वं सिध्येदित्याशयः ॥ ११० ॥ 'शब्दान्तरादिव'दित्युक्तमेव विवृणोति 'यथे'ति । पूर्वमीमांसायां शब्दान्तराभ्याससङ्ख्यासंज्ञागुणप्रकरणान्तरैः कर्मभेदो निरूप्यते । ते शब्दान्तरादयः शास्त्रभेदकाः—तत्तद्विधिवाक्यस्य विभिन्नविभिन्नविधेयकत्वेन भेदव्यवस्थापकाः भेदकप्रमाणभूतास्ताश्रिकैर्मताः, तन्मूला विधेयभेदप्रत्ययाश्च यथार्था एव यथा; तथा सर्वज्ञताऽपि पारमार्थिकार्थभेदगोचरा यथार्थैव किं न स्यादित्यर्थः ॥ १११ ॥ परब्रह्मणि परमेश्वरे स्वतः सर्वज्ञेऽविद्याया असम्भव उक्तः । तत्र तदुपगमे बाधकं चाह 'सर्वज्ञ'इति । नित्यमुक्तस्वभावत्वात्सर्वज्ञत्वाच्च बन्धकाविद्याप्रतिभटे सर्वेश्वर एव यद्यविद्या विन्देत पदं गभस्तिमालिनीवान्धतमसं तर्हि न तस्या निवर्तकमन्यत्किञ्चिदपि सम्भवेदित्यनिवृत्तिप्रसङ्ग इत्यर्थः । ननु तत्त्वमसीतिवाक्यजन्यापरोक्षचिन्मात्रब्रह्मात्मैक्यसाक्षात्कारेणैवाविद्यानिवृत्तिरिति चेत्, नैतत्साधु, वाक्यस्यापरोक्षजनकत्वाभावात्, शुकादेः साक्षात्कारेणैवाविद्यानिवृत्तेः संसारोपलम्भविरोधात्, एकजीववादस्य च निराकरिष्यमाणत्वात् । किञ्च ब्रह्म स्वाविद्यया बम्भ्रमीति, जीवः स्वविद्यया तदुन्मोचयतीति विपरीतमिदमध्यात्मदर्शनं वेदान्तिविख्यातानाम् । स्वरूपव्याक्रियैवैतन्मतस्य पराक्रिया । तथा चामनन्ति स्म पराशरभट्टपादाः 'एतद्रामास्त्रं दलयतु कलिब्रह्ममीमांसकांश्च ज्ञप्तिर्ब्रह्मैतदुज्ज्वलदपि निजाविद्यया बम्भ्रमीति । तस्य भ्रान्तिं तां श्लथयति जिताद्वैतविद्यस्तु जीवो

॥ ११२ ॥ सर्वज्ञत्वादिवचनप्रामाण्यं व्यावहारिकम्। तात्त्विकं तु प्रमाणत्वमद्वैतवचसामिति। नियामकं न पश्यामो निर्बन्धात्त्वत्कृताद्दृते ॥ ११३ ॥ आश्रयप्रतियोगित्वे परस्परविरोधिनी। कथं वैकरसं ब्रह्म सदिति प्रतिपद्यते ॥ ११४ ॥ प्रत्यक्त्वेनाश्रयो ब्रह्म-

---

यद्यद्दृश्यं तद्वितथमिति ये ज्ञापयांचक्रुरज्ञाः ॥' इति ॥ ११२ ॥ ननु भेदकप्रमाणानां सर्वज्ञत्वादिवचनानामपि व्यावहारिकार्थभेदगोचराणां व्यावहारिकमेव प्रामाण्यम्! परमार्थप्रमाणत्वं त्वद्वैतवचसामेव। परमार्थस्तु परं ब्रह्म निर्विशेषसच्चिन्मात्रमेव। तत्र जीवेश्वरादिभेदोऽप्यविद्यया विनाऽनुपपन्न इति ब्रह्माश्रितैव साऽनाद्यतया मन्तव्येति शङ्कते 'सर्वज्ञत्वादी'ति। एतद्दूषयति 'नियामक'मिति। त्वत्कल्पितसङ्केतबलेन विना नैवंविधव्यवस्थायां किञ्चन प्रमाणमस्ति। शास्त्रं तु न त्वदुक्तार्थे प्रमाणम्। तथाहि—द्वैताद्वैतश्रुत्योः प्रकारनानात्वप्रकार्यैकत्वपरत्वान्नान्यतरस्यापि मिथ्यार्थकत्वम्। सामानाधिकरण्यश्रुतीनां च सर्वशरीरकसर्वात्मभूतब्रह्मैक्यपरत्वमिति न जीवभावादिकल्पिकाऽविद्या ब्रह्मण्युपगन्तव्येति च हार्दम्। विस्तृतं चैतदाकरादाविति विरम्यते ॥ ११३ ॥ ब्रह्मणोऽविद्याश्रयत्वे दूषणान्तरं चाह 'आश्रये'ति। प्रतियोगित्वमत्र विषयत्वरूपम्। कर्तृकर्मभावविरोधो युगपदेकत्रैकस्याभिप्रेतः। 'परस्परविरोधिनी'ति। सदिति सत्तामात्रमेकरसं स्वप्रकाशरूपं ब्रह्म कथं स्वविषयकाविद्यायतनं भवेदाकारभेदाभावादिति भावः। आकारभेदेनाविरोधमाशङ्कते 'प्रत्यक्त्वेने'ति। सन्मात्रमेव ब्रह्म स्वप्रकाशत्वरूपेणाहन्त्वरूपेण वा प्रत्यक्त्वेनाश्रयोऽविद्यायाः, ब्रह्मत्वेन विषय इति चेदयं रूपभेदः कथमायातस्तत्र? यद्यविद्यया, अन्योन्याश्रयप्रसङ्गः। स्वाभाविकोऽयमिति तु न वक्तुं शक्यते सवि-

रूपेण प्रतियोगि चेत्। रूपभेदः कुतस्त्योऽयं यद्यविद्याप्रसादजः। नतु साऽपि तदायत्तेत्यन्योन्याश्रयणं पुनः ॥ ११५ ॥ अवस्तुत्वादविद्यायाः...(नेदं तद्दूषणं यदि)। वस्तुनो दूषणत्वेन त्वया क्वेदं निरीक्षितम् ॥ ११६ ॥ ससा...उक्कारा (स्वसाध्यस्य पुरस्कारा) द्दोषोऽन्योन्यसमाश्रयः। न वस्तुत्वादवस्तुत्वादित्यतो नेदमुत्तरम् ॥ ११७ ॥ किञ्चाविद्या न चेत्...(वस्तु व्यवहार्यं कथं भवेत्)।...(नचासद्व्योम) पुष्पादि व्यवहारवदिष्यते ॥११८॥ नाप्यवस्त्विति चो......(क्तौ तु वस्तुत्वं सिध्यति ध्रुवम्।)...(निषिध्यते) समस्तेन नञा वस्त्विति चेत्...(मतम्) ॥ ११९ ॥ समस्तेन नञा वस्तु प्रथमं यन्निषिध्यते। प्रतिप्रसूतं व्यस्तेन

---

शेषत्वभिया परैरिति भावः। जीवाविद्यापक्ष इवात्राप्यन्योन्याश्रय इति पुनरित्यनेन द्योत्यते ॥११४॥११५॥ अत्र शङ्कते 'अवस्तुत्वा'दिति। अपरमार्थाविद्याया दुर्घटत्वं भूषणमेव। नातोऽन्यान्याश्रयणं दोषरूपमिति पूर्वार्धेन शङ्कानुवादः। परिहरति 'वस्तुन' इति। व्यावहारिक एव प्रपञ्चेऽन्योन्याश्रयादिर्दोषस्तत्र तत्र कथ्यते। न तु परमार्थे। तस्य व्यवहारागोचरत्वोपगमात्। तथा चाविद्यायामपि स दोषो भवेदेवेत्यर्थः ॥ ११६ ॥ 'ससा'इति। अत्राशुद्धिर्ग्रन्थपातश्च वर्तते। वस्तुत्वमवस्तुत्वं वाऽप्रयोजकम्। स्वसाध्यस्य—स्वाधीनसिद्धिकस्यार्थस्य स्वसिद्धौ हेतूकारादन्योन्याश्रयो दोषः प्रसज्यते। अतोऽवस्तुत्वादित्युत्तरं न समीचीनमित्यर्थः ॥ ११७ ॥ 'किञ्चे'ति। अत्र कतिपये श्लोका विलुप्तभूयोंऽशका उपलभ्यन्तेऽशुद्धिबहुलाश्च। दृश्यमानशकलानुसन्धानतः अविद्याया न वस्तुत्वं नाप्यवस्तुत्वमिति पक्षस्य प्रतिक्षेपः कृतोऽत्रेत्युन्नयामः। यथामति पूरितं शोधितं चास्माभिर्मूल एव

पुनस्तदिति वस्तुता ॥ १२० ॥ अतो न वस्तु ना...(वस्तु न सद्वाच्यं न चाप्यसत् ) ।...न क (अमानक)श्चकास्तीति विवक्षिर्या ( विवक्षीर्मा ) स्म जातुचित् ॥ १२१ ॥

( इत्यविद्याया आश्रयानुपपत्तिनिरूपणम् )

किञ्च प्रपञ्चनिर्वाहजननी येयमाश्रिता । अविद्या सा किमेकैव नैका वा तदिदं वद ॥ तदाश्रयश्च संसारी तथैको नैक एव वा ॥ १२२ ॥ सा चेदेका, ततस्सैका शुकस्य ब्रह्मविद्यया । पूर्वमेव निरस्तेति व्यर्थस्ते मुक्तये श्रमः ॥ १२३ ॥

( इत्यविद्याया एकानेकत्वविकल्प एकाविद्यापक्षदूषणं च )

स्यान्मतं नैव ते सन्ति वामदेवशुकादयः । यद्विद्यया निरस्तत्वान्नाद्याविद्येति चोद्यते ॥ १२४ ॥ मुक्तामुक्तादिभेदो हि

---

( ) चिह्नमध्ये प्रदर्शितमित्यनुसन्धेयम् ॥ ११८ ॥ ११९ ॥ ॥ १२० ॥ १२१ ॥

ब्रह्मणोऽविद्याश्रयत्वेऽनुपपत्तिमुक्त्वा जीवाविद्यापक्ष एव दूषणान्तरमाह 'किञ्चे'त्यादिना । अविद्या एका, उताहो अनेका, तदाश्रयो जीवोऽप्येकोऽनेको वेति विकल्पः ॥ १२२ ॥ तत्रैकाविद्यापक्षे दूषणमाह 'सा चे'दिति । शुको मुक्तो, वामदेवो मुक्त इति खलु श्रौती प्रसिद्धिः । तथा च शुकस्य ब्रह्मविद्ययैव प्रपञ्चहेतुरेकाऽविद्या विनष्टेति प्रपञ्चानुवृत्तिरनुपपन्ना । बाधितानुवृत्तिपक्षेऽपि भवादृशानामर्वाचीनानां पुनर्मुक्त्यर्थतत्त्वज्ञानसम्पादनायासो विफल एव । बाधितं हि स्वयमेव निवर्त्स्यति कञ्चित्कालमनुवर्तमानमपीति भावः ॥ १२३ ॥

अत्रैकजीववादेन परः प्रत्यवतिष्ठते 'स्यान्मत'मिति । एक एव तु जीवः । स एव स्वाप्नवत्प्रपञ्चं पश्यति । स्वप्नदृश्यपुरुषतुल्याः शुका-

कल्पितो मदविद्यया । दृश्यत्वान्मामकस्वप्नदृश्यभेदप्रपञ्चवत् ॥ १२५ ॥ यत्पुनर्ब्रह्मविद्यातस्तेषां मुक्तिरभूदिति । वाक्यं तत्स्वाप्न-मुक्त्युक्तियुक्त्या प्रत्यूह(ह्य)तामिति ॥ १२६ ॥

( इत्येकाविद्याकल्पितैकजीववादानुवादः )

नन्वीदृशानुमानेन स्वाविद्यापरिकल्पितम् । प्रपञ्चं साधयत्य-(न्न)न्यः कथं प्रत्युच्यते त्वया ॥ १२७ ॥ त्वदविद्यानिमित्तत्वे यो

---

द्यः । तन्मुक्तिवचनमपि स्वाप्नदेवदत्तमुक्तिवचनतुल्यमप्रमाणमेव । तस्य तत्त्वसाक्षात्कारत एवाविद्यानिवृत्तिर्भवितेति समुदिताशयः । अहमेवोक्तो जीवो मूलाविद्याकल्पितः । मदीयतूलाविद्याकल्पितास्त्वन्ये जीवाः । मुक्तामुक्तादिभेदोऽप्येवम्भूतएवेति 'मदविद्यये'त्यनेनाभि-प्रेतम् । प्रत्यूहतामिति' पाठे तद्वचनं कर्म, स्वाप्नमुक्त्युक्तियुक्तिबलेन सिद्धं प्रत्यनुमानं प्रत्यूहतां वाधतामित्यर्थः । प्रत्यूह्यतामिति पाठः सम्भाव्यते । तत्र च तद्वचनं निरुक्तयुक्त्या प्रतिरुध्यतामित्यर्थः । 'स्वाप्नमित्युक्तियुक्त्या' इति प्राचीनमुद्रितपाठस्तु न शुद्धः ॥ १२४ ॥ ॥ १२५ ॥ १२६ ॥

प्रतिक्षिपति वादमेनं 'नन्वीदृशे'ति । स्वाविद्यापरिकल्पितत्वं तव प्रपञ्चस्य च साधयन्नन्यस्तुल्यंनयेन त्वया कथं प्रतिक्षेप्य इत्यर्थः । तदीयानुमानस्याप्रयोजकत्वं चेत्तुल्यं तत्त्वदनुमानेऽपीति भावः । 'सर्वज्ञ-सिद्धिव'दिति । 'सुगतो यदि सर्वज्ञः कपिलो नेति का प्रमा । उभौ च यदि सर्वज्ञौ बुद्धिभेदः कथं तयोः ॥' इति न्यायेन परस्परविरो-धादुभयमपि परमार्थतो न सिध्यतीति यावत् । यद्वा सर्वेषां ज्ञानां जीवानामैक्यस्य सिद्धिरिवान्यस्य सर्वस्यैकाविद्याकल्पितत्वस्यापि सिद्धिर्न सेत्स्यति । साधकत्वाभिमतस्याभासत्वादिति भावः ॥१२७॥

हेतुस्ते विवक्षितः। स एव हेतुस्तस्यापि भवेत्सर्वज्ञसिद्धिवत् ॥१२८॥ इत्यन्योन्यविरुद्धोक्तिव्याहते भवतां मते। मुखमस्तीति यत्किञ्चित्प्रलपन्निव लक्ष्यसे ॥ १२९ ॥ यथा च स्वाप्नमुक्त्युक्तिसदृशी तद्विमुक्तिगीः। तथैव भवतोऽपीति व्यर्थो मोक्षाय ते श्रमः ॥ १३० ॥ यथा तेषामभूतैव पुरस्तादात्मविद्यया। मुक्तिर्भूतोच्यते तद्वत्परस्तादात्मविद्यया ॥ १३१ ॥ अभाविन्येव सा मिथ्या भाविनीत्यपदिश्यताम्। सन्ति च स्वप्नदृष्टानि दृष्टान्तवचनानि ते ॥ १३२ ॥ ननु नेदमनिष्टं मे यन्मुक्तिर्न भविष्यति। आत्मनो नित्यमुक्तत्वान्नित्यसिद्धैव सा यतः ॥ १३३ ॥ तदिदं शान्तिक-

---

॥ १२८ ॥ परिहसति परमतं 'इत्यन्योन्ये'ति। त्वमन्यान् बाधसे त्वदीयान्, त्वां चान्ये त्वदीया एवेति सुन्दोपसुन्दन्यायपराहतं युष्मन्मतमिति भावः ॥ १२९ ॥ प्रकारान्तरेणापि वादेऽस्मिन् दूषणमाह 'यथे'ति। तद्विमुक्तिगीः—शुकादेर्मुक्तिवाणी। शुकादिभिरप्यनधिगता मुक्तिर्युष्माभिः प्राप्येत्यसम्भवम्। स्वाप्नकल्पैव सा भवन्त्यपि। तद्वृथा प्रयासो युष्माकमित्यर्थः ॥ १३० ॥ मुक्त्यर्थप्रयासं परित्यज्य मुक्तिर्न भवितेत्येव साधयतेत्याह 'यथे'ति। यथाऽध्यात्मविद्यया शुकादीनां भूतैव मुक्तिरभूतेत्युच्यते, तथा भवतां ततः पश्चाद्भाविन्यपि सा मिथ्या, न भाविन्येव वस्तुत इत्युच्यतामित्यर्थः। 'सामर्थ्याभाविनी'तिप्राचीनमुद्रितपाठस्तु न समन्वितः। ननु मदीयतत्त्वज्ञाननिष्पद्यमानमुक्तिमिथ्यात्वं कथमित्यत्राह 'सन्ती'ति। भवदीयं तत्त्वज्ञानं नाविद्यानिवर्तकं तत्त्वज्ञानत्वात्, स्वाप्नतत्त्वज्ञानवदिति हि सुवचं भवदुपदर्शितदिशैवेति भावः ॥ १३१ ॥ १३२ ॥ मुक्तेरभावित्वप्रसङ्गोऽस्माकमिष्ट एवेति शङ्कते 'ननु नेद'मिति। सा—मुक्तिः ॥ १३३ ॥ परिहास-

र्मादौ वेतालावाहनं भवेत्। येनैवं सुतरां व्यर्थो ब्रह्मविद्यार्जनश्रमः ॥ १३४ ॥ अविद्याप्रतिबद्धत्वादथ सा नित्यसत्यपि । असतीवेति तद्व्यक्तिर्विद्याफलमुपेयते ॥ १३५ ॥ हस्तस्थमेव हेमादि विस्मृतं मृग्यते यथा । यथा तदेव हस्तस्थमवगम्योपशाम्यति ॥ १३६ ॥ तथैव नित्यसिद्धात्मस्वरूपानवबोधतः। संसारिणस्तथाभावो व्यज्यते ब्रह्मविद्यया ॥ १३७॥ हन्त केयमभिव्यक्तिर्या विद्याफलमिष्यते। स्वप्रकाशस्य चिद्धातोर्या स्वरूपपदे स्थिता॥ १३८॥संवित् किं सैव किं वाऽहं ब्रह्मास्मीतीति कीदृशी। यदि स्वरूपसंवित् सा, नित्यैवेति न तत्फलम् ॥ १३९॥ अथ ब्रह्माहमस्मीति संवित्तिर्व्यक्तिरिष्यते।

---

मुखेन परिहरति 'तदिद'मिति । भवत्प्रवृत्तिविरुद्धं भवदीयं मुक्त्यभावित्वसाधनमिति भावः ॥ १३४ ॥ अत्र परिहारं शङ्कते परः 'अविद्ये'ति । अयं भावः— यद्यपि मुक्तिर्नित्यसिद्धा ब्रह्मविद्यया नोत्पाद्या, अथाप्यविद्याप्रतिबद्धायास्तिरोभूतायास्तस्या अभिव्यक्त्यर्थं एव सफलो ब्रह्मविद्यापरिश्रमः, सत एवाप्रकाशमानत्वेनासत इव स्थितस्याभिव्यक्त्यर्थः प्रयत्नो यथा लोके सफलो दृष्टस्तथेति ॥ १३५ ॥ ॥ १३६ ॥ १३७ ॥ अत्र यद्यप्येकाविद्यापक्षे शुकस्य ब्रह्मविद्ययैवाविद्याप्रतिबन्धनिवृत्तेरन्यदीयप्रयत्नवैफल्यं स्थितम् । अथापि दूषणान्तरमाह 'हन्ते'त्यादिना । नानाऽविद्यापक्षसाधारणमिदम् । किमितरानपेक्षप्रकाशैकरूपस्य चित्तत्त्वस्य स्वरूपमेव विद्यासाध्याऽभिनिष्पत्तिः, प्रत्युताहं ब्रह्मास्मीति वृत्तिधीः साक्षात्काररूपेत्यर्थः । ब्रह्मास्मीतीत्यस्याग्रे वृत्तिधीरित्याहार्यम् । इति कीदृशी—इत्येवं जिज्ञासितप्रकारा । 'ब्रह्मास्मीतीति वृत्तिधी'रिति वा पाठः स्यात् । अपर इतिकारो विकल्पसमाप्तौ । आद्ये कल्पे दूषणमुच्यते 'यदी'त्यर्धेन

ननु ते ब्रह्मविद्या सा सैव तस्याः फलं कथम् ॥ १४० ॥ किञ्च सा तत्त्वमस्यादिवाक्यजन्या भवन्मते । उत्पत्तिमत्यनित्येति मुक्तस्यापि भयं भवेत् ॥ १४१ ॥ अपि च व्यवहारज्ञाः सति पुष्कलकारणे। कार्यं न जायते येन तमाहुः प्रतिबन्धकम् ॥१४२॥ इह किं तद्यदुत्पत्तुमुपक्रान्तं स्वहेतुतः । अविद्याप्रतिबद्धत्वादुत्पत्तिं

---

॥ १३८ ॥ १३९ ॥ द्वितीये दूषणमुच्यते 'अथे'ति । संवित्तिः— साक्षात्कारः । न हि ब्रह्मविद्यासाध्यं प्रकाशान्तरं मुक्तौ भवतेष्यते । तत्सैव तस्याः फलमिति वक्तव्यम् । तन्न संभवीति भावः ॥ १४० ॥ अत्र कल्पे दूषणान्तरं चाह 'किञ्चे'ति । नित्यशुद्धबुद्धमुक्तात्मस्वभावस्याभिव्यक्तिर्वृत्तिरूपा चेत्तस्या उत्पादविनाशयोगित्वात्तन्निवृत्तौ पुनरविद्या समुन्मिषेदिति संसृतिभयानतिवृत्तिप्रसङ्ग इत्यर्थः । ननु पूर्वाविद्यां विनाश्य विद्या स्वयमपि नश्यति । अविद्यानिवृत्त्या च न पुनर्भवप्रसङ्ग इति चेत्; अत्र ब्रूमः -अनादिभावस्य नाशायोगात् तत्त्वसाक्षात्कारेणाविद्याया नात्यन्तिकोच्छेदः शक्यक्रियः । सावशेषोच्छेदे तु सूक्ष्मरूपेणावस्थितायास्तस्या अभिव्यक्तेर्निवृत्तौ पुनः स्थूलतयोन्मेषप्रसङ्गः । न चानादिभावरूपाया अपि मिथ्यात्वादेव आत्यन्तिकोच्छेदः क्रियते विद्ययेति वाच्यम्, तन्मिथ्यात्व एव विगानात्; युक्तेराभासत्वाच्छास्त्रस्य चान्यपर्यायादिति दिक् ॥ १४१ ॥ अथाविद्यायाः नित्यमुक्तभावव्यक्तिप्रतिबन्धकत्ववचनमपि परेषामनुपपन्नमित्याह 'अपि चे'ति । सति पुष्कलकारणे कार्योत्पत्तेर्विघटकत्वं हि प्रतिबन्धकत्वम् । मुक्तेरनिष्पाद्यत्वात्तत्प्रतिबन्धकत्वमविद्याया न घटते । संसारिणश्च विषयप्रावण्यदशायां तत्त्वसाक्षात्कारपुष्कलकारणसम्पत्तेरेवासिद्ध्या तदनुदय इति न तत्रापि प्रतिबन्धकत्वं तस्या घटत इत्यर्थः । संविदः

न प्रपद्यते ॥ १४३ ॥ न मुक्तिर्नित्यसिद्धत्वात्, न ब्रह्मास्मीति धीरपि । न हि ब्रह्माय(ह)मस्मीति संवित्पुष्कलकारणम् । संसारिणस्तदाऽस्तीति कथं सा प्रतिबध्यते ॥ १४४ ॥ यतः सा कारणा-

---

पुष्कलकारणमिति तत्पुरुषः । सिद्धान्ते तु विद्याप्रागभावरूपाया अविद्याया न विद्याप्रतिबन्धकत्वम् । कर्मणस्तु विद्यानुत्पत्तिप्रयोजकस्य निष्कामकर्मभिर्निरासे स्वकारणाद्विद्यानिष्पत्तिः । विद्यामाहात्म्याच्च बन्धककर्मनिवृत्तौ कर्मणा सङ्कुचितप्रसरणस्य स्वाभाविकमसङ्कुचितं प्रसरणं धर्मभूतज्ञानस्य सदा मुक्ताविति विशेषो बोध्यः । अत्र परे प्रत्यवतिष्ठेरन्—नन्वस्मन्मतेऽपि वस्तुतत्त्वाविशदप्रकाशकरी नानाभ्रमहेतुरविद्याऽनादिरिष्यते । विद्यया तन्निवृत्तौ च स्वाभाविको विशदावभासः । विशदप्रकाशप्रतिरोधकत्वादेव च प्रतिबन्धकत्ववाचोयुक्तिस्तस्या इति । तान् प्रति ब्रूमः—विशदप्रकाशप्रतिरोधकत्वं किन्तदुत्पत्तिनिरोधकत्वम्, उताहो तन्निवृत्तिकरत्वम् । ब्रह्मस्वरूपभिन्नत्वे विशदप्रकाशस्य ब्रह्मणः सविशेषत्वप्रसङ्गात्तदभिन्नत्वे वाच्येऽनुत्पाद्यत्वादेव तस्य तत्प्रतिरोधकत्वायोगान्नाद्यः कल्पः । द्वितीये च ब्रह्मस्वरूपस्यैव निवृत्तिप्रसङ्गः । वैशद्यमेव निवर्तते, प्रकाशस्त्वनुवर्तत इति च निर्विशेषवादिना वक्तुं न शक्यते । किञ्च विशदप्रकाशप्रतिरोधिकायां सत्यामविद्यायां कथं साक्षात्कारो भवेत् ? सोऽप्यविशदश्चेत्प्राथमिकश्रावणज्ञानस्येवाविद्यानिवर्तकत्वायोगः । किञ्चाविद्यानिवृत्तौ विशदसाक्षात्कारः, तेनैव चाविद्यानिवृत्तिरित्यन्योन्याश्रयः । किञ्चाविद्यानिवृत्त्यनन्तरभाविनो विशदानुभवस्य प्रागसत्त्वे मुक्तेरनित्यत्वम्, सत्त्वे च संसारानुपपत्तिः प्रसज्यते । नच निवृत्ताविद्यत्वमेव स्वरूपप्रकाशस्य वैशद्यमिति

भावादिदानीं नोपजायते। न पुनः प्रतिबद्धत्वादस्थाने तेन तद्वचः॥ १४५॥

(इत्येकजीववादे मुक्त्यर्थप्रवृत्तिवैयर्थ्यादिनिरूपणम्)

किञ्चैको जीव इत्येतद्वस्तुस्थित्या न युज्यते। अविद्यातत्समाश्लेषजीवत्वादि मृषा हि ते॥ १४६॥ प्रातिभासिकमेकत्वं प्रतिभासपराहतम्। यतो नः प्रतिभासन्ते संसरन्तः सहस्रशः॥ १४७॥ आसंसारसमुच्छेदं व्यवहाराश्च तत्कृताः। अबाधिताः

---

वाच्यम्, स्वप्रकाशमात्रवपुषि सदा विद्योतमाने निर्विशेषे चिन्मात्रे ब्रह्मणि अविद्यान्वयायोगात्प्रागपि वैशद्यस्यैवोपगन्तव्यत्वात्। दुर्घटत्वात्तत्र पदमश्नुत्यविद्येति चेत्तर्हि तत एव मुक्तावप्यविद्यान्वयप्रसक्तिरिति मुक्तस्यापि भयं भवेदेवेति॥ १४२॥ १४३॥ १४४॥ १४५॥

एकजीववादे दूषणान्युक्तानि। अथ तस्योपलम्भबाधितत्वमाह 'किञ्चैक' इति। एको वा जीवः परमार्थो नेष्यते। मिथ्याऽविद्याकल्पितत्वेन जीवभावस्य मिथ्यात्वात्। तथा च मिथ्याभूतस्यैकस्यानेकस्य वा जीवस्योपगमे न विशेषो विनाऽभिनिवेशादित्यर्थः॥ १४६॥ एको जीव इति किमेकस्यैव प्रतिभासादुपगम्यते, आहोस्विन्नानात्वेन भासमानस्यापि तस्य युक्त्यैकत्वं निष्कृष्यत इति विकल्पमभिप्रेत्याद्यं कल्पं दूषयति 'प्रातिभासिक'मिति। स्पष्टोऽर्थः॥ १४७॥ नानाजीवभानस्य न व्यवहारकाल एव बाध्यत्वं शुक्तिरूप्यादेरिवेत्याह 'आसंसारे'ति। तत्कृताः—जीवभेदप्रयोज्याः। स्वप्नवृत्तविलक्षणाः—स्वाप्नार्थव्यवहारविलक्षणाः। अयमाशयः—यथा स्वाप्नार्थव्यवहाराणां स्वप्न एवासत्त्वं पाश्चात्यबाधान्निश्चीयते व्यवहारदशायामेव, नैवं तदैव जीवभेदप्रयुक्तव्यवहारभेदानां बाधो निश्चितः। किन्त्वन्यजीवकृतस्योपकारस्यापका-

प्रतीयन्ते स्वप्नवृत्तविलक्षणाः ॥ १४८ ॥ तेन यौक्तिकमेकत्वमपि युक्तिपराहतम् । प्रवृत्तिभेदानुमिता विरुद्धमितिवृत्तयः । तत्तत्स्वात्मवदन्येऽपि देहिनोऽशंक्यनिह्नवाः ॥ १४९ ॥ यथाऽनुमेया-

---

रस्य वा सत्त्वप्रतीत्यैव आप्राज्ञादावालगोपालं तदनुगुणप्रवृत्तिसंरम्भो दृश्यतेऽनुवर्तमान आप्रलयात् । व्यवहारकालेऽवाध्यत्वाच्च जीवभेदस्य व्यावहारिकत्वमेव परप्रक्रिययाऽपि, न प्रातिभासिकत्वम् । जीवभेदो मिथ्या प्रतिभासमानत्वात्स्वाप्नपुंभेदवदित्यनुमानं च व्यवहारदशावाध्यत्वेन सोपाधिकम् । तथा च सूत्रं 'वैधर्म्याच्च न स्वप्नादिव'दितीति ॥ १४८ ॥ उक्तेनैव हेतुना यौक्तिकैकत्वनिष्कर्षमपि निराकरोति 'तेने'ति । तेन—जीवभेदस्य व्यवहारकालावाधेन । सर्वे जीवा अहमेव जीवत्वादहमिव, सर्वाणि शरीराणि मयैवात्मवन्ति शरीरत्वात् मच्छरीरवदिति जीवैक्ययुक्तिर्जीवभेदसाधकयुक्तिपराहतेत्यर्थः । जीवभेदयुक्तेः प्राबल्यं च व्यवहाराबाध्यविषयत्वादुपलम्भानुगुण्याच्चेति बोध्यम् । ननु का सा जीवनानात्वयुक्तिः ? तामाह 'प्रवृत्तिभेदे'ति । तत्तद्देहगतविलक्षणप्रवृत्तिभेदानुमिताः तत्तदनुगुणविरुद्धज्ञानसङ्कल्पप्रयत्नवन्तोऽन्ये देहिनोऽपि स स स्वात्मेव स्वशरीरप्रवृत्त्यनुगुणज्ञानादिमान् प्रत्यात्मसिद्धो न निह्नोतुं शक्यन्ते इत्यर्थः । मितिवृत्तिग्रहणं सङ्कल्पस्याप्युपलक्षणम् । परशरीराणि सात्मकानि चेष्टावत्त्वात् स्वशरीरवदिति सात्मकत्वेऽनुमिते तदात्मनां स्वात्मभेदः परिशेषात् सिध्यति, परशरीरप्रवृत्तिहेतुभूतसङ्कल्पप्रयत्नस्य स्वासमवेतत्वे सति गुणत्वात्स्वभिन्नसमवेतत्वानुमानात् । स्वासमवेतत्वं च तस्य स्वस्य तदा भिन्नसङ्कल्पप्रवृत्तिमत्त्वादेव सुनिश्चेयमिति बोध्यम् ॥ १४९ ॥ साध्यानां परात्मनां निदर्शनीभूतस्वात्मभिन्नत्वे निदर्शनं प्रदर्शयति

द्वह्न्यादेर(रा)नुमाना विलक्षणाः। प्रत्यक्षं ते (क्ष्यन्ते)तथाऽन्येभ्यो जीवेभ्यो न पृथक् कथम् ॥ १५० ॥ न चेच्चेष्टाविशेषेण परो वोद्धाऽनुमीयते । व्यवहारोऽवलुप्येत सर्वो लौकिकवैदिकः ॥ १५१ ॥ न चौपाधिकभेदेन मेयमातृविभागधीः । स्वशरीरेऽपि तत्प्राप्तेः शिरःपाण्यादिभेदतः ॥ १५२ ॥ त(य)था तत्र शिरःपा-

---

'यथे'ति । आनुमानाः—अनुमानप्रयोजकाः सपक्षदृष्टाः वह्नयोऽनुमेयात्पर्वतीयवह्नेर्यथा भिन्नाः व्याप्तिग्रहणकालेऽध्यक्षिताः, तथाऽनुमेयेभ्यः परदेहस्थात्मभ्यः शरीरप्रवृत्तिचेतनसङ्कल्पप्रयत्नपूर्वकत्वव्याप्तिग्रहकाले गृहीतं त्वदीयात्मस्वरूपं त्वच्छरीरप्रवृत्तिहेतुसङ्कल्पादिमद्भिन्नत्वेन कुतो न प्रत्यक्षम्? अपि तु प्रत्यक्षमेवेति यावत् । जीवानामैक्यसाधनं वह्नीनामैक्यसाधनवदप्रयोजकमुपलम्भवाधितं चेति हार्दम् ॥ १५० ॥ परात्मसु साधकमुक्तम् । तदनुपगमे वाधकमप्याह 'न चे'दिति । परदेहेषु परात्मनश्चेष्टाविशेषैरनुकूलप्रतिकूलोदासीनानूहित्वैव हि तत्तदनुगुणा व्यवहाराः दृष्टा लोके, जीवभेदप्रयुक्ता एव चाधिकार्यनधिकारिविभागादिव्यवहाराः शास्त्रीया दृष्टाः । तेषामुपरोधः प्रसज्यते जीवभेदानुपगम इति भावः ॥ १५१ ॥ ननु संविन्मात्रमेकमेव नानोपाधियोगान्नानाजीवतया भाति । औपाधिकजीवभेदप्रयुक्त एव व्यवहारभेदः, स्वभावासङ्करश्च । उपाधिभेदोऽपि कल्पित एवेत्याशङ्कामनूद्य परिहरति 'न चौपाधिके'ति । मेयविभागनिर्देशो निदर्शनार्थः प्रासङ्गिकः । औपाधिकभेदेन व्यवस्थोपगमे शिरःपाणिपादोपाधिभेदेनापि तत्तदवच्छिन्नचितो भेदप्रसङ्गः । तथा च पादे मे वेदना, शिरसि सुखमित्यादिप्रतिसन्धानानुपपत्तिरिति यावत् ॥ १५२ ॥ ननूपाधिभेदेऽप्यभेदाच्चितः प्रतिसन्धानमिति चेत्तत्राह 'तथे'ति ।

णिपादादौ वेदनोदये । अनुसन्धानमेकत्वे, तथा सर्वत्र ते भवेत् ॥ १५३ ॥ प्रायणान्नरकक्लेशात् प्रसूतिव्यसनादपि । चिरातिवृत्ताः प्राग्जन्मभोगा न स्मृतिगोचराः ॥ १५४ ॥ युगपज्जायमानेषु

---

तथेत्यनिष्टसमुच्चयार्थः । यथेति वा स्यात् । वस्तुतः सर्वशरीरेषु चित ऐक्यात्सर्वगतसुखादिप्रतिसन्धानप्रसङ्ग इत्यर्थः । न च शरीरभेदस्यै-वात्मभेदकत्वम्, ननु करचरणादिभेदस्येति वाच्यम्, सौभर्यादौ शरीरभेदेऽपि प्रतिसन्धानस्य दृष्टत्वात्तस्यापि भेदकत्वायोगात् । नच तत्तत्पुरुषीयकर्माधीनदेहस्यैव तत्तद्भोगावच्छेदकत्वमिति व्यवस्था । सौभर्यादेर्युगपन्नानादेहयोगोऽपि तत्कर्मकृत एव । नत्वस्मदादेस्तथेति वाच्यम्, औपाधिकात्मभेदवादे प्रतिकर्मव्यवस्थाया अपि दुर्घट-त्वात्; उपाधेस्तदीयत्वं तत्कर्मणा, उपाधिव्यवस्थयैव च तत्कर्मव्यव-स्थितिरिति परस्पराश्रयाच्चेति दिक् । अतो जीवभेदेनैव वास्तवेन भोगा-दिसाङ्कर्यं परिहार्यमित्याशयः ॥ १५३ ॥ ननु शरीरभेदेऽप्यात्मैक्यात्प्रति-सन्धाने जन्मान्तरेऽनुभूतस्यापि जन्मान्तरे प्रतिसन्धानं स्यादित्यत्राह 'प्रायणा'दिति । प्रवलदुःखानुभवस्य संस्कारप्रमोषकत्वं दृष्टं लोके प्रवलज्वराद्यर्दितस्याधीतविस्मरणादिना । जन्मभेदे च मरणनरकगर्भ-वासजन्मकालप्रभवक्लेशवाहुल्येन संस्कारविनाशात्पूर्वजन्मानुभूतस्मरणं जन्मान्तरे न जायत इत्यर्थः । कालदैर्घ्यस्यापि संस्कारप्रमोषकत्व-मभिप्रेत्योक्तं चिरातिवृत्ता इति । जीवनादृष्टबलात्तु संस्कारविशेषस्या-विनष्टत्वं जातमात्र उद्भूतत्वं च कल्प्यते । केषाञ्चित्तु पुण्यातिशयेन संस्काराप्रमोषात्पूर्वजन्माद्यविस्मरणमपि लोकशास्त्रसम्प्रतिपन्नमेवेति वोध्यम् ॥ १५४ ॥ 'युगप'दिति । एकक्षण एव जायमानेषु नाना-

……(सुखदुःखादिषु स्फुटः)। आश्रयासङ्करस्तत्र कथमैकात्म्यविभ्रमः ॥ १५५ ॥

(इत्येकाविद्याकल्पितैकजीववादनिरासः)

न च प्रातिस्विकाविद्याकल्पितस्वस्वदृश्यकैः। जीवैरनेकैरप्येषा लोकयात्रोपपद्यते ॥ १५६ ॥ परवार्ताऽनभिज्ञास्ते स्वस्वस्वप्नैकदर्शिनः। कथं प्रवर्तयेयुस्तां सङ्गाद्येकनिबन्धनाम् ॥ १५७ ॥

(इति नानाविद्याकल्पितनानाजीववादनिरासः)

---

सुखदुःखानुभवेषु कालदैर्घ्यादिसंस्कारप्रमोषकविरहेऽपि अस्मरणादि आत्मनामसङ्करात् अनैक्यादेव व्यवस्थाप्यम्। तथा चैकात्म्यधियो भ्रान्तिरूपाया अपि नोदयावसरः, आत्मभेदस्यैव स्फुटप्रतिभानादिति-भावः। एवमेकाविद्याकल्पितैकजीववादे दूषणानि प्रपञ्चितानि ॥ १५५ ॥

नानाऽविद्याकल्पितनानाजीववादमपि दूषयति 'न चे'ति। अविद्याकल्पिताश्रितो नानाजीवभेदाः। ते च स्वस्वाविद्याकल्पितं पदार्थजातं पश्यन्ति पृथक् पृथक् स्वप्न इव। व्यावहारिका अन्ये जीवा अन्येन न ज्ञायन्ते। स्वेन दृश्या जीवास्तु स्वाप्नवत्प्रातिभासिका एवेत्येतत्पक्षसारः। अत्र चान्यं जीवं तद्गुणदोषादि वा व्यावहारिकमन्यो जीवस्तथाभूतो न जानाति चेत्तर्हि तत्समागमादिप्रसङ्गाभावात् सहानुभूत्यैकसाध्योऽनुवृत्तो लोकव्यवहारः कथं निर्वर्त्येतेत्यर्थः। स्वाविद्याकल्पितमेव पश्यन्तीत्युक्त्या परवार्ताऽनभिज्ञत्वं—व्यावहारिकजीवान्तरवृत्तानभिज्ञत्वं सिध्यति। न हि ते जीवान्तराविद्याकल्पिताः। किन्तु मूलाविद्याकल्पिता एव। लोकव्यवहारोऽपि प्रातिभासिक एवेति चेत्तर्हि एकजीववादोन्मेषः। तत्र च दोष उक्त एवेति हार्दम् ॥ १५६ ॥ १५७ ॥

किञ्च स्वयंप्रकाशत्वविभुत्वैकत्वनित्यताः। त्वदभ्युपेता बाधेरन् संविदस्तेऽद्वितीयताम् ॥ १५८ ॥ संविदेव न ते धर्माः, सिद्धायामपि संविदि। विवाददर्शनात्तेषु; तद्रूपाणां च भेदतः ॥ १५९ ॥ न च ते भ्रान्तिसिद्धास्ते येनाद्वैताविरोधिनः । तत्त्वावेदकवेदान्तवाक्यसिद्धा हि ते गुणाः ॥ १६० ॥ आनन्दस्वप्रकाशत्वनित्यत्वमहिमाद्यथ । ब्रह्मस्वरूपमेवेष्टं, तत्रापीदं विविच्यताम् ॥ १६१ ॥

---

संविन्मात्रेऽविद्याकल्पितो मेयमातृभेद इति परमतं विस्तरेण प्रतिक्षिप्तमेतावता । अथ संविदि पराभिमतं निर्विशेषत्वं प्रतिक्षिपति 'किञ्चे'त्यादिना । ते इत्यस्याग्रे मतामिति शेषः । भवदभिमतैरेव धर्मैः सविशेषत्वं संविदः प्रसज्यत इति भावः ॥ १५८ ॥ स्वरूपाभेदात्तेषां न संविदः सधर्मत्वमिति शङ्कामनूद्य निराचष्टे 'संविदेवे'ति । सम्प्रतिपन्नेऽपि संवित्स्वरूपे तन्नित्यत्वविभुत्वैकत्वस्वप्रकाशत्वादौ बौद्धनैयायिकमीमांसकादीनां विवादात् स्वरूपभेदाच्च तेषां धर्माणां संवित्तो न संप्रतिपन्नसंविदभिन्नत्वं तेषां युज्यत इत्यर्थः । स्वरूपभेदश्चात्मसिद्धौ निरूपितोऽनुसन्धेयः ॥ १५९ ॥ नन्वेवमपि तेषामपरमार्थत्वात्परमार्थद्वितीयराहित्यं सुरक्षितमेवेति चेत्तत्राह 'न च ते'इति। तवापि तत्त्वेदम्परश्रुत्यन्तसिद्धास्ते धर्मास्संविदो नित्यत्वादय इत्येव मतम्। तत्तैः सविशेषत्वं दुर्वारम् । तेषां बाधे तुल्यनयेन संविदोऽपि बाधः स्यादिति द्योत्यते 'तत्त्वावेदके'त्यादिना ॥ १६० ॥ ब्रह्मस्वरूपाभेदस्यैव तद्धर्मेषु पराभिमतत्वात्तत्र प्रकारान्तरेणापि दूषणमाह 'आनन्दे'ति । आनन्दशब्दो भावप्रधानः । महिमा—विभुत्वम् । आदिपदादेकत्वादि ग्राह्यम् । अथेति यद्यर्थकम् । अव्ययानामनेकार्थत्वात् ॥ १६१ ॥ विकल्पयति

ब्रह्मेति यावन्निर्दिष्टं तन्मात्रं किं सुखादयः। अथवा तस्य ते, यद्वा त एव ब्रह्मसंज्ञिनः ॥ १६२ ॥ आद्ये तत्तत्पदाम्नानवैयर्थ्यं वेदलोकयोः। पूर्वोक्तनीत्या भेदश्च, जगज्जन्मादिकारणम् ॥१६३॥ अभ्युपेत्यैव हि ब्रह्म विवादास्तेषु वादिनाम्। द्वितीये सैव तैरेव ब्रह्मणः सद्वितीयता ॥ १६४ ॥ तृतीये ब्रह्म भिद्येत तन्मात्रत्वात्पदे पदे। तत्समूहोऽथवा ब्रह्म तरुवृन्दवनादिवत् ॥ १६५ ॥ प्रकर्षश्च

---

परमतं 'ब्रह्मेती'ति। किमानन्दत्वादयो ब्रह्मस्वरूपमात्रम्, उत तन्निष्ठा धर्माः, आहोस्वित्तेषामेव प्रत्येकं ब्रह्मसंज्ञा, समुदितानां वेति विकल्पः ॥ १६२ ॥ 'आद्ये' इति। अत्यन्ताभेदेऽनतिरिक्तार्थकत्वात् 'आनन्दो ब्रह्म' 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यादौ सहपाठस्यानर्थक्यं प्रसज्यते। न हि घटः कलश इति सहपाठः। ब्रह्मस्वरूपैक्यासम्भवं च तेषु धर्मेषु स्मारयति 'पूर्वोक्ते'ति। द्वितीये कल्पे तु ब्रह्मणः सविशेषत्वप्रसङ्ग इत्याह 'द्वितीय'इति। सैव—भवदभिमतविरुद्धैव ॥ १६३ ॥ १६४ ॥ तृतीये प्रत्येकसमुदायकोट्योः प्रत्येककोटिं दूषयति 'तृतीये' इति। प्रत्येकशो ब्रह्मत्वमित्यत्र नाना ब्रह्म प्रसज्यते सत्यं ब्रह्म, ज्ञानं ब्रह्म, अनन्तं ब्रह्म, आनन्दो ब्रह्मेति; खण्डो मुण्डः पूर्णशृङ्गो गौरित्यत्रेवेत्यर्थः। तन्मात्रत्वात्—तत्तन्मात्रस्वरूपत्वाद्ब्रह्मणः। सत्यत्वादिसमुदायो ब्रह्मेत्यत्र दोषमाह 'तत्समूह' इति। 'विनाशव'दिति मुद्रितः पाठोऽशुद्धः। तरुवृन्दस्य वनत्ववत्सत्यादिसमुदायस्य ब्रह्मत्वे, समुदायस्य समुदाय्यनन्यत्वे प्रत्येकपक्षोक्तदूषणानतिवृत्तिः, अतिरिक्तत्वे सांशत्वं गुणत्वं च प्रसज्यते ब्रह्मण इति भावः ॥ १६५ ॥ ननु सत्यादिवाक्यमखण्डार्थपरं स्वरूपलक्षणवाक्यत्वात्, दिवा दिवि प्रकृष्टप्रकाशः सूर्यः, निशि च तथाभूतश्चन्द्र इतिवदिति निर्विशेषब्रह्मसिद्धिरित्यत्राह 'प्रकर्षश्चे'ति। दृष्टा-

प्रकाशश्च भिन्नावेवार्कवर्तिनौ । तेन न क्वापि वाक्यार्थो विभागोऽस्ति निदर्शनम् ॥ १६६ ॥ जाड्यदुःखाद्यपोहेन यद्येकत्रैव वर्तिता । ज्ञानानन्दादिशब्दानां न सतस्सद्वितीयता ॥ १६७ ॥ अपोहाः किं न सन्त्येव, सन्तो वा, नोभयेऽपि वा । सत्त्वे सत्सद्वितीयं स्यात् जडाद्यात्मकतेतरे (ता परे) ॥ १६८ ॥ सदसद्व्यतिरेकोक्तिः पूर्वमेव पराकृता । तथात्वे च घटादिभ्यो ब्रह्मापि न विशिष्यते

---

न्तोऽपि न केवलरव्यादिस्वरूपमात्रपरः, किन्तु रव्यादिव्यपदेशगोचरार्थस्यासाधारणाकारप्रदर्शनपर इति निर्विशेषाद्वैतरूपोऽखण्डः समानाधिकरणवाक्यार्थो निदर्शनभूतो नैवास्तीतिभावः । क्वापि—क्वचिदपि समानाधिकरणवाक्ये । अविभागः—अखण्डः ॥ १६६ ॥ अत्र शङ्कते परः 'जाड्ये'ति । ज्ञानादिपदं न ज्ञानत्वादिविशेषं प्रतिपादयति । किन्तु जडत्वाद्यपोहमेव । अपोहस्तु व्यावृत्तिरभावोऽधिकरणस्वरूपमेवेति न ब्रह्मणः सविशेषत्वप्रसङ्गः । जडादितत्तत्पदार्थप्रतियोगिकव्यावृत्तिस्वरूपत्वबोधनेन चार्थवत्ता पदानामिति शङ्कितुराशयः । नेत्यतः पूर्वम् 'अतश्चे'ति योज्यम् । परपक्षानुवादकः श्लोकोऽयम् ॥ १६७ ॥ अत्र विकल्प्य दोषमाह 'अपोहा' इति । नोभये—न सन्तो नाप्यसन्तः, सदसद्विलक्षणा इति यावत् । अपोहानां सत्त्वे दोषमाह 'सत्त्वे' इति । अपोहानां सत्त्वे तैः सतः सद्वितीयता स्यादित्यर्थः । असत्त्वे दूषणं 'जडाद्यात्मके'ति । जाड्याद्यपोहानामभावे जाड्यादिप्रसङ्ग इति यावत् । 'सत्त्वसत्सद्वितीयः स्याज्जडाद्यात्मकतेतरे' इति मुद्रितपाठोऽशुद्धः । ॥ १६८ ॥ तृतीयं प्रतिक्षिपति 'सदस'दिति । सद्व्यतिरेकेऽसत्त्वम्, असद्व्यतिरेके च सत्त्वं व्यवस्थितमिति सदसद्भिन्नत्वं कस्यापि न सम्भवतीति पूर्वमेवोक्तमित्यर्थः । दूषणान्तरमाह 'तथात्व' इति । अपो-

॥ १६९ ॥ किञ्चापोह्यजडत्वादिविरुद्धार्थासमर्पणे । नैव तत्तदपोह्येत तदेकार्थैः पदैरिव ॥ १७० ॥ प्रतियोगिनि दृश्ये तु या भावान्तरमात्रधीः । सैवाभाव इतीहापि सद्भिस्ते सद्वितीयता ॥ १७१ ॥

( इति सविशेषत्वोपपादनेन संविदो निर्विशेषत्वनिरसनम् )

---

ह्यानां ब्रह्मस्वरूपत्वे सदसद्विलक्षणत्वे च ब्रह्मणः सदसद्विलक्षणत्वं प्रसज्यते प्रपञ्चस्येवेति भावः ॥ १६९ ॥ दूषणान्तरमाह 'किञ्चे'ति। जडादिव्यावर्तकधर्मबोधनमन्तरा जडादिव्यावृत्तिर्न प्रतिपादयितुं शक्यते सत्यादिपदैर्जडादिपर्यायपदैरिवेति व्यावर्तकधर्मबोधकत्वमवर्जनीयम् । तथाच तैर्धर्मैः सविशेषत्वं ब्रह्मणो दुर्वारमित्यर्थः । तत्तत्–जडत्वादि, अपोह्येत–व्यावर्त्येत ॥ १७० ॥ ननु व्यावर्तकधर्मवत्त्वं न बोध्यते । किन्तु जडादिव्यावृत्तिरूपत्वमेव बोध्यते ज्ञानादिपदैर्ब्रह्मणः । तन्न जडत्वादिप्रसङ्ग इति चेत्तत्राह 'प्रतियोगिनी'ति । योग्ये प्रतियोगिन्यनुपलभ्यमानेऽधिकरणमात्रज्ञानमेव तदभाव इति ज्ञानविशेषरूपत्वादभावस्य ज्ञानविशेषरूपैः सत्यादिपदलक्ष्यार्थैरभावैर्भावरूपैः सविशेषता ब्रह्मणः प्रसज्यत इत्यर्थः । अभावस्य ज्ञानविशेषरूपत्वमिति मतविशेषेणेदम् । यद्वा भावान्तरमात्रधीरिति उपलभ्यमानं भावान्तरमित्यर्थे पर्यवसन्नम् । योग्ये प्रतियोगिन्यनुपलभ्यमाने तत्राधिकरणे यद्भावान्तरमुपलभ्यते तदेव प्रतियोगिव्यपेक्षयाऽभावव्यपदेशभागिति अधिकरणवृत्तिधर्मान्तररूपत्वादभावानां तैः सविशेषत्वं प्रसज्यत इति भावः । द्रव्येऽभावो धर्मरूपः । धर्मस्य तु स्वपरनिर्वाहकत्वेन स्वरूपमेवाभावः, सति सम्भवे धर्मान्तरं वेति यथोपलम्भं व्यवस्था । यस्मिन् प्रतीयमाने इतरारोपो न घटते, तस्यैव तदभावरूपत्वम् । सत्स्वरूपे प्रतीयमान एव भेदानामध्यासाच्च तत्र तस्यैव नेतराभाव-

भूतभौतिकभेदानां सदसद्व्यतिरेकिता । कुतोऽवसीयते किं नु प्रत्यक्षादेरुतागमात् ॥ १७२ ॥ प्रत्यक्षादीनि मानानि स्वस्वमर्थं यथायथम् । व्यवच्छिन्दन्ति जायन्त इति या(ता)वत् स्वसाक्षिकम् ॥ १७३ ॥ यथाऽग्रतः स्थिते नीले नीलिमान्यकथा न, धीः ।

---

रूपत्वं सम्भवि । न चाविद्ययाऽविशदं भासमाने सति भेदभ्रमः । अविद्यानिवृत्तौ विशदं भासमाने तु न स इति विशदस्वरूपस्याभावरूपत्वं सम्भवतीति वाच्यम् । वैशद्यस्य स्वरूपत्वे पूर्वमप्यविद्यादिभेदारोपायोगात् । स्वरूपातिरिक्तत्वे तु तस्यैवाभावरूपत्वं न स्वरूपस्येति प्रसङ्गात् । किञ्च निर्विशेषे स्वप्रकाशे वस्तुनि विशदाविशदभानमेव दुर्वचम् । सविशेषे तु कतिपयाकारेण भानमविशदम्, सर्वाकारभानं विशदमिति विशेषः । किञ्च ब्रह्मणो द्रव्यत्वे सधर्मकत्वम्, अद्रव्यत्वे तु कस्यचिद्धर्मरूपत्वं प्रसज्यते । द्रव्याद्रव्यविलक्षणत्वं तु न सम्भवीत्यादिकमनुसन्धेयमत्र । इहापीत्यपिना सत्यादिपदानामपोहलक्षणायामपि न निर्विशेषत्वसिद्धिः । लक्षणाकल्पनायास एव विशिष्यत इति द्योत्यते । एवमपोहरूपाणामपि सत्यत्वादीनां सदसदनिर्वचनीयत्वं निरस्तम् ॥ १७१ ॥

अथ प्रपञ्चस्यापि प्रसङ्गात्सदसदनिर्वचनीयत्वं परमतं निरस्यति 'भूते'त्यादिना । 'प्रत्यक्षादीनी'ति । स्वस्वप्रमेयं यथायथं तत्तदसाधारणाकारतो विजातीयसजातीयान्तरव्यावृत्तमवगमयन्ति प्रत्यक्षादीनीति प्रसिद्धम् । तदसाधारणाकारेण सद्भाव एव वस्तूनां प्रमाणानि तानि, न तु सदसदनिर्वचनीयत्व इति भावः ॥ १७२ ॥ १७३ ॥ एतदेवोपपादयति 'यथे'ति । नीले नीलमतिः, स्फटिके धवलमतिश्च नैकविषया, किन्तु परस्परव्यावृत्तगुणविषयैव; तथा क्षीरे मधुरधीः,

एकाकारा, न हि तथा स्फटिके धवले मतिः ॥ १७४ ॥ क्षीरे मधुरधीर्यादृक्, नैव निम्बकषायधीः । व्यवहाराश्च नियताः सर्वे लौकिकवैदिकाः ॥ १७५ ॥ सत्यं प्रतीतिरस्त्यस्या मूलं नास्तीति चेन्न तत् । सा चेदस्ति तस्या मूलं कल्प्यतां कार्यभूतया ॥१७६॥ क्लृप्तं चेन्द्रियलिङ्गादि तद्भावानुविधानतः । यौगपद्यक्रमायोगाद्व्य-वच्छेदविधानयोः ॥ १७७ ॥ ऐक्यायोगाच्च भेदो न प्रत्यक्ष

---

निम्बे कषायधीश्च । तथा चार्थभेदालम्बनत्वं ज्ञानानां स्थितमिति भावः । नीले नीलबुद्धिरेकाकारा एकविषया । तत्र नीले न नीलान्यगुणप्रसङ्गः । धवलमतिस्तु ततो भिद्यते भिन्नाकारेत्यर्थः । नैवेत्यस्याग्रे तादृगिति आक्षिप्यते । नैवमिति वा पाठः स्यात् । तत्तद्वस्त्वसाधारणाकारभेदेऽबा-धितप्रतीतिमुक्त्वा व्यवहारमपि तादृशमुपन्यस्यति प्रमाणतया 'व्यव-हारा' इति । अबाधितप्रत्यक्षादिप्रमाणतन्मूलव्यवहारबलाद्वस्तूनां तत्त-दसाधारणाकारेण सत्त्वमेवोपेयमिति भावः ॥ १७४ ॥ १७५ ॥ शङ्काऽत्रानूद्यते 'सत्य'मिति । परिहरति 'न त'दिति । साधु इति शेषः । कार्यबलात्तदनुगुणं मूलमबाधितप्रतीतीनां यथार्थ्यव्यवस्थापक-मनुमीयतामिति भावः ॥ १७६ ॥ अदुष्टेन्द्रियादेरेव मितियाथार्थ्ये हेतुत्वमन्वयव्यतिरेकसिद्धं नापलप्यं चेत्याह 'क्लृप्त'मिति । वस्तुभेदो निर्दुष्टेन्द्रियरूपेण प्रत्यक्षप्रमाणेनैव गृह्यते इति यावत् । अत्र शङ्कते 'यौगपद्ये'ति । व्यवच्छेदो भेदग्रहणम् । विधानं स्वरूपग्रहणम् । प्रात्यक्षिकप्रमितेर्युगपदेवाधिकरणंतन्निष्ठभेदोभयग्राहित्वं न सम्भवति, अधिकरणग्रहणस्य प्रतियोगिग्रहणनैरपेक्ष्यात्, भेदग्रहणस्य तु तत्सापेक्ष-त्वात् । प्रथममधिकरणस्वरूपं गृहीत्वाऽथ भेदं गृह्णातीति क्रमोऽपि न सम्भवति, प्रमितेः क्षणिकत्वाद्विरम्य व्यापारायोगाद्वा । स्वरूपभेद-

इति यो भ्रमः । भेदेतरेतराभावविवेकाग्रहणेन सः ॥ १७८ ॥ स्वरूपमेव भावानां प्रत्यक्षेण परिस्फुरत् । भेदव्याहारहेतुः स्यात् प्रतियोगिव्यपेक्षया ॥ १७९ ॥ यथा तन्मात्रधीर्नानानास्तिव्याहार-साधनी । ह्रस्वदीर्घत्वभेदा वा यथैकत्र षडङ्गुले ॥ १८० ॥ एवं व्यवस्थितानेकप्रकाराकारवत्तया । प्रत्यक्षस्य प्रपञ्चस्य तद्भावोऽ-

---

योस्तद्ग्रहणयोश्चैक्यमपि न सम्भवति। अतः स्वरूपग्रहस्यैव प्रत्यक्षप्रमि-तिरूपत्वम्, भेदग्रहस्य तु भ्रान्तिलक्षणत्वमेवेति भावः। शङ्कां प्रतिक्षिप-तीमाम् 'इती'त्यादिना। भेदोऽन्योन्याभावः, इतरेतराभावः—अन्यस्मि-न्नन्यस्य संसर्गाभावः । यद्वा भेदः—संसर्गाभावभेदः प्रागभावादिः । इतरेतराभावः—भेदः । तयोः स्वरूपयाथात्म्याज्ञानप्रयुक्तो निरुक्तविधः परेषां भ्रम इत्यर्थः ॥ १७७ ॥ १७८ ॥ भेदस्य याथात्म्यं तावदाह 'स्वरूपमेवे'ति। स्वरूपं—स्वासाधारणाकारः । तदेव गृह्यमाणं प्रतियोगि-स्मरणसहकारेणेतरस्माद्भेदव्यवहारनिदानम्, यथा कम्बुग्रीवादिमत्त्व-मेव घटस्य पटाद्भेद इति भावः ॥ १७९ ॥ अत्र निदर्शनं 'यथे'ति। यथा भूतलस्वरूपज्ञानमेव घटाद्यनुपलम्भे सति तत्तत्स्मरणसहकारि घटादिशून्यताव्यवहारसाधनं मतमभावस्याधिकरणस्वरूपत्ववादिनां तथेत्यर्थः । सिद्धान्ते त्वधिकरणवृत्तिधर्मविशेषरूपत्वं भेदादेरिति विवेकः । एकस्यैव प्रतियोगिभेदेन नानाव्यवहारसाधनत्वं निदर्शन-मुखेन द्रढयति 'ह्रस्वे'ति । एकत्रैव षडङ्गुलिमिते वस्तुनि तदपेक्षया दीर्घं पदार्थान्तरमपेक्ष्य ह्रस्वव्यवहारं ह्रस्वं तदपेक्ष्य दीर्घव्यवहारं च तद्वस्तुज्ञानमेव तत्तत्प्रतियोगिस्मरणसहकारेण जनयति हीति भावः ॥ १८० ॥ 'एव'मिति । स्वरूपलक्षणस्य भेदस्याद्यक्षण एव धर्मि-ग्रहणे ग्रहसम्भवाद्भेदव्यवहार एव प्रतियोगिस्मरणस्यापेक्षितत्वाच्च

शक्यनिह्नवः ॥ १८१ ॥ आगमः कार्यनिष्ठत्वादीदृशेऽर्थे न तु प्रमा । प्रामाण्येऽप्यन्वयायोग्यपदार्थत्वान्न बोधकः ॥ १८२ ॥ नासत् प्रतीतेः, बाधाच्च न सदित्यपि यन्न तत् । प्रतीतेरेव सत् किं न, बाधान्नासत् कुतो जगत् ? । तस्माद विद्ययैवेयमविद्या भवता-

नानाकारविभिन्नपदार्थस्वरूपस्य तत्त्वं प्रत्यक्षप्रमाणप्रमितं नापलपनार्ह-मिति भावः । असाधारणाकाररूपस्य भेदस्य स्वपरनिर्वाहकत्वान्नान-वस्था । तत्प्रागभावस्तत्पूर्वावस्थारूपः । ध्वंसस्तदुत्तरावस्थारूपः । तद-त्यन्ताभावस्तदधिकरणस्वभावविशेषात्मकः । सामयिकाभावः काल-विशेषावच्छिन्नतत्तदधिकरणस्वरूपात्मकः । एषां च तत्तत्प्रतियोग्युप-रक्तत्वेन व्यवहारे पुनस्तत्तत्प्रतियोगिस्मरणापेक्षेति विवेकोऽत्र बोध्यः ॥ १८१ ॥ एवं भेदप्रपञ्चस्य सत्त्व एव प्रत्यक्षं प्रमाणम्, न सद-सदनिर्वचनीयत्व इति स्थापितम् । शास्त्रस्यापि न तत्र प्रामाण्यमित्याह 'आगम' इति । आगमः—शास्त्रं, कार्यनिष्ठत्वात्—कार्यार्थप्रतिपादनत-त्परत्वात्, ईदृशेऽर्थे—कार्यानन्वयिनि सिद्धे प्रपञ्चानिर्वचनीयत्वादौ, न प्रमा—न प्रमाणम् । मीमांसकमतेनेदम् । सिद्धान्तिमतेनाप्याह 'प्रामाण्येऽपी'ति । सिद्धार्थे शास्त्रस्य प्रमाणभावे सत्यपि शास्त्रस्य प्रमा-णशब्दमात्रस्य वा नानिर्वचनीयत्वादौ प्रमाणत्वम्, न सन्नाप्यसन्नि-त्यादेरनन्वितार्थकत्वेन शब्दबोधाजनकत्वादित्यर्थः । तत् तत्प्रतिपाद-कतयेव प्रतीयमानोऽपि सन्दर्भोऽविरुद्धार्थपरतया नेय इति हार्दम् ॥ १८२ ॥ अथानुमानस्यापि सदसदनिर्वचनीयत्वे न प्रमाणत्वमि-त्याह 'नास'दिति । प्रपञ्चः सदसद्भिन्नः प्रतीयमानत्वे सति बाध्यमा-नत्वादिति युक्तिरपि न सती, प्रपञ्चः सदसत्त्ववान् तत एवेत्याभास-समानयोगक्षेमत्वादिति भावः । निरुपाधिकसत्त्वासत्त्वयोर्विरोधोऽत्रा-

ऽऽश्रिता ॥ १८३ ॥ किञ्च भेदप्रपञ्चस्य धर्मो मिथ्यात्वलक्षणः । मिथ्या वा परमार्थो वा नाद्यः कल्पोऽयमञ्जसा ॥ १८४ ॥ तन्मिथ्यात्वे प्रपञ्चस्य सत्यत्वं दुरपह्नवम् । पारमार्थ्येऽपि तेनैव तवाद्वैतं विहन्यते ॥ १८५ ॥

(इति प्रपञ्चस्य सदसद्व्यतिरेकित्वरूपमिथ्यात्वनिरसनम्)

सर्वाण्येव प्रमाणानि स्वं स्वमर्थं यथोदितम् । असतोऽर्थान्तरेभ्यश्च व्यवच्छिन्दन्ति भान्ति नः ॥ १८६ ॥ तथाहीह घटोऽस्तीति

---

भिप्रेतः । 'तस्मा'दिति । अनिर्वचनीयत्वस्याप्रामाणिकत्वात्तदुपपादकाविद्याकल्पनं भवदज्ञानकार्यमेवेत्यर्थः ॥ १८३ ॥ प्रमाणाभावादूषितं सदसदनिर्वचनीयत्वरूपं मिथ्यात्वं प्रकारान्तरेणापि दूषयति 'किञ्चे'ति । भेदमिथ्यात्वस्य मिथ्यात्वे भेदस्य सत्यत्वं सिद्धम् । भेदमिथ्यात्वस्य सत्यत्वे ब्रह्माभिन्नस्यापि कस्यचित्सत्यत्वोपगमादपसिद्धान्तोऽद्वैतव्याघातश्चेत्यर्थः । न च भेदमिथ्यात्वं सत्यं ब्रह्मस्वरूपमेवेति नाद्वैतहान्यादीति वाच्यम् । तथासति ब्रह्मणो मिथ्यावस्तुगुणत्वप्रसङ्गादित्यन्यत्र विस्तरः ॥ १८४ ॥ १८५ ॥

एवं मिथ्यात्वं निरस्य भेदप्रपञ्चस्य सत्यत्वं व्यवस्थापयन् पराभिमतं सदद्वैतं प्रतिक्षेप्तुमुपक्रमते 'सर्वाण्येवे'ति । 'यथोदित'मित्यत्र 'यथायथ'मिति स्याद्वा । यथोदितमित्यस्य न प्रत्यक्षादेरनिर्वचनीयप्रत्यायकत्वमिति पूर्वनिरूपितानतिक्रमेणेत्यर्थः ॥ १८६ ॥ स्वस्वप्रमेयस्यासतोऽभावाद्भावान्तरेभ्यश्च व्यावृत्ताकारताप्रत्यायकत्वं प्रमाणानां प्रसिद्धमिति यदुक्तम्, तदेवोपपादयति 'तथा हीहे'ति । इहेदानीं घटोऽस्तीति प्रतीतिस्तदानीं तत्र स्वासाधारणाकारेण घटस्य सत्तामेवावगाहते, नाभावम्—नासत्ताम्, न वा पटत्वाद्यर्थान्तरधर्मवत्तामि-

येयं धीरुपजायते। सा तदा तस्य नाभावं पटत्वं वाऽनुमन्यते ॥ १८७ ॥ नन्वस्तीति यदुक्तं किं तन्मात्रं घट इत्यपि। अर्थान्तरं वा, तन्मात्रे सदद्वैतं प्रसज्यते। अर्थान्तरत्वे सिद्धं तत् सदसद्भ्यां विलक्षणम् ॥ १८८ ॥ यद्येवमस्ति ब्रह्मेति ब्रह्मौपनिषदं मतम्। घटवत्सदसद्भ्यामनिर्वाच्यं तदापतेत् ॥ १८९ ॥ आनन्दसत्य-ज्ञानादिनिर्देशैरेव वैदिकैः। ब्रह्मणोऽप्यतथाभावस्त्वयैवैवं समर्थितः ॥ १९० ॥ सदसद्व्यतिरेकोक्तिः प्रपञ्चस्य च हीयते। यद्यथा

---

त्यर्थः। तथा चासद्व्यावृत्तं सदन्तरव्यावृत्तं च वस्तुतः सन्तं घटादि-कमेव प्रतिपादयन्ति प्रतीतयः घटोऽस्ति, पटोऽस्तीत्यादय इति सन्ना-नात्वमेव सिध्यति, न सदद्वैतमिति भावः ॥ १८७ ॥ अत्र चोदयति 'नन्वस्ती'ति। घटपटादिपदेनापि अस्तीत्युक्तं सन्मात्रमुच्यते चेत्सिद्धं सदद्वैतम्। सतोऽर्थान्तरं चेत्तेन बोध्यते तर्हि घटादेरापतितं सदसद-निर्वाच्यत्वम्। प्रतीतिबलाच्चासद्व्यावृत्तिरिति भावः ॥ १८८ ॥ एत-द्दूषयति 'यद्येव'मिति। 'अस्ति ब्रह्मे'त्युपनिषत्प्रतिपाद्यमपि ब्रह्म तुल्यनयात्सदसदनिर्वचनीयं प्रसज्यते इत्यर्थः ॥ १८९ ॥ एवं सर्वत्र समानाधिकरणवाक्येऽनभिमतविरुद्धाकारप्रसङ्ग इत्याह 'आनन्दे'ति। 'आनन्दो ब्रह्मे'त्यादौ आनन्दादिमात्रं ब्रह्मपदेनोच्यते चेत्पदान्तरा-म्नानवैयर्थ्यम्, तदतिरिक्तबोधने त्वानन्दानानन्दविलक्षणत्वादि ब्रह्मणः प्रसज्यत इत्यर्थः। आनन्दपदेनानानन्दव्यावृत्तिः ब्रह्मपदेन चानन्द-व्यावृत्तिर्भवेदिति यावत् ॥ अतथाभावः–अनानन्दत्वादिः ॥ १९० ॥ परस्यानिष्टान्तरं च प्रसञ्जयति 'सदस'दिति। सदसद्व्यतिरिक्तः प्रपञ्च इत्यपि स्वार्थात्प्रच्यवेत। निरुक्तरीत्या सदसद्व्यतिरिक्तान्यत्वमेव प्रप-ञ्चस्य सिध्येदिति भावः। 'य'दिति। यत्किञ्चिदपि वस्तु यथा–येन

किञ्चिदुच्येत तत्सर्वस्य तथा भवेत् ॥ १९१ ॥ तस्मादस्तीति संवित्तिर्जायमाना घटादिषु । तत्तत्पदार्थसंस्थानपारमार्थ्याव-बोधिनी ॥ १९२ ॥ सजातीयविजातीयव्यवच्छेदनिबन्धनैः । स्वैः स्वैर्व्यवस्थितै रूपैः पदार्थानां तु या स्थितिः । सा सत्ता न स्वतन्त्राऽन्या तत्राद्वैतकथा कथम् ॥ १९३ ॥

(इति सदद्वैतनिरासेन भेदप्रपञ्चस्य पारमार्थिकत्वसमर्थनम्)

न च नानाविधाकारप्रतीतिः शक्यनिह्नवा । न वेद्यं वित्तिधर्मः

---

प्रकारेणोच्यते, तस्य सर्वस्य तथा—त्वदुपदर्शितरीत्या तत्प्रकारराहित्यं प्रसज्यत इत्यर्थः ॥१९१॥ घटोऽस्तीत्यादौ सत्तामात्रस्य विशेष्यत्वं, तत्र घटादेर्भेदस्यारोपितत्वं च पराभिमतं प्रतिक्षिपन्निव स्वाभिमतार्थं प्रतिपादयति 'तस्मा'दिति। स्पष्टोऽर्थः ॥ १९२ ॥ 'सजातीये'ति । विजातीय-सजातीयान्तरव्यावर्तकेन स्वस्वासाधारणाकारेण तस्य तस्य पदार्थस्य या स्थितिः—कालसम्बन्धः प्रमाणसम्बन्धो वा, सा तत्तत्पदार्थस्य सत्ता । सा च प्रतिपदार्थं व्यवस्थिता, धात्वर्थत्वात्कर्तृपरतन्त्रा च । तत्सत्तायां स्वतन्त्रत्वमद्वैतं च भवदभिमतं नैव युक्तमिति भावः ॥ १९३ ॥

एवं प्रमेयभूतसन्नानात्वं व्यवस्थाप्य प्रमितिनानात्वमपि व्यवस्थापयति पराभिमतचिदद्वैतनिरासेन 'न चे'ति । विषयाश्रयविशेषैः प्रत्यक्षादिस्वगतविशेषैश्चानुभूयमानं संविन्नानात्वमपि न क्षेप्तुं शक्यमित्यर्थः । अत्र परैः संविदो निर्विशेषत्वे प्रोक्तमनुमानमनूद्य प्रतिक्षिपति 'न वेद्य'मिति । संविदि निर्विशेषत्वरूपः साध्यधर्म उपगम्यते न वा, उपगम्यते चेन्निर्निमित्त एकस्मिन् धर्मे पक्षपातस्ते प्रसज्यते—एको धर्म उपगम्यते, अन्ये प्रामाणिका अपि नोपगम्यन्त इतीत्यर्थः । तथा चाभ्युपगतनिर्विशेषत्वविरोधप्रसङ्ग इति हार्दम् । 'पक्षबाधः

स्यादिति यत्प्रागुदीरितम् ॥ १९४ ॥ तेनापि साधितं किञ्चित् संविदोऽस्ति न वा त्वया । अस्ति चेत् पक्षपातः स्यात् न चेत्ते विफलः श्रमः ॥ १९५ ॥ अतः स्वरसविस्पष्टदृष्टभेदास्तु संविदः । यथा रथादिभिर्बाह्यै (यथावस्थायिभिर्बाह्यै)र्नैक्यं यान्ति घटादिभिः ॥ १९६ ॥ सहोपलम्भनियमो न खल्वैकैकसंविदा । नचेदस्ति

---

स्या'दिति पाठान्तरम् । नोपेयते चेत्साध्यधर्मः, तर्हि तत्साधनार्थ-संरम्भवैयर्थ्यं प्रसज्यत इत्यर्थः ॥ १९४ ॥ १९५ ॥ 'अत' इति । 'यथा रथादिभिर्बाह्यैर्नैक्यं याती'ति पूर्वमुद्रितपाठोऽशुद्धः । अतः-संविन्निर्विशेषत्वाद्यनुमानप्रतिक्षेपात्, स्वरसतो विषयाश्रयस्वगतविशेषैर्विशिष्टा विलक्षणत्वेन स्फुटं प्रतीयमानाः संविदः यथावस्थितैर्बाह्यैर्घटादिभिरर्थैर्नैक्यं यान्तीत्यर्थः । वेद्यवेदित्रोर्वित्त्यभेदमतं प्रतिक्षेप्तुमयमुपक्षेपः ॥ १९६ ॥ 'सहोपलम्भनियम' इति । एतच्छ्लोकस्योत्तरार्धं 'न चास्ति चितिसामान्यं सर्वसंवेदनास्पद'मिति वा 'न चिदस्ति ससामान्यं सर्वसंवेदनास्पद'मिति वा सम्भाव्यते । संविदा सहैवोपलभ्यमानत्वाज्ज्ञेयज्ञात्रोस्तदभेद इति न युक्तम्, तत्तत्संवेदनविशेषेण सहोपलम्भनियमाभावात्, एकं ज्ञानं विना ज्ञानान्तरेणाप्यर्थोपलब्धेः । विशेषेण सहोपलम्भस्य व्यभिचारेऽपि चित्सामान्येन सहोपलम्भनियमोऽस्तीति चेत्, तदपि न सम्यक्, विशेषव्यतिरिक्तस्य चित्सामान्यस्यैवानुवृत्तस्य सर्वविषयविज्ञानविषयस्याभावादित्यर्थः । यथामुद्रितपाठे त्वयमर्थः—सहोपलम्भनियमो न सिध्यति चेत् सर्वं ससामान्यविशेषं ज्ञातृज्ञेयात्मकं ज्ञेयजातं ज्ञानभिन्नतयाऽस्त्येवेत्यर्थः । एवं मितिमातृमेयभिदायाथार्थ्यं समर्थितं भवति । अयं श्लोकः 'सहोपलम्भनियमा'दित्यादिना 'प्रपञ्चः स्फुटमञ्चती'त्यन्तेन अनूद्यमानपरपक्ष-

ससामान्यं सर्वं संवेदनास्पदम् ॥ १९७ ॥ सहोपलम्भनियमान्ना-न्योऽर्थः संविदो भवेत् । यदेतदपराधीनस्वप्रकाशं तदेव हि । स्वयम्प्रकाशताशब्दमिति वृद्धाः प्रचक्षते ॥ १९८ ॥ यस्मिन्नभास-मानेऽपि यो नामार्थो न भासते । नासावर्थान्तरस्त(रं त)स्मान्मि-थ्येन्दुरिव चन्द्रतः ॥ १९९ ॥ अभासमाने विज्ञाने न चात्मार्था-वभासनम् । इति संविद्विवर्तत्वं प्रपञ्चः स्फुटमञ्चति ॥ २०० ॥ ............मैवं परिभवः ( मैवं स्वार्थान् परिभवः ) प्रत्यक्षेण

---

प्रतिक्षेपभागे सुसङ्गतः । तस्मादुपलभ्यमानसंवित्सिद्धिभागान्तिम-श्लोकानन्तरं संयोजनीयः । अयं च श्लोको ज्ञेयज्ञात्रोः संविदैक्यसाधं-कसहोपलम्भनियमरूपहेतोरसिद्धिप्रतिपादक इति ध्येयम् ॥ १९७ ॥ अत्र निरसनीयमतानुवादः 'सहोपलम्भनियमा'दित्यादिना । अर्थप्र-काशे नियमेन संविदो भानसिद्ध्यर्थं तस्याः स्वप्रकाशत्वमाह 'यदेत'-दिति । स्वयम्प्रकाशताप्रवृत्तिनिमित्तकः शब्दो यस्य तत् स्वयंप्रकाश-ताशब्दं स्वयंप्रकाशशब्दवाच्यम् । अनेन सहोपलम्भनियमः सिद्धः । 'यस्मि'न्निति । संवित्प्रकाशाभावेऽर्थस्यापि न प्रकाश इति संवित्प्रका-शाभावव्यापकाभावप्रतियोगिप्रकाशस्यार्थस्य संविदनन्यत्वं सिध्यति, विम्बाप्रकाशेऽप्रकाशमानस्य प्रतिविम्बस्येव विम्बानन्यत्वमित्यर्थः । 'अभासमान' इति । आत्मा—ज्ञाता, अर्थः—ज्ञेयम् । संविद्विवर्तत्वम्—संविदधिष्ठानकारोपविषयत्वं, प्रपञ्चः—वेद्यवेदितृप्रपञ्चः, अञ्चति—गच्छति, प्राप्नोतीति यावत् । अधिष्ठानसत्तातिरिक्तसत्ताशून्यत्वलक्षणं संविदनन्यत्वं प्रपञ्चस्य विवक्षितम् । नीलपीतादिबाह्याकारो वासना-कल्पितो ज्ञाने इति योगाचारपक्षः, नीलापीताद्यर्थोऽविद्याकल्पित-स्तत्रेति मायिपक्षश्च निराचिकीर्षितोऽत्रेति बोध्यम् ॥ १९८ ॥ ॥ १९९ ॥ २०० ॥ एतत्पक्षं प्रतिक्षिपति 'मैव'मित्यादिना । एवं

बलीयसा। संरक्ष्यमाणभेदास्ते नानुमानानुवर्तिनः ॥ २०१ ॥ तथा हीदमहं वेद्मीत्यन्योन्यानात्मना स्फुटम्। त्रयं साक्षाच्चकास्तीति सर्वेषामात्मसाक्षिकम् ॥ २०२ ॥ प्रत्यक्षप्रतिपक्षं च नानुमानं प्रवर्तते। न हि वह्नेरनुष्णत्वं द्रव्यत्वादनुमीयते ॥ २०३ ॥ किञ्च हेतुर्विरुद्धोऽयं सहभावो द्वयोर्यतः। तवापि न हि संवित्तिः स्वात्मना सह भासते ॥ २०४ ॥ नीलाद्युपप्लवापेतस्वच्छचिन्मात्र-

---

ज्ञातृज्ञेयलक्षणार्थान् मा स्म परिभवः, न प्रतिक्षिपेरित्यर्थः। प्रतिक्षेप एषां कुतो न घटते? तत्राह 'प्रत्यक्षेणे'ति। बलवत्तरप्रत्यक्षप्रमाणसंरक्ष्यमाणा एते न त्वदीयसंविदैक्यानुमानानुवर्तिनो ज्ञातृज्ञेयभेदा इत्यर्थः। बलीयस्त्वं च प्रत्यक्षस्योपजीव्यत्वेन। अर्थेषु संविदैक्यसाधनार्थं हि अर्थानां संविदश्च स्वरूपग्रहणं तावदपेक्षितम्। तत एव च मिथस्तेषां भेदोऽपि सिद्ध इति प्रत्यक्षबाधितमनुमानं न प्रवर्तत इत्यर्थः। अत्र ज्वालाभेदानुमानवैषम्यप्रकारो विवृत आत्मसिद्धौ, तत एवानुसन्धेयः ॥ २०१ ॥ 'तथा ही'ति। अन्योन्यानात्मना—परस्परभिन्नत्वेन, त्रयं —ज्ञातृज्ञेयज्ञानलक्षणपदार्थत्रयम्। अत्र श्रीपराशरभट्टार्यश्रीसूक्तिरनुसन्धेया 'अहमिदमभिवेद्मीत्यात्मवित्त्योर्विभेदे स्फुरति यदि तदैक्यं बाह्यमप्येकमस्तु। प्रमितिरपि मृषा स्यान्मेयमिथ्यात्ववादे यदि तदपि सहेरन् दीर्घमस्मन्मतायुः' इति ॥ २०२ ॥ 'प्रत्यक्षे'ति। प्रतिपक्षं—विरुद्धम्। वह्नेरनुष्णत्वानुमानमिव प्रत्यक्षबाधितमर्थज्ञात्रोः संविदैक्यानुमानं भवदीयमिति प्रोक्तं भवति ॥ २०३ ॥ किञ्च साहित्यं भेदनियतं ज्ञानार्थयोर्हेतुघटकं तदभेदसाधने विरुद्धमित्याह 'किञ्चे'ति। संवित्संविदा सहोपलभ्यत इति हि तवापि न सम्मतम्। तत्संविदा सहोपलभ्यमानमर्थजातं नियमेन तद्भिन्नमेव भवेदिति यावत् ॥ २०४ ॥

सन्ततिः । स्वापादौ भासते, नैवमर्थः संवेदनात् पृथक् ॥ तेन संवेदनं सत्यं संवेद्योऽर्थस्त्वसन्निति ॥ २०५ ॥ तदेतदपरामृष्ट-स्ववाग्बाधस्य जल्पितम् । सहोपलम्भनियमो येनैवं सति हीयते ॥ २०६ ॥ यस्माद्दते यदाभाति भाति य(त)स्माद्दतेऽपि तत् । घटाद्दतेऽपि निर्भातः पटादिव घटः स्वयम् ॥ २०७ ॥

( इति चिदद्वैतनिरासेन मितिमातृमेयभिदायाथार्थ्यसमर्थनम् )

[ एतावानेव संवित्सिद्धिभाग उपलभ्यते ]

इति श्रीमद्विशिष्टाद्वैतसिद्धान्तप्रवर्तनधुरन्धरपरमाचार्यश्रीमद्भग-वद्यामुनमुनिसमनुगृहीते सिद्धित्रये संवित्सिद्धिः ॥

---

अत्र शङ्कते 'नीलाद्युपप्लवे'ति । अर्थोपरागमन्तरा ज्ञानं भासते स्वापादौ । नैवमर्थो ज्ञानाद्विना कदाऽपि भासते । तत्प्रतिबिम्बस्येवार्थजातस्य मिथ्यात्वं संविदि कल्पितस्येति भावः ॥ २०५ ॥ परिहरति 'तदेत'-दिति । अर्थं विना संविदो भाने तां विनाऽर्थस्यापि भानं सिद्धप्रायमिति सहोपलम्भनियमरूपभवदुक्तहेत्वसिद्धिरिति पूर्वापरस्ववचनविरोधमपि न परामृष्टवान् भवानेवंवदन्निति यावत् ॥ २०६ ॥ हेत्वसिद्धिमेवोप-पादयति 'यस्मा'दिति । 'निर्भात'इति शत्रन्तात्पञ्चमी । निर्भातादित्यर्थः । घटाद्दते भातात्पटाद्दते भानं घटस्य यथा सिध्यति, तथाऽर्थं विना भाताज्ज्ञानाद्विना भानमर्थस्य सिध्यतीति सहोपलम्भनियमो न नीला-दितद्धियां सिध्यतीत्यर्थः । ननु ज्ञानेनैवार्थप्रकाशस्य वाच्यत्वाज्ज्ञानस्य च स्वप्रकाशत्वाज्ज्ञानभानं विनाऽर्थभानं न युज्यत इति चेदेवमपि सहो-पलम्भनियमो न युज्यत एव ज्ञानविशेषेण ज्ञानसामान्येन वा, पूर्वत्र व्यभिचारात्, उत्तरत्र परमतेऽसिद्धेश्च । इदमर्थ एव 'सहोपलम्भ-नियम' इति १९७ तमः श्लोकः, स चात्रानुसन्धेय इति प्रागेवोक्तम् । एवं मितिमातृमेयभिदायाथात्म्यं न निह्नोतुं शक्यत इति व्यवस्थापि-तमत्रेति ध्येयम् ॥ २०७ ॥

(व्या०) ग्रन्थभागोऽग्रिमः क्वापि नेतः समुपलभ्यते ।
व्याख्यानं विहितं यावदुपलब्धस्य सारतः ॥

श्रीभाष्यकारवरवंशकृतावतारः श्रीभाष्यभावविशदीकरणप्रवीणः ।
प्रज्ञानिधिर्गुरुवरो मम भूतपुर्यां रामानुजार्य उरुकीर्तिरयं समिन्धे ॥
तत्पादपङ्कजनिषेवणलब्धबोधः कृष्णार्यसंज्ञगुरुतातपदाश्रितोऽहम् ।
अण्णङ्गरार्य इति च प्रथिताभिधानो व्याख्याभिमामकरवं प्रतिवादिभीकृत् ॥

गुरुपादप्रसादेन यामुनोक्त्यर्णवे तरिः ।
व्याख्येयं विहिता रम्या तुष्ट्यै गुरुपादयोः ॥
यद्यत्र तु गुणाः केचित्ते त्वाचार्यप्रसादजाः ।
मामकीनाः पुनर्दोषा इति ध्येयं विवेकिभिः ॥
वचःकुसुमहारोऽयं श्रीवक्षसि समर्प्यते ।
लक्ष्मीनारायणोऽनेन प्रीयतां पुरुषोत्तमः ॥
ऋतुव्योमखनेत्रा ( २००६ ) ङ्के वैक्रमेऽब्दे कृतिस्त्वियम् ।
आषाढपौर्णमास्यां संपूर्णा वृत्तालये पुरे ॥

इति श्रीनागपुरी (तिरुनाङ्गूर) दिव्यदेशाभिजनेन प्रतिवादिभयङ्कराचार्यान्वय-भूषणविद्वद्वर्य-श्रीकृष्णमाचार्याख्याचार्यवर्यपुत्ररत्नेन चतुस्तन्त्रीपारावारपारीणदिगन्तविश्रान्तकीर्ति-दयामूर्ति-श्रीमद्भाष्यकार-दिव्यवंशावतीर्ण-श्रीभूतपुरीनिवासरसिक-विद्वत्सार्वभौम-हारीत-श्रीमदासूरिरामानुजाचार्यदेशिकेन्द्रचरणकमलवरिवस्यासमधिगतपदवाक्यप्रमाणतन्त्रहृदयेन श्रीवैष्णवदासेन प्र. भ. अण्णङ्गराचार्येण न्यायव्याकरणशिरोमणिनोभयवेदान्तविदुषा प्रणीतं संवित्सिद्धेर्व्याख्यानं

सिद्धाञ्जनं संपूर्णं

विजयतांतमाम् ॥

# शुद्धिपत्रिका

| पृ. सं. | प. सं. | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ६ | ५ | तावस्त | तानस्त |
| २० | १९ | त्मंवादे | त्मवादे |
| २१ | ८ | वद्रव्य | वच्छरीर |
| ,, | २१ | प्रवल उपजीव्यत्वेन | उपजीव्यत्वेन प्रवल |
| २२ | ११ | गुरुत्वादेरेव | गुरुत्वादेरिव |
| ,, | १९ | तिरेकानु | तिरेक्यनु |
| ,, | २२ | वयववि | वयविवि |
| २४ | १२ | नन्वयव | नन्ववयव |
| २५ | ५ | फलगामि | फलभागि |
| ,, | २१ | क्रियाजन्म | क्रियाजन्य |
| २७ | १९ | इदन्त्वेनं | इदन्त्वेन |
| ,, | २३ | स्वात्मनोः | स्वात्मनो |
| ३३ | ९ | दाहरण | दाहरणं |
| ,, | १३ | सञ्ज्ञातत्व | सञ्ज्ञातपरार्थत्व |
| ३४ | ९ | भोक्त | भोक्तृ |
| ३७ | १ | वार्हस्पत्य | बार्हस्पत्यं |
| ५६ | २२ | व्युत्पत्तेः | व्युत्पत्तिः |
| ९१ | १३ | मात्नाय | मात्राय |
| ९२ | १७ | महं त्वं | महन्त्वं |
| ११६ | १९ | एव इतर | एव गृह्यमाण इतर |
| ११८ | १३ | ज्यालैक्य | ज्वालैक्य |
| ११९ | १ | भविंतु | भवितुं |
| १२७ | १२ | यिनाऽश्रय | यिनाऽऽश्रय |
| १३१ | १८ | भोक्तत्व | भोक्तृत्व |
| १३६ | ७ | तिरिक्त | तिरिक्तं |
| ,, | १९ | त्वेनैवेत्यर्थः | त्वेनैव ज्ञातृत्वोपपादनमित्यर्थः |
| १३८ | १८ | भोक्तत्वेन | भोक्तृत्वेन |
| १४० | १० | भोक्तरा | भोक्तुरा |
| १४१ | २१ | भौतिकऽत्मा | भौतिकात्मा |
| १४२ | १८ | हेतो सत्त्वं | हेतोस्सत्त्वं |
| १४६ | ११ | नं | न |
| १५१ | १४ | स्यैवाय | स्यैवायं |
| १५४ | १४ | सत्तयैव | सत्तयैवेति |
| १५६ | १६ | दुर्भणमिति | दुर्भणेति |
| १७० | १० | स्मरण | स्मरणं |
| १८६ | १४ | वागणा | वर्गिणा |
| १८९ | २० | रूपेव | रूपैव |
| १९५ | ८ | युक्त | युक्तं |
| १९७ | १२ | एकत्वेना | एकत्वत्वेना |
| ,, | १४ | सङ्ख्यक | सङ्ख्यैक |
| २०० | ७ | वालोकं | नालोकं |
| २०१ | १७ | तत्तादि | तत्तदि |
| २०६ | १ | क्र्यापात | क्यायात |
| २२० | ४ | तर्हि चत | तर्हि चैत |
| २४१ | ११ | राद्यद्यणुकं | राद्यणुकं |
| २४६ | ११ | ज्ञानादै | ज्ञानादौ |
| २४९ | १३ | कर्तृको | कर्तृको |

| पृ. सं. | प. सं. | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २५० | २० | धर्माभ्या | धर्माभ्यां |
| २५१ | ६ | प्रयोक्तः | प्रयोक्तुः |
| २५२ | १६ | ज्ञानादा | ज्ञानादौ |
| ,, | १८ | निर्वाह्येति | निर्वाह्य इति |
| २७१ | १९ | भेदे च | भेदश्च |
| ,, | ,, | गिकत्व-स्यान्वयः | गिकः |
| ,, | २० | भिन्नं नास्ति | भिन्नंद्वितीयं यस्य नास्ति |
| २७६ | ५ | पूरुष | पूरुष |

| पृ. सं. | प. सं. | अशुद्धम् | शुद्ध |
|---|---|---|---|
| २७७ | २ | रोधेनेषां | रोधें |
| २७९ | १५ | संभाव्य | संभा |
| २८१ | १२ | जना | जैन |
| २८२ | २० | निरूपाधि | निरु |
| २८५ | ८ | निश्चितः | निर्वि |
| २९० | २१ | एक | एकं |
| २९७ | २३ | त्यद्वतिनो | त्यद्वै |
| ३०० | १ | भिन्न | भि |
| ३०४ | १५ | इत्यस्या | ते |
| ३२८ | ५ | दसङ्ख्याम | दस |

अतिस्फुटोपलम्भास्तु काश्चनात्र न शोधिताः ।
अन्या अशुद्धयोऽप्येवं शोध्याः प्राज्ञैः कृपाकरैः ॥



